either printed or in a manuscript form Out of the several commentaries, the earliest one is by Vaidyanātha Payagunde, which is named 'Gadā' or 'Kāsikā' and which can be said to have given faithfully and correctly the interpretation of the several difficult lines of the text which are open to doubt regarding what the author of the text clearly meant Pāyagunde, the author of the Gadā has mentioned in his commentary the actual names of the authors and works that are referred to in the Paribhāśendusekhara in the words केचित्, कश्चित्, अन्ये, अपरे etc which ( names ) can be fully relied upon, as it is very likely that while receiving instructions orally from his preceptor Nageśa, the pupil Pāyagunḍe could have heard the names of the works and the authors referred to, and got some personal information also about them Pāyagunḍe has quoted by names सीरदेव, मैत्रेयरक्षित, पुरुषोत्तमदेव and others By the word भ्रान्त he possibly refers to नीलकण्ठदीक्षित in whose Paribhāṣāvṛtti, the lines attributed to भ्रान्त, the madman, are actually found It is possible that Payagunde does not mention नीलकण्ठदीक्षित by name, but refers to him by the word भ्रान्त as he did not think highly of the scholarship and study of Nīlakaṇṭha Dikṣita

*50 The place of the commentary Tattvadarśa among the several commentary works*

The numerous commentary works on the Paribhāsenduśekhara, numbering more than thirty, can be roughly brought under four heads ( a ) commentaries explaining clearly the meaning of the pithy stiff sentences of the text such as the *Tripathagā* of Rāghavendrācārya, *Taraṅginī* of Mādhavācārya, *Paribhāṣenduśekharaṭīka* of Kashinathshastri Ashtaputre, *Vākyārthacandrikā* of Harishastri Bhagavata, *Ambākartrī* of Bhāradvāja, *Paribhaṣendu candrika* of Vishvanatha Dandibhatta and others, (b) commentaries meant for solving the doubts of advanced scholars who have got already a good grounding in the subject, such as *Bhairavī* of Bhairavamishra, *Doṣoddharaṇa* of Manyudeva, *Bhāskarī* of Bhaskarashastri Abhyankar, *Paribhāṣenduśekharavyākhya* of Balashastri Ranade, *Paribhāṣenduś kharaṭīkā* of Pandit Shivakumar, *Bhūti* of Tatyashastri Patvardhan, and others, ( c ) commentaries supplying material for learned scholastic discussions on various topics dealt with in the Paribhāṣendusekhara such as *Viṣṇubhaṭṭī* of Vishnushastri Bhat,

*Daśakāradodbheda* of Gopālācārya Karhadkar, *Ciccandrikā* of Viṣṇuśāstri Bhat, *Vijayā* of Jayadevamishra, *Tattvaprakāśikā* of Ganapatishastri Mukate, *Śāstrārthakalā* of Venīmadhavashastri and others, and ( d ) commentaries which briefly spot out the important topics and the author's remarks on them and explain the gist of passages clarifying the views of the author such as *Gadā* or *Kāśikā* of Vaidyanath Payagunde, *Bhāvārthadīpikā* of Govindshastri Ashtaputre, *Nāgeśāśayanirṇaya* of Narayanshastrigal, *Tattvādarśa* of Vasudevashastri Abhyankar and others.

*51 The author of the commentary Tattvādarśa*

M. M. Vāsudevshastri Abhyankar ( 1863-1942 ), the author of the commentary Tattvādarsa, was a renowned teacher and an eminent Sanskrit Pandit in Maharashtra in the first half of the present century His grandfather, Bhaskarshastri Abhyankar ( 1785-1850 ) was a distinguished Pandit at the Satara Darbar in the first half of the last century who conducted something like a Sanskrit Pathashala at his own place and prepared a band of Sanskrit Pandits who, after the completion of their studies at Satara, settled at different places, like Poona, Nasik, Pandharpur, Wai, Bhor and others in Maharashtra, and Varanasi, Indore, Dhar, Gwalior and others outside Maharashtra and conducted Sanskrit Pathashalas there. Ramashastri Godbole, one of the eminent pupils of Bhaskarshastri, remained at Satara conducting the school founded by Bhaskarshastri and it was under him that Vasudevshastri studied Vyākaraṇa and other shastras at his own place While studying the higher texts in Sanskrit Grammar under his Guru, Ramashastri, Vasudevshastri taught some choice texts to the junior students of Ramashastri with a view to making his own study of the stiff texts a thorough one. The present commentary Tattvādarśa was written by the learned shastri at Satara in 1886 which formed the first of his several literary works. This work was undertaken by him out of a genuine love for the subject and eagerness to communicate to others the gist of the subject which he had grasped from his preceptor and mastered by his own study It was not a ripe product of his genius and naturally the style of writing is not so much masterly and dignified as that which is noticed in his later works such as the learned commentaries on the Sarvadarśana-saṁgraha, Siddhāntabindu, Śrībhāṣya, Apodevīnyāyaprakāśa and others.

is quite well known. His introduction in Sanskrit to the Sarvadarśanasaṁgraha is an independent short treatise on Sanskrit Philosophy. His translation of the Śāṅkarabrahmasūtrabhāṣya into Marathi is looked upon as the authoritative one among the various translations of that Bhāṣya into English, Hindi, and other languages. The translation of the Vyākaraṇa Mahābhāṣya into Marathi with critical and explanatory notes is a monumental work. The work is a stupendous one, which, with the original Sanskrit text, covers more than 3000 pages. This translation into Marathi is the first translation of the entire work in any language.

November 1, 1961 K. V. Abhyankar

# अनुक्रमणिका

| पृष्ठसंख्या | परिभाषाः | परिभाषा क्रमाङ्कः | पुरुषोत्तम-परि.पाठः | व्याडिपरि-भाषासूचनम् | पुरुषोत्तम-परि.वृत्तिः | सीरदेव-परि.वृत्तिः | नीलकण्ठ-परि.वृत्तिः |
|---|---|---|---|---|---|---|---|
| ३६ | वर्णाश्रये नास्ति० | २१ | २२ | | ५२ | | |
| ३६ | उणादयोऽव्युत्पन्नानि० | २२ | २३ | | ७० | १५ | २० |
| ३६–३९ | प्रत्ययग्रहणे यस्मात्० | २३ | २४ | | ४४ | २५ | ३१ |
| ३९–४२ | प्रत्ययग्रहणे चापञ्चम्याः | २४ | २५ | | | | ३२ |
| ४३ | उत्तरपदाधिकारे० | २५ | २६ | | | | |
| ४४–४६ | स्त्रीप्रत्यये चानु० | २६ | २७ | | ४५ | २६ | ३३ |
| ४७ | संज्ञाविधौ प्रत्यय० | २७ | २८ | ७१ | ८१ | २७ | ३४ |
| ४७–४९ | कृद्ग्रहणे गतिकारक० | २८ | २९ | ६३ | ४६ | ६२ | ३५ |
| ५० | पदाङ्गाधिकारे तस्य च० | २९ | ३० | | | | ३६ |
| ५० | पदाङ्गाधिकारे...तदुत्तरपदस्य | | | | | ८५ | १०८ |
| ५०–५५ | व्यपदेशिवदेकस्मिन् | ३० | ३१ | | | | |
| ५५–५६ | ग्रहणवता प्रातिपदिकेन० | ३१ | ३२ | ६९ | ७८ | ५५ | ७१ |
| ५६–५७ | व्यपदेशिवद्भावोऽप्राति० | ३२ | ३३ | ६९ | ७९ | ५६ | ७२ |
| ५७–५९ | यस्मिन्विधिस्तदादौ० | ३३ | ३४ | | ७५ | १२ | १७ |
| ५९–६० | सर्वो द्वन्द्वो विभाषैक० | ३४ | ३६ | ७३ | ५० | १६ | २२ |
| ६० | सर्वे विधयश्छन्दसि० | ३५ | ३५ | | ५६ | २४ | ३० |
| ६० | प्रकृतिवदनुकरणं० | ३६ | ३७ | ८६ | ११४ | १८ | २३ |
| ६०–६३ | एकदेशविकृत० | ३७ | ३८ | | १४ | ४० | १२५ |
| ६४ | पूर्वपरनित्यान्तरङ्ग० | ३८ | ३९ | | | | |
| ६४ | पुनःप्रसङ्गविज्ञानात्० | ३९ | ४१ | ८२ | ४० | २१ | २६ |
| ६५–६९ | सकृद्गतौ विप्रतिषेधे० | ४० | ४० | ३५,८१ | ३९ | २० | २५ |
| ६९–७३ | विकरणेभ्यो नियमः० | ४१ | ४२ | | ५३ | ११ | २४ |
| ७३ | परान्नित्यं बलवत् | ४२ | | | | | |
| ७३ | शब्दान्तरस्य प्राप्नुवन्० | ४३ | ४४ | ७७ | | | |
| ७४ | शब्दान्तरात् प्राप्नुवतः० | ४४ | | | | | |

| सूत्रसंख्या | परिभाषाः | परिभाषा क्रमाङ्कः | पुरुषोत्तम-परि.पाठः | व्याडिपरि-भाषापाठवचनम् | पुरुषोत्तम परि.वृत्तिः | सीरदेव-परि.वृत्तिः | नीलकण्ठ-परि.वृत्तिः |
|---|---|---|---|---|---|---|---|
| १७२ | लुग्विकरणालुग्विकरण॰ | ९० | ७३ | ४३ | ६७ | ८३ | ८३ |
| १७३ | प्रकृतिग्रहणे ण्यधिक॰ | ९१ | | ७० | ७३ | ९० | ८५ |
| १७३–१७४ | अङ्गवृत्ते पुनर्वृत्तावविधिः | ९२ | ७४ | ३४ | ७१ | ९१ | ८६ |
| १७४ | संज्ञापूर्वकविधेरनित्यत्वम् | ९३.१ | ७५ | ५३ | ८३ | ७१ | ७८ |
| १७४ | आगमशास्त्रमनित्यम् | ९३.२ | ७६ | ७६ | ८४ | ९८ | ८७ |
| १७४ | गणकार्यमनित्यम् | ९३.३ | ७७ | | १०९ | ११८ | ९२ |
| १७४ | अनुदात्तेत्त्व...मनित्यम् | ९३.४ | ७८ | | | | |
| १७४–१७५ | नञ्घटितमनित्यम् | ९३.५ | | | | | |
| १७५ | आतिदेशिकमनित्यम् | ९३.६ | | | | | |
| १७५ | सर्वविधिभ्यो लोपविधिः॰ | ९३.७ | ७९ | ५७ | ९१ | १११ | ११७ |
| | सर्वविधिभ्य इड्विधि॰ | ९३.८ | ७९ | ५६ | ९० | ८२ | ११६ |
| १७५–१७६ | प्रकृतिग्रहणे यङ्लुगन्त॰ | ९३.९ | ८० | ६० | ७२ | ९८ | ७६ |
| १७७–१७८ | विधौ परिभाषोपतिष्ठते॰ | ९३.१० | | | | ८९ | ८४ |
| १७८ | उपपदविभक्तेः कारक॰ | ९४ | ८१ | | ४८ | १०३ | ९० |
| १७९–१८१ | अनन्त्यविकारेन्त्य॰ | ९५ | ८२ | ५२ | १०७ | ११२ | ९४ |
| १८१ | नानर्थकेलोन्त्य॰ | ९६ | ८३ | | ९३ | ११३ | ९५ |
| १८१ | प्रधानाप्रधानयोः॰ | ९७ | | ६७ | | १०२ | ८९ |
| १८२ | अवयवप्रसिद्धेः॰ | ९८ | | | १०१ | १०४ | ९१ |
| १८२ | व्यवस्थितविभाषयापि॰ | ९९ | | ३२ | ६२ | ११४ | ९३ |
| १८२–१८३ | विधिनियमसंभवे॰ | १०० | ८४ | | | १०९ | ९६ |
| १८३ | सामान्यातिदेशे॰ | १०१ | ८५ | ९१ | ६४ | १०६ | ९७ |
| १८३ | प्रत्ययाप्रत्ययोः॰ | १०२ | | | ९२ | ११४ | ९८ |
| १८३–१८४ | सहचरितासह॰ | १०३ | | | ४९ | ११५ | ९९ |
| १८४–१८५ | श्रुतानुमितयोः॰ | १०४ | | | १८२ | १०७ | १०० |
| १८५–१८७ | लक्षणप्रतिपदोक्तयोः॰ | १०५ | ८६ | ३ | ३ | ३९ | १०२ |
| १८७ | गामादाग्रहणेष्वविशेषः | १०६ | ८७ | | ६९ | १०५ | १०३ |

# परिभाषेन्दुशेखरः

महामहोपाध्यायअभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितया
तत्त्वादर्शाभिधया व्याख्यया समेतः

॥ श्रीगणेशाय नमः ॥

नत्वा साम्बशिवं[1] ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥

प्राचीनवैयाकरणतन्त्रे वाचनिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्तिकयोर्निबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते ॥

ननु लण्अइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु संदेहादनिर्णयोऽत आह ।

**व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणम् ॥ १ ॥**

विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात्प्रतिपत्तिर्निश्चयो हि[2] यतः संदेहाच्छास्त्रम[3]लक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न । शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः ॥ असंदिग्धानुष्ठानसिद्ध्यर्थेऽत्र शास्त्रे संदिग्धोच्चारणरूपाचार्यव्यवहारेण संदेहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत् ॥ तेनाणुदित्सवर्णस्य [ १. १. ६९ ] इत्येतत्परिहाय पूर्वेणाण्ग्रहणं परेणेण्ग्रहणमिति लण्सूत्रे भाष्ये स्पष्टम् ॥ १ ॥

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह ।

**यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥**

**कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥**

---

॥ अथ तत्त्वादर्शनाम्नी परिभाषेन्दुशेखरव्याख्या प्रारभ्यते ॥

॥ श्रीः ॥ यथोद्देशकार्यकालयोर्भेदो लिख्यते । तत्र संज्ञाविषये यथोद्देशे

---

१ B. C. D. K. T. साम्बं शिवं.

२ C. K. om. हि.

३ C. G. H. K. T. अलक्षणमननुष्ठापकं न । शास्त्रस्य०.

उद्देशमनतिक्रम्य[1] इति यथोद्देशम्। उद्देश उपदेशदेशः। अधिकरण-साधनश्चायम्। यत्र देश उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहार। देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते। तत्तद्वाक्यार्थबोधे जाते भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेण संतुष्यद्भिरश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्ष इतीदूत्सूत्रे [ १. १. ११ ] कैयटः। केचित्तु परिभाषाविषये तस्मिन् [ १. १. ६६ ] इत्यादिवाक्यार्थबोधे सप्तमीनिर्देशादि क्वेति पर्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्कारायगुणभेद परिकल्प्यैकवाक्यतयैव नियमः[2]। कार्यकालपक्षे तु त्रिपाद्यामप्युपस्थिति-रिति विशेषः॥ एतदेवाभिप्रेत्याधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्व-शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति[3] षष्ठी

---

संज्ञादेशे वाक्यार्थे जाते तत्स्मरणेनैव विधिसूत्रे व्यवस्था क्रियते। कार्यकालपक्षे मूलस्थाने वाक्यार्थमकृत्वा विधिप्रदेशेषु संज्ञासूत्राणां एकवाक्यतां कृत्वैव वाक्यार्थः। तत्र यथोद्देशे संज्ञायाः स्मरणेपि यथा लोके इन्द्र इत्युच्यमाने शक्तिग्रहेपि स्वर्गे इन्द्रसंज्ञका व्यक्तिर्न ज्ञायते किंतु अन्यपुरुषेण अयमिन्द्र इति दर्शिते सति इन्द्रशब्दार्थो ज्ञायते तेनैव प्रकारेण संज्ञायाः स्मरणेपि दर्शकस्थाने सूत्राकाङ्क्षा विद्यत एवेति। कार्यकालपक्षे मूलस्थाने वाक्यार्थमकृत्वैव। तद्वि-षये प्रमाणं तु लौकिकन्याय। यथा हि लोके कस्यचित्पुरुषस्य अत्यन्ता-काङ्क्षायां सत्यां भोजनादिकं कृत्वा आगच्छामि इत्युक्ते सति तत्रैव भोजनं कार्यं किंतु सत्वर गन्तव्यम्। कुत। अत्यन्ताकाङ्क्षत्वात्। तयैव रीत्या विधि-सूत्रस्य संज्ञासूत्रविषये अत्यन्ताकाङ्क्षा। कुतः। तेन विना वाक्यार्थस्यैवाभावात्। एवं च तत्संज्ञासूत्र तत्र नीत्वा तेनैव वाक्यार्थं कर्तव्य.। परिभाषाविषये यथो-द्देशपक्षे प्राचीनपक्षे सत्स्मरणेनैव कार्याणि कर्तव्यानि। नव्यास्तु नेत्र मन्यन्ते। कुतः। तस्मिन्नित्यादिपरिभाषाया वाक्यार्थे कर्तव्ये सप्तमीनिर्देशादि क इत्या-शङ्कायां यावन्ति सप्तम्यन्तानि नाम अचीत्यादिसप्तम्यन्तपदघटितानि सूत्राणि तानि सर्वाणि उपस्थितानि। तत्तत्संस्काराय गुणभेदं नाम परिभाषासूत्राणामावृत्तीः कृत्वा तेषामेकवाक्यता। अयं च विशेषः। कार्यकालपक्षे तु परिभाषासूत्राणा पठितस्थले वाक्यार्थं कृत्वा प्रदेशे एकवाक्यता। कुत.। अत्यन्ताकाङ्क्षत्वा-भावात्। अयं च संज्ञापरिभाषयोर्विशेष ॥

१ B. C. ь अनतिक्रम्य यथ द्देशम्
२ C. M. सकलतद्विध्युपस्थितौ सकलतत्संस्काराय.
३ B. वेश्मान्यभिज्वलयतीति.

स्थाने० [ १. १. ४९ ] इति सूत्रे भाष्य उक्तम् ॥ अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते । कश्चित्परिभाषारूप इति कैयटः ॥ दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम् । एतच्च पक्षद्वयसाधारणं भाष्यम् । पक्षद्वयेऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः ॥ तत्रैतावान्विशेषः । यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम् । तदुक्तं क्ङिति च [ १. १. ५ ] इति सूत्रे कैयटे । यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेद प्रयुञ्जत इति ॥ कार्यकालपक्षे तु तत्तद्विधिप्रदेशे परिभाषाबुद्धयैकवाक्यतेति । अत्रैकदेशस्य इत्यनेन तत्रतत्र तत्तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेऽपि न तत्तद्देशीयत्वव्यवहारः किंत्वभिजनदेशीयत्वव्यवहार एव तद्वत् । निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः क्ङिति चेत्यत्र भाष्ये । तत्रैकवाक्यता पर्युदासन्यायेन । प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः ॥ संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः किंतु प्रदेशवाक्येन सहैव । अत एवाणोऽप्रगृह्यस्य [८. ४. ५७] इत्येतदेकवाक्यतापन्नादसो मात् [ १. १. १२ ] इत्येतत्प्रति न मुत्वाद्य-

---

अत एवाणोऽप्रगृह्यस्येति । अत एव नाम संज्ञासूत्रस्य वाक्यार्थमकृत्वैव तदेकवाक्यतास्वीकारे अदसो मात् (१।१।१२) इत्येतत्प्रति न मुत्वाद्यसिद्धम् । कुतः । कार्यकालपक्षे अदसो मादिति सूत्रं अणोऽप्रगृह्यस्यानुनासिकः (८।४।५७) इति सूत्रेण एकवाक्यतापन्नम् । अतः अदसो मादितिसूत्रदृष्ट्या न मुत्वादिकमसिद्धम् । ननु व्यवहर्तृन्यायेन संज्ञासूत्रस्य यत्र पाठः स एव देशः । एवं च कथं मुत्वादिकं सिद्धमिति चेत्तर्हि असिद्धत्वस्य कार्यार्थतया यदा कार्यज्ञानं स्यात्तदा तत्कार्यदृष्ट्या शास्त्रस्य असिद्धत्वं स्यात् । कार्यज्ञानं च कदा भविष्यति प्रदेशदेश एव । एवं च मुत्वदृष्ट्या तद्देशस्यासिद्धत्वेन नाम

---

१ B. G. M. S. प्रकाश एव.
२ B. M. °मिति तात्पर्यम्.
३ B. D. G. H. K. M. कैयटेन.
४ B. H. K. S. कार्यकाले तु.
५ B. °देशस्थं.
६ B. D. तद्देशीयव्यवहारः.
७ C. D. वाक्यार्थः किं तु प्रदेशवाक्येन सहैव.

सिद्धमसिद्धत्वस्य कार्यार्थतया कार्यज्ञानोत्तरमेव प्रवृत्ति कार्यज्ञान च प्रदेशदेश एवेति तद्देशस्थत्वस्यासिद्धत्वात्पूर्वग्रहणेनाग्रहणात् । एव तद्बोधोत्तरमेव विरोध-प्रतिसधान चेति तन्त्रत्यपरत्वमेन विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अत एव कार्य-

---

विधिदेशस्यासिद्धत्वेन पूर्वत्रासिद्धमिति पूर्वग्रहणेन न तद् गृह्यते । एवं च तद्बोधोत्तरमेव नाम प्रदेशवाक्यार्थबोधोत्तरमेव विरोधोत्पत्ति । एवं च तन्त्रत्य-परत्वेनैव विप्रतिषेधसूत्रेण पर कार्यं क्रियत इति । अत्र किंचिद्विचार्यते-- *विधिसूत्र अत्यन्ताकाङ्क्षया सज्ञासूत्रमाकर्षति । आकृष्टे च तस्मिन् त्रिपादीस्थ* सूत्र कथ तद्दृग्गोचर स्यात् । यथा पिशाचेन मनुष्ये आकृष्टे सति तस्य पिशाचो दृग्गोचरो भवति किम् । सर्वथा न भवति । एव च तदाकृष्टेपि *कदाचिदपि दृग्विषयाभावेन कथमिवैकवाक्यता । अस्तु । परतु मनुष्यस्य* पिशाच कुतो दृष्टो भवति । तर्हि अय मनुष्योस्ति । स च पिशा-चस्तेन पिशाचस्वरूपेण न दृश्यते । यदि च तेन पिशाचेन मनुष्यस्य पिशाचत्व दीयते तर्हि पिशाचो दृष्टो भवेत् । तथैव रीत्या तेन विधिसूत्रेण ( पिशाचस्यानि-कविधिसूत्रेण ) स्वरूप दीयते चेत्तर्हि तदपि दृष्ट स्यात् । दृश्यते च । किंच । अपरमिव वक्तुमारभते । किं तत् । अनया रीत्या मुत्व नासिद्ध प्रगृह्यसज्ञादृष्टया । एव च सामर्थ्यनाम प्रगृह्यसज्ञाविधानसामर्थ्यात् प्रगृह्यसज्ञादृष्टया मुत्व नासि-द्धमिति सामर्थ्यकल्पना न कार्येति । परतु सर्वथा सामर्थ्यात् कल्पना न कार्येति वक्तुं न शक्यते । यदा अणोऽप्रगृह्यस्येति सूत्रेण सहैकवाक्यतापक्ष स्यात्तदा न कर्तव्या । यदि च प्लुतप्रगृह्येति सूत्रेण सहैकवाक्यतापक्ष स्यात्तर्हि असिद्धत्वा-*भावकल्पन सामर्थ्यात् स्वीकार्यमेव । यद्येवं स्यात्तर्हि-तेन सहैकवाक्यता नैव* स्वीकार्येति चेत्तर्हि-अणोऽप्रगृह्यस्येति सूत्रे अप्रगृह्यस्येति सामान्य न ब्रूयात् । कुतः । सामान्यसूत्र कुर्वेकमेवोदाहरणम् । तथा नैकमुदाहरण योगारम्भ प्रयो-जयतीति भाष्यात् । किं तु अदसो न इत्येव ब्रूयात् । एव च सामर्थ्यात् तत्रापि एकवाक्यता कर्तव्येव । तथा च सामर्थ्यान्मुत्व नासिद्धमिति कल्पनावश्यं स्वीकार्या इत्यलम् ॥

अत एव कार्यकालपक्षेति । अत एव नाम तन्त्रत्यपरत्वेनैव व्यवस्थायाः कर्तव्यत्वेन कार्यकालपक्षे अयादिभ्य परैव प्रगृह्यसज्ञा इति अदसो मात् इति सूत्रस्थ भाष्य सगच्छते । तथा हि । अमी ईशा इत्यत्र आन्वे इयादेशे गुणे च अदे इ ने जातम । तस्मा मीत्वे कृते अमी इति रूपम् । परतु अत्र किंचिद्विचार्यते ।

१ B ९ तद्बाधस्यासिद्धत्वेन पूर्व०.
२ B विप्रतिषधसूत्रौ

कालपक्षे ड्यादिभ्यः परैव प्रगृह्यसंज्ञेत्यदसो मात् [ १. १. १२ ] इति सूत्रे भाष्य उक्तम्[1] ॥ आकडाराधिकारस्थभे[2]पदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्तत्परत्वेनैव बाध्यबाधकभावः । पदा[3]दिसंज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्यवहारः । अत एव पूर्वत्रासिद्धम् [ ८. २. १ ] इति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्तिमाशङ्क्य कार्यकालप[4]क्षाश्रयेण समाहितमित्या[5]हुः ॥ यथोद्देशपक्षः प्रगृह्यसंज्ञाप्रकरणे भाष्ये ॥ का[6]र्यकालमित्यस्य च कार्येण

---

अत्र मुत्वस्यासिद्धत्वेन अयादेशः संप्राप्तः । परंतु प्रगृह्यसंज्ञायाः परत्वेन सैव भवति । परत्वं च कार्यकालपक्षे प्लुतप्रगृह्या अचि इति सूत्रेण एकवाक्यतापन्नत्वेन । यदि च तत्रत्यपरत्वं न गृह्यते तर्हि भाष्योक्तं परत्वं न युज्येत । परंतु नैतद्युज्यते । कुतः । प्रगृह्यसंज्ञा नाम प्रगृह्यसंज्ञाप्रयुक्तं कार्यं स्वीक्रियते तर्हि भाष्यं सुवचमेव । तर्हि कथं तत्रत्यपरत्वमेव ग्राह्यं इति तेन भाष्येण गृह्यते । परंतु तदपि न युक्तम् । कुत. । लक्षणाया अनौचित्यात् । किं च विप्रतिषेधसूत्रे परं नाम परं कार्यमिति लक्षणा सर्वसाधारणी । परंतु परं नाम संज्ञाप्रयुक्तं कार्यमिति लक्षणा । वस्तुतस्तस्य परत्वेन भूतपूर्वगत्या परत्वाभावः । भूतपूर्वगतिरित्यपरो दोषः । अतः यथोक्तमेव न्याय्यम् । किंच तत्रत्यपरत्वस्यैव ग्राह्यत्वेन तुल्यास्येति सूत्रे 'प्रयत्नग्रहणं किम्, वाक् श्चोतति' इति शेखरोक्तिः संगच्छते । तथाहि-यदि च तुल्यास्य इति सूत्रे प्रयत्नग्रहणं न स्यात् तर्हि वाक् श्चोतति इत्यत्र शकारलोपः स्यात् । कृते च प्रयत्नग्रहणे स्थाने तुल्येपि प्रयत्नभेदात् सवर्णसंज्ञाऽभावेन शकारलोपो न भवति । यदि च तत्रत्यपरत्वं न गृह्यते तर्हि वाक् श्चोतति इत्यत्र शकारलोपाप्राप्तिरेव । कथमिति चेदुच्यते । यदि मूलप्रदेशवाक्यदेशो गृह्यते तर्हि श्चुत्वस्यासिद्धत्वेन शकाराभावात् अकृते प्रयत्नग्रहणे सवर्णसंज्ञा नैव स्यात् । तथा च लोपाप्राप्तिरेव । तथा च 'प्रयत्नग्रहणं किम्' इति शेखरोक्तिर्न संगच्छेत । तत्रत्ये परत्वे गृहीते तु युज्यते । श्चुत्वापेक्षया 'झरो झरि सवर्णे' इत्येतदेकवाक्यतापन्नस्य 'तुल्यास्य॰' इति सूत्रस्य दृष्ट्या श्चुत्वस्य सिद्धत्वेन लोपप्राप्तिः । तथा च कर्तव्यं प्रयत्नग्रहणमिति युज्यते ॥

---

१ B. इति भाष्य.

२ B. C. G. भपदसंज्ञाविषये. M. भपदसंज्ञाद्यभिविषये तु.

३ D. पदादिपदानां.

४ B. S. पक्षाश्रयणेन. H पक्षेण.

५ B. D. °मित्याहुः । स्पष्टं चेदं क्ङिति चेति सूत्रे कैयटे । यथोद्दे॰.

६ B. कार्यकाल इत्यस्य.

काल्यते स्वसंनिधिं प्राप्यत इत्यर्थः । कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिह्नित-परिभाषाणामाक्षेप इति यावत्[१] ॥ अत एव पूर्वत्रासिद्धम् [ ८. २. १ ] इति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्ति-माशङ्क्य यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धमित्युक्त्वा तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम् ॥ न च कार्यकालपक्षे ङमो ह्रस्वात् [ ८. ३. ३२ ] इत्यादौ तस्मादित्युत्तरस्य [ १. १. ६७ ] तस्मिन्निति निर्दिष्टे पूर्वस्य [ १. १. ६६ ] इति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति तस्मिन्निति सूत्रस्थभाष्यासंगतिः । उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासंगत्यापत्तेः । स्पष्ट चेदमिको गुण [ १. १. ३ ] इत्यत्र कैयट इति वाच्यम् ॥ विप्रतिषेधसूत्रे ऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । न हि कार्यकालपक्ष इत्येतावता तदपैति । पक्षद्वये ऽपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात् । न हि तत्पक्षे ऽप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति । नाप्यस्मदादिबुद्धिजन-नेन स्वदेशत्यागो भवति । अत एव भाष्य एकदेशस्थस्यैव सर्वशास्त्राभिज्वलकत्वमुक्तम् । अत एव तस्मिन्निति सूत्रे कैयटः । सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति । इको गुणेति सूत्रस्थकैयटस्तु चिन्त्य एव ॥ अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात् । किंच क्ङिति चेति सूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे संनिधानेन तेषां परत्वं व्याहन्येत । एवं च वृक्षेभ्य इत्यत्र सुपि च [ ७. ३. १०२ ] इत्यतः परत्वाद्बहुवचने झल्येत् [ ७. ३. १०३ ] इत्येत्वमित्याद्युच्छिद्येतेत्यलम् ॥ ३ ॥

इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसंदेहे आह

अनेकान्ता अनुबन्धा इति ॥ ४ ॥

---

अनेकान्ता अनुबन्धा इति । अत्रायं विचारः । सदसा नेव युज्यते । कुतः । कर्तरि शबित्यादौ समुदायस्य शकारपकारौ अवयवौ न भवतः इति को वदेत् ।

१ B. G. H. S. चिह्नितसंज्ञापरिभाषा॰.
२ C. G. °स्थितमिदं द्रष्टव्य॰.
३ C. B. H. °सपते.:
४ B. परत्वाश्रयणे.
५ B. D. G. H. M. S. जननेनाविशेषात् ।
६ B. सर्वशास्त्राभिज्वलकत्व॰.
७ B. सन्देहेन आह॰.

अनेकान्ता अनवयवा इत्यर्थः । यो ह्यवयवः स कदाचित्तत्रोपलभ्यत एव । अयं तु न तथा तदर्थभूते विधेये कदाप्यदर्शनात् ॥ शित्किदित्यादौ समीपेऽवयवत्वारोपेण समासो बोध्यः । वुञ्छण्कठ [ ४. २. ८० ] इत्यादौ णित्त्वप्रयुक्तं कार्यं पूर्वस्यैवेत्यादि तु व्याख्यानतो निर्णेयम् । हलन्त्यम् [ १. ३. ३ ] इत्यत्रान्त्यशब्दः परसमीपबोधकः ॥ [1]वस्तुतस्तु

---

किंच भवतीत्यादौ क्रियमाणो योऽकारस्तस्य वर्णान्तरमवयवः इति कथं वक्तव्यम् । एवं च संदेहो नैव स्यात् । तथा च किमर्थमियं परिभाषेति चेन्नैवम् । तथापि शब्दवाच्यपदविषये वाच्यवाचकयोरभेदो दृश्यते इति साधारणो नियमः । यथा घटं शृणु इत्यादौ । किंच अन्यस्थलेऽपि अभेदो दृश्यते । लोके रूप्यकद्वये सति नाम वस्तुतः द्वयोः भेदे अयमेव स रूप्यकः इत्यभेदो दृश्यते । अस्तु । एवं च अभेदपक्षे स्वीकृते सति भवतीत्यादौ क्रियमाणः किंच कर्तरि शबित्यादौ उच्चार्यमाण एक एव न्याय्यः । तथा च सूत्रोच्चारितस्य शकारपकारावयवौ दृश्येते भवतीत्यादौ न दृश्येते । तथा च संदेहः । किमेतावयवौ वानवयवौ वा । अभेदपक्षेण उत्तरं दातुं शक्यते -- तथाहि कर्तरि शप् ( ३।१।६८ ) इत्यादौ सूत्रेण विहितः किं च भवतीत्यादौ क्रियमाणः एक एवेति पक्षः । तद्विषये लौकिकव्यवहारस्तु यथा लोके घटमानयेत्युच्यमाने घटपदस्य किं च कम्बुग्रीवादिमत्पदार्थस्य च भेदो दृश्यते । किं च कर्तरि शबित्यादौ प्रत्ययाधिकारात् प्रत्यय इति समुपस्थितं भवति तत्र प्रत्यय इत्यस्य संबन्धः शबित्यनेन कर्तव्यः, अथवा भवतीत्यादौ क्रियमाणाकारेण कर्तव्यः । तथा च संदेहः । तथा चेयं परिभाषा । तद्विषये च भेदपक्षः । एवं च भेदपक्षेणोत्तरमिदम् । भेदपक्षेण बोधितं यतो भेदाभेदौ प्रसिद्धौ इति । तद्विषये प्रमाणं तु अनुमानम् । अनुबन्धान् पक्षीकृत्य अनवयवत्वं साध्यते समवायसंबन्धे अवयवीभूते अदर्शनात् । तथा च शेखरे लिखिता व्यतिरेकव्याप्तिरेव । परंतु अन्वयव्याप्तिरपि वक्तुं शक्यते । तथा हि -- यत्र यत्र हि समवायसंबन्धेन अवयवीभूते अदर्शनं तत्र तत्र अनवयवत्वं यथा वृक्षे घटः इत्यन्वयव्याप्तिः । व्यतिरेकव्याप्तिस्तु ईदृशी -- यत्र यत्रानवयवत्वाभावः तत्र तत्र समवायसंबन्धेन अवयवीभूते अदर्शनाभावः यथा वृक्षे शाखा इति व्यतिरेकव्याप्तिः । परंतु अत्र कश्चिद्विचारः कर्तव्यः । तथाहि । भेदपक्षे उत्तरमिदम् । तथा च भवतीत्यादौ क्रियमाणोऽन्यः किं च सूत्रोच्चारितोऽन्यः । तथा च सूत्रोच्चारितस्य यौ अवयवौ तौ अन्यस्य लक्ष्यस्थस्य कथं स्याताम् । नैवाभूताम् । तथा च किमर्थमनुमानम् । तर्हि शब्दवाच्यशब्दस्य अभेदो गृह्यत इति निरुक्तन्यायेन संतोष्टव्यम् ॥

1 A. D. वस्तुन एकान्ता इत्येव न्याय्यम् ।

## एकान्ताः ॥ ५ ॥

इत्येव न्याय्यम् । शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च । अनवयवो हि काकादिरेकजातीयसंबन्धेन गृहवृक्षादिपूपलभ्यते नैवमयम् ॥ एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः । अन्त्यशब्दे लक्षणा च न । किंचानवयवत्वे णशकप्रत्ययादौ कादेरित्वानापत्तिः प्रत्ययादित्वाभावात् । दध्नचश्चकारस्य वैयर्थ्यापत्तेश्च । इदं च तस्य लोपः [ १. ३. ९ ] इत्यत्र भाष्ये स्पष्टम् । तत्र ह्युक्तमेकान्ता अनुबन्धा इत्येव न्याय्यमिति दिक् ॥ ५ ॥

नन्वेकान्तत्वे ऽनेकाल्त्वादेवौशादीनां सर्वादेशत्वसिद्धयानेकाल्सूत्रे [ १. १. ५५ ] शिद्ग्रहणं व्यर्थमत आह ।

## नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

शिद्ग्रहणमेवैतज्ज्ञापकम् । तेनार्वणस्तृ [ ६. ४. १२७ ] इत्यादेर्न सर्वा-

---

किं चेति । एकान्ता इत्यत्र यदि अनुबन्धा अनवयवा गृह्यन्ते तर्हि णशकप्रत्ययादौ कादेरित्वानापत्तिः । अत्र णशक इति परिपाटीमुज्झित्वा कादेरिति किमर्थमुच्यते तर्हि अस्ति कश्चिद् ग्रन्थकर्तुर्मनसि हेतुः । स च यथा । णशप्रत्ययादावित्वानापत्तिदोषो न प्राप्नोति । कुतः । ज्ञापकान्तरेणैवं वक्तुं शक्यते । तथाहि । ददातिदधात्योर्विभाषेति सूत्रेण विभाषेत्युच्यते । तद्धि किमर्थमुच्यते । यदि वैकल्पिकशप्रत्ययसिद्ध्यर्थं तन्न वक्तव्यं भवति । कुतः । अनवयवत्वे गृहीते सति प्रत्ययत्वाभावेन इत्संज्ञालोपौ न भवतः । एवं चासरूपत्वेन 'वाऽसरूपोऽस्त्रियाम्' (३।१।९४) इति सूत्रेणैव विकल्पसिद्धौ सत्यां पुनर्विभाषाग्रहणं न कर्तव्यम् । व्यर्थं सत् ज्ञापयति णशपोः प्रत्यययोरनवयवत्वेऽपि इत्संज्ञा भवतीति । यदि चेदानीं विभाषाग्रहणं न क्रियते तर्हि इत्संज्ञालोपाभ्यामपहारे स्वरसत्वेन नित्यं बाधः स्यात् । स मा भूद् इत्येतदर्थं विभाषाग्रहणमावश्यकम् । अन्यत्र फलं रूपद्वयं भवति ॥

शिद्ग्रहणमेवैतज्ज्ञापकमिति । अनेकाल्शित्सर्वस्येति सूत्रे शिद्ग्रहणस्य वैयर्थ्यमाप्नोति । कथमिति चेत्प्रतिपादयामि । अनुबन्धस्यानवयवत्वेन अप्राप्त

१ C. D. शास्त्रे तत्रतत्रोप॰.
२ C. D. एवं बहुव्रीहिरपि न्यायत उपपन्नः ।
३ B. K. णादेरित्वानापत्ति. । S. णशकप्रत्ययादेरित्वानापत्ति. ।
४ B. शिद्ग्रहणमेव ज्ञापकम्.

देशत्वम् । डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्व्या-त्सिद्धम् ॥ ६ ॥

---

औशित्यादौ अनेकाल्त्वोटचा सिद्धत्वात् । तथा च व्यर्थं शिद्ग्रहणं ज्ञापयति—नानुबन्धकृतमनेकाल्त्वम् । यदि चेदानीं शिद्ग्रहणं न कर्तव्यं तर्हि सर्वादेशो न स्यात् । तदर्थं शिद्ग्रहणं कर्तव्यमिति स्वस्मिंश्चारितार्थ्यम् । परतु नैतद्युज्यते । कुत. । यदि सूत्रे शिद्ग्रहणं न क्रियते तर्हि औशित्यादौ शिद्ग्रहणं व्यर्थं स्यात् । सामर्थ्यात्सर्वादेशो भवति । तथा च स्वस्मिंश्चारितार्थ्यं नास्तीत्युच्यते । परतु नैतद्युक्तं भवति । कुत । कल्पनाद्वयं संभवति । तच्च यथा । शित्करणसामर्थ्या-त्सर्वादेशो भवतीति कल्पनीयम्, उत यथा भवितेत्यत्र डित्करणसामर्थ्याद् भसञ्ज्ञाऽभावेपि लोपः क्रियते तथा शित्करणसामर्थ्याद् धात्वधिकाराभावेपि सार्वधातुकसंज्ञा भवतीति कल्पनीयम् । तत्र द्वितीया कल्पना श्रेयसी स्यात् । तथा च शित्करणसामर्थ्यात्सर्वादेशो भवतीति वक्तु न युक्तम् । तथा स्वस्मिंश्चारि-तार्थ्यं सुलभम् । अन्यत्र फलमवर्णस्तु मावनत्रः इत्यत्र तु आदेशः सर्वस्य न भवति ॥

डादिविषये तु सर्वादेशत्वं विना अनुबन्धत्वस्यैवाभावेन आनुपूर्व्यादुक्तक्रमा-त्सिद्धं नाम आदेशे कृते स्थानिवद्भावेन प्रत्ययत्वमानीय पश्चादित्सञ्ज्ञा । तथा चादेशकरणात् प्रागनेकाल्त्वमस्तीत्याशय. । परतु अत्र किंचिद्विचार्यते । शब्दे-न्दुशेखरे तु जस. शी इत्यादावनेकाल्त्व सर्वादेशो न किं तु शित्वादेव । कुतः । इत्त्व नाम इत्सञ्ज्ञायोग्यत्वम् । तथा च जसः शी इत्यादौ शकारस्य इत्सञ्ज्ञायोग्य-त्वेन नानुबन्धकृतमनेकाल्त्वमिति परिभाषाया. सत्त्वेन अनेकाल्त्वात् सर्वादेशो न भवति किं तु शित्वादेव । तथैव रीत्या डादीनामपि डकारस्य इत्संज्ञायोग्यत्वेन अनेकाल्त्वात् सर्वादेशो न स्यात् । तत्कथमिद विरुद्धमुच्यते इत्यत्र सर्वेपि टीकाकारा. प्राचीनरीत्यायं ग्रन्थः इत्याहु. । पर तु नैतदस्मद्गुरूणा मतम् । किं तु नवीनरीत्यैवायं ग्रन्थ । तथा हि । जसः शी इत्यादौ संभावनया इत्संज्ञादर्शन-विषये अनेकाल्शित्सर्वस्येति परिभाषा न प्रवर्तते । कुत । यदा निमित्तानि निश्चितानि स्युः तदा तत्प्रवृत्तिः । तथा च आदे परस्येति परिभाषा प्रवर्तते । प्रत्ययादिश्च शकारः स्यादेवेति इत्सञ्ज्ञायोग्यत्व युज्यते । डादिविषये तु न युज्यते । कुत । डाविषये अनेकाल्त्वप्रसङ्गे अनेकाल्परिभाषाऽभावेन अलोन्त्य-स्येत्यनेन अन्तादेश । न च तत्र आदे. परस्येति विधने तत्र धातोरित्यधिकारा-भावात् । तथा च चुटू इत्यनेन इत्सञ्ज्ञा न भवेत् । कुतः । प्रत्ययादित्वाभावात् । तथा च संभावनया डाप्रत्ययस्य (डकारस्य) इत्सञ्ज्ञायोग्यत्वं न युज्यते ॥

१ B नानुब-धस्यैवाभावेन.

नन्वेवमप्यवदात मुखमित्यत्र पलोपोत्तरमात्त्वे कृते ऽदाप् [ १. १. २० ] इति घुसंज्ञाप्रतिषेधो न स्यात् । दैप पकारसत्त्वे ऽनेजन्तत्वादात्त्वाप्राप्त्या पलोपोत्तर पकाराभावेनास्य दांप्त्वाभावादत आह ।

## नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

---

णलो णकारस्यापि सभावनया इत्संज्ञायोग्यत्व न युज्यते । तथाहि । णलो णकारस्य इत्संज्ञायोग्यत्वदर्शनावस्थाया अनेकाल्शित्सर्वस्येति परिभाषा न प्रवर्तते । आदे परस्येति परिभाषापि न प्रवर्तते । यद्यपि परस्मैपदानामिति सूत्रे धातोरधिकाराद् धातोरिति पञ्चम्यन्तमुपस्थित भवति तथापि परबोधकशब्दपर-शब्देन यत्र विधान तत्रैव सा प्रवर्तते । अन्यथा नित्य ङित इति सूत्रेपि धातोरित्य-स्यानुवृत्तिर्विद्यत एव । तथा च भवाव भवामेत्यादौ आदे परस्येति परिभाषया आदेलाप स्यात् । स च नेष्ट । तत्सिद्ध्यर्थ परार्थबोधकपरशब्दोऽवश्य स्वीकार्य । तथा च आदे परस्येति परिभाषा न प्रवर्तते । किं तु अलोन्त्यस्येति परिभाषया अन्त्यस्यैव णकार स्यात् । ननु तत्र अलोन्त्यपरिभाषा बाधित्वा अनेकाल्शित्सर्वस्येति कुतो न प्राप्नोति इति चेन्न । अनेकाल्त्वदर्शनसमये तस्या परिभाषाया अप्रवृत्तत्वादित्यपि ज्ञेयम् । तथा च अलोन्त्यपरिभाषैव । तथा च इत्संज्ञायोग्यत्वाभावेन द्वयो शेखरयोर्न विरोध । तथा च आदेशकरणात् प्राक् इत्संज्ञाया अभावेन अनेकाल्त्वात् सर्वादेश इति सिद्धम् इत्यलम् ।

नानुबन्धकृतमनेजन्तत्वमिति । ननु अनुबन्धाना अवयवपक्षे अवदात मुख-मित्यत्र पलोपोत्तरमात्त्वे कृते अदाप् इति घुसंज्ञाप्रतिषेधो न स्यात् । कुत । दैप पकारसत्त्वेन एजन्तत्वाभावात् आत्त्वाप्राप्त्या पलोपोत्तर पकाराभावेन दाप्-रूपत्वाभावात् इत्यवतरणम् । परतु अत्र पलोपोत्तरमात्त्वे कृते इति विरुद्ध भवति । तथा हि—आत्वविधायक सूत्र आदेच उपदेशेऽशितीत्याकारत्वम् । तस्यार्थस्तु—उपदेशे एजन्तो यो धातुस्तस्यैव आत्त्व भवति । तथा च पलोपे कृते उपदेशे एजन्तत्वाभावेन आत्त्व न स्यात् । दैप् इत्यस्य उपदेशत्वात् । तथा च कथ पलोपोत्तरमात्त्वम् इति । अत्रेदमुत्तर दातु शक्यते । किं नाम उपदेश-त्वम् । तात्पर्यविषयीभूतत्वम् । तथा च दैप् इति हलन्तोच्चारितेपि तात्पर्यं दै एतद्विषये एव । तथा च पलोपेपि उपदेशत्व विद्यते इति कृत्वा न कश्चिद् दोष । इदमपि अत्र चिन्त्यम् । इय परिभाषा किमर्थमुच्यते तर्हि दैपः पकारसत्त्वे अने-

---

१ B निषेधो न स्यात् ।

२ B °सत्त्वेनैजन्तत्वाभावादात्त्वाप्रात्या

३ C K दाप्रूपत्वाभावा०

उदीचां माङः [ ३. ४. १९ ] इति निर्देशो ऽस्या ज्ञापकः । आदेच उपदेशे [ ६. १. ४५ ] इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते । ङकारसत्त्व एजन्तत्वाभावादात्वाप्राप्तेस्तस्यासंगतिः ॥ न चास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्वम् । तत्र धातोः [ ६. १. ८ ] इत्यस्य निवृत्तेरि-

जन्तत्वात् आत्वाप्राप्तिः। पलोपोत्तरमात्वे कृते दाप्-रूपत्वाभावः। तथा च आकारपकारयोर्न कश्चित्संबन्धो वक्तुं पार्यते। तदर्थं चेयं परिभाषोच्यते। परंतु सा न वक्तव्या। कुतः। 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषा दैपो दाप् इति निषेधो यथा स्यात् इत्येतदर्थं क्रियते। परंतु सा न वक्तव्या। कथमिति चेत्प्रतिपादयामि। यथा स उ एकाग्निः इत्यत्र वेञो ञकारस्य स्मृतत्वे उञ्रूपत्वं स्वीक्रियते। तच्च कथं तर्हि श्रुताकारत्वं स्मृतञकारत्वरूपेण। लाक्षणिकत्वं नाम उपलक्षणत्वं शास्त्रे कुत्रापि न स्वीक्रियते तथापि अत्र दाप्-विषये गृह्यते। तत्रापि गामादाग्रहणेष्वविशेष इति परिभाषया स्मृतपकारत्वं श्रुताकारत्वं स्वीकृत्य दैपो दाप्-रूपत्वेन अदाप् इति घुसंज्ञाप्रतिषेधो भवेदेतदर्थं नानुबन्धकृतमनेजन्तत्वम् इति परिभाषा न स्वीकार्या इति चेन्न। दाप्-विषये लाक्षणिकत्वं त्रिविधम्। दै इति ऐकारस्य स्थाने आकार इत्येकं वक्तव्यम्। परंतु नैतद्वक्तुं युक्तम्। कुतः। तस्य आकाररूपत्वेन ज्ञातत्वात्। यदि वृद्धिशब्देन स आकारः स्यात्तर्हि लाक्षणिकत्वं स्यादित्यन्यदेतत्। द् आ इति द्वितीयं लाक्षणिकत्वम्। परंतु तद् गामादाग्रहणेष्वविशेष इति परिभाषया दारूपस्य ग्रहणात्सिद्धम्। तृतीयं च दाप् इत्यत्र श्रुत-आकारत्वं स्मृतपकारत्वरूपेण। तच्च लाक्षणिकत्वं न केनापि गृह्यते। तद्ग्रहणं यथा स्यादित्येतदर्थमियं परिभाषा स्वीकार्या इति। साक्षाद् दाप्-विषये लाक्षणिकत्वं न। कुतः। तत्र दाप्-रूपत्वं कदाचिद् दृष्टम्। तथा च न परिभाषापेक्षा। दैप्-विषये तु अवश्यं स्वीकार्या। कुतः। परिभाषां विना कदापि दाप्-रूपत्वाभावात् इत्यलम्।

ननु पूर्वमेव प्रतिपादितं दैप उच्चारितत्वेपि दै एतद्विषये तात्पर्यमिति। तथा च दैप एव धातुत्वेन दै इत्यस्य आत्वं न स्यात्। तथा च कथमदाप् इति प्रतिषेधे दैपो ग्रहणम्। शीङ् स्वप्ने इत्यत्र शी इत्येतद्विषये तात्पर्यं तर्हि शी इत्यस्य कथं धातुत्वम्। कुतः। भ्वादिषु शीङ् एव पठितत्वात्। तथा च शी इत्यस्य धातुत्वं न स्यात्। परंतु तथा सति लूञ् लविता इति 'न धातुसूत्र'स्थभाष्यासंगतिः। तत्र हि अनुबन्धविनिर्मुक्तस्य धातुत्वं प्रतिपादितम्। अत्रेदं निश्चीयते। 'न धातु०' इति सूत्रस्थभाष्यानुरोधेन अनुबन्धविनिर्मुक्तस्य धातुत्वं नाम अनुबन्धे गते एव न तु ततः प्रागिति। न चैवं ढौकृ इत्यादौ ऋकारे इत्वेन गते सति पश्चात् ककारस्यापि इत्वप्राप्तिः। तत्रापि स्थानिवद्भावे न सा इत्संज्ञा क्रियते स्थानिवद्भावश्च

1 According to P. some read तस्य तदंज्ञापकत्वासंगतिः।

त्यन्यत्र विस्तरः ॥ स्पष्टं चेदं दाधा घ्वदाप् [ १. १. २० ] इति सूत्रे भाष्ये ॥ ७ ॥

---

ढौकृ इत्यस्य स्थाने ढौक् इत्यादेशः इत्याकारकः। अथवा ऋकारः ककारपरित्राणार्थः। इदमस्थमुः इतिवत्। अत्र किंचिद्विचार्यते— 'नानुबन्धकृतमनेजन्तत्वम्' इति परिभाषाविषये किं प्रमाणम्। तर्हि उदीचां माङो व्यतीहारे इति निर्देशो ज्ञापक इत्युक्तम्। परंतु दैपः पित्त्वमपि ज्ञापकं वक्तुं शक्यते। तथाहि— किमर्थं दैपः पित्करणम्। तर्हि अदाप् इति घुसंज्ञाप्रतिषेधो यथा स्यात् इत्येतदर्थम्। परंतु तन्न कर्तव्यम्। कुतः। दैपो दारूपस्य लाक्षणिकत्वेन तस्य विधिसूत्रे प्रवेशाभावात्। व्यर्थं पित्त्वं ज्ञापयति 'गामादाग्रहणेष्वविशेषः' इति। यदि इदानीं पित्त्वं न क्रियते तर्हि निषेधो न स्यात्। तत्सिद्ध्यर्थं दैपः पित्त्वं कर्तव्यम्। परंतु स्वस्मिंश्चारितार्थ्यं न संभवति। कथमिति चेद् गामादाग्रहणेष्वविशेष इति परिभाषया दारूपविषये लाक्षणिकत्वं न गृह्यते। परंतु 'दाप्'-रूपविषये श्रुताकारत्व स्मृतपकारत्वरूपं लाक्षणिकत्वमपि ग्राह्यम् इति तया प्रतिपाद्यते। तथा च 'दाप्'-विषये लक्षणप्रतिपदोक्तपरिभाषा प्रवर्तते। तथा च पुनर्व्यर्थं पित्त्वं ज्ञापयति नानुबन्धकृतमनेजन्तत्वम् इति। यदि चेदानीं पित्त्वं न क्रियते तर्हि 'दाप्'-रूपन्वस्य सह्यत्वेन घुसंज्ञा स्यात्। सा च मा भूदित्येतदर्थं पित्त्वमावश्यकम्। परंतु एतज्ज्ञापकं धर्मिग्राहकमानाद दाविषयकं स्यात्। तथा च कथं मेङादीनां सिद्धिः। तदर्थं उदीचां माङ इति निर्देशः सामान्यापेक्षं ज्ञापकमिति। ननु पूर्वमेव प्रतिपादितं दापि उच्चारितेऽपि दे एतद्विषये तात्पर्यमिति। तथा च आत्वं सुखेन स्यात्। तथा इयं परिभाषा किमर्थं प्रतिपाद्यते इति चेत्। यथा शीङ् इत्यादौ सानुबन्धे उच्चारितेऽपि शीविषये तात्पर्यं तथा च शी इत्यस्य कथं धातुत्वम्। कुतः। भ्वादिषु शीङ् इति सानुबन्धस्य पाठात्। यदि च शीङ् इति समुदाये विहितं यद् धातुत्व तदेकदेशविकृतन्यायेन धातुत्वं स्यात्तर्हि न धातुलोप इति सूत्रस्थ-अनुबन्धाविनिर्मुक्तस्यैव धातुत्वमिति-भाष्यविरोधः स्यात्। तथा च तस्माद् भाष्यात् अनुबन्धविनिर्मुक्तस्यैव धातुत्वम्। इयं च कल्पना असंजातविरोधन्यायेन। तथा च पाधातुपाठसामर्थ्यात्। तथा च शीङादिषु न दोषः। तथैव 'दाप्' इत्यत्रापि पकारे सति एव दे एतद्विषये तात्पर्यं न तु पकारे सति। तथा च अवश्यं पकारे सति आत्वार्थं परिभाषा स्वीकार्या इति। अपरमपि इदं विचिन्त्यम्। दाप् इत्यत्र अन्त्ये एचत्वं मन्यते आहोस्विद् एचः अन्त्यत्वं मन्यते। तर्हि अन्ते एचूधर्मः कुत्रापि अप्रतिषिद्धः। तथा च दे एतत्समुदायनिरूपितं अन्त्यत्वं समुदाये मन्यते ॥

---

१ A. G. H. M. दाप [illegible]

नन्वेवमपि वासरूप [ ३. १. ९४ ] इति सूत्रेण क्तविषयेऽणो ऽप्याप त्तिरित्यत आह ।

## नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

ददातिदधात्योर्विभाषा [ ३. १ १३९ ] इति णबाधकशस्य विकल्पविधायकमस्या ज्ञापकम् ॥ तेन गोद इत्यादौ नाणिति वासरूपसूत्रे भाष्ये स्पष्टम् ॥ ८ ॥

ननु सङ्ख्याग्रहणे बह्वादीनामेव ग्रहण स्यादप्रकरणस्याभिधानियामकत्वसिद्धाकृत्रिमाकृत्रिमयो कृत्रिमे कार्यसम्प्रत्यय इति न्यायात् । अस्ति चात्र प्रकृते बह्वादीना सङ्ख्यासज्ञा कृतेति ज्ञानरूप प्रकरणम् । न तु लोकप्रसिद्धैकत्र्यादीनामित्यत आह ।

## उभयगतिरिह भवति ॥ ९ ॥

इह शास्त्रे । सङ्ख्याया अतिशदन्तायाः [ ५ १. २२ ] इति निषेधो ऽस्या ज्ञापक । न हि कृत्रिमा सङ्ख्या त्यन्ता शदन्ता वास्ति ॥ तेन कर्तरि कर्मव्यतिहारे [ १ ३. १४ ] कण्वमेघेभ्य करणे [ ३. १. १७ ] विप्रतिषिद्ध चानधिकरण [ २. ४ १३ ] इत्यादौ लौकिकक्रियाद्व्याद्यवगति ॥ तत्र क्वोभयगति क्वाकृत्रिमस्यैव क्व कृत्रिमस्यैवेत्यत्र लक्ष्यानुसारि व्याख्यानमेव शरणम् । अत एवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहण न तु द्विस्त्रिर्घुष्टमात्रस्य ॥ स्पष्ट चेद सङ्ख्यासज्ञासूत्रे भाष्ये ॥ यत्तु सज्ञाशास्त्राणा मच्छास्त्रे ऽनेन शब्देनैत एवेति नियमार्थत्व कृत्रिमाकृत्रिमन्यायबीजमिति तन्न । तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति नियमत्वायोगात् । सर्वे सर्वार्थवाचका इत्यभ्युपगमो ऽपि योगिदृष्ट्या न त्वस्मद्दृष्ट्या विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात् । सामान्यज्ञान तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ९ ॥

---

१ C न चैवमपि
२ K नाण्णिति
३ B C D G K अस्ति च प्रकृते
४ B ह्वादीनामत आह
५ B K चास्ति
६ B लक्ष्यानुव्याख्यान०
७ B न तु द्विस्त्रिघुष्ट०
८ B om सङ्ख्या
९ B नियमार्थत्वायोगात्
१० B नास्मद्दृष्ट्या
११ C विशिष्य सर्व

नन्वध्येता[1] शयितेत्यादाविड्शीङोर्ङित्त्वाद्गुणनिषेधः स्यादत आह ।

**कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥**

स्यण्डिलाच्छयितरि [ ४. २. १५ ] इति निर्देशोस्या[3] ज्ञापकः ॥

ऊर्णुनविषतीत्यादिसिद्धये कार्यमनुभवन्निति । अत्र हि द्विर्वचनेऽचि [ १. १. ५९ ] इति नुशब्दस्य द्वित्वम् । अन्यथा सन्यङोः [ ६. १. ९ ] इत्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेनेसो द्वित्वनिमित्त्वाभावात्तत्प्रवृ-

---

ननु अध्येता शयिता इत्यादौ इड्शीङोर्ङित्वाद् गुणनिषेधः स्यात्, अत आह–कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते। यथा तृच्प्रत्ययो गुणनिमित्तं भवति तथैव इड्शीङादयोपि गुणनिमित्तं भवन्ति तथा च गुणनिषेधः स्यात्। तस्मिन् सूत्रे नाम क्ङिति इति निषेधे निमित्तसप्तमी। तद्विषये प्रमाण तु क्नोः कित्त्वम्। तच्च गृध्नुरित्यादिसिद्ध्यर्थं क्रियते। परंतु तच्च कार्यम्। कुतः। क्नोः अव्यवहितपरत्वाभावात्। न च भमितव्यं येन नाव्यवधानमिति। क्ङिति चेति सूत्रस्य चक्नतुरित्यादौ चारितार्थ्यात्। तथा च व्यर्थं कित्त्वं ज्ञापयति क्ङिति चेति सूत्रे निमित्तसप्तमीति। यदि च क्नोः कित्त्वं न क्रियते तर्हि गृध्नुरित्यादौ गुणः स्यात्। न च मा भूद् इत्येतदर्थं किद्ग्रहणमावश्यकम्। अन्यत्र फल भूयादित्यादीनि। ऊर्णुनविषतीत्यादिसिद्ध्यर्थं कार्यमनुभवन्निति। अस्योदाहरणानि ऊर्णुनविषति अरिरिषति जेघ्रीयते देध्मीयते इत्यादीनि। तत्राद्यं यथा। ऊर्णु इत्यस्य सन्प्रत्यये इडागमे सति द्वित्वं प्राप्तं किंच गुणादेशः प्राप्तः। तत्र सिद्धान्ते गुणादेशो न भवति। कुतः। द्विर्वचनेऽचीति निषेधात्। परंतु इद वक्तु न शक्यते। कार्यी निमित्ततया नाश्रीयते। तथा च सन्नन्तस्य द्वित्वकार्यित्वात् कार्यी निमित्ततया नाश्रीयत इति परिभाषया इसो निमित्तत्वाभावेन गुणनिषेधो न स्यात्। तदर्थं कार्यमनुभवन्निति अवश्यं स्वीकार्यम्। स्वीकृते च तस्मिन् इस इत्यस्य कार्यानुभवित्वं न युज्यते। कथमिति चेद् ब्रूमः। कार्यानुभवद्वयाणां भवति—ऊर्णु इत्यस्य नु इत्यस्य किंच उ इत्यस्य। न कदाचिदपि इस् इत्यस्य। तथा च लोके हस्ताङ्गुलेः पीडायां जातायां मम दुःखं भवति इति प्रतीयते हस्तस्य दुःखं भवतीति उत अङ्गुलिपीडा भवतीति उच्यते। परन्तु न कदाचिद् वामहस्तो दुःखितो भवति इति व्यवाह्रियते। तथैवात्रापि। अरिरिषति इत्यत्र तु साक्षात् इस्

---

१ P. नन्वध्येता शयित इत्यादौ.

२ C. अनुभवन् कार्यी.

३ C. G. K. P. M. निर्देशोऽस्याः.

४ A. C. षष्ठ्यन्तत्वात्.

चिर्न स्यात् ॥ वस्तुतः समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्रसिद्धतया तस्य तत्त्वेनाश्रयणाभावेन नैषा ज्ञापकसाध्या[1] । अत

---

इत्यस्यैव कार्यित्वेन तत्र द्विर्वचनेऽचीति न प्रवर्तते । अत्रेदं फलितं भवति । पर्याप्तिसंबन्धेन कार्यानुभवविशिष्टसमुदायघटकवर्णघटितसमुदायो निमित्ततया नाश्रीयते तथा च ऊर्णुनविषतीत्यत्र पर्याप्तिसंबन्धावच्छिन्नकार्यानुभवी नुः तद्घटकाः नकारादयः तद्घटितसमुदायः ऊर्णु इत्याकारकः स्यात् । न तु इस् इत्याकारकः स्यात् । स समुदायो निमित्ततया नाश्रीयते । परंतु इस् इत्याश्रीयते एव । तथा च न दोषः । अरिरिषति इत्यत्र तु पर्याप्तिसंबन्धेन कार्यानुभवविशिष्टः इस् इत्याकारकः तद्घटितवर्णौ इकारसकारौ तद्घटितसमुदायो निमित्ततया नाश्रीयते । तथा च नास्य निमित्ततया आश्रयणम् । तथा च द्विर्वचनेऽचीति न प्रवर्तते । द्विर्वचनेऽचीति सूत्रे अचिग्रहणाभावे अचि किमिति प्रत्युदाहरणविषये जेघ्रीयते देध्मीयते इत्यत्र द्वित्वं प्राप्तं, ईत्वं च प्राप्तं यङन्तस्य कार्यित्वेन घ्राय् ध्माय् इति द्वितीयाजवयविकस्य कार्यितया यङोऽपि द्वित्वनिमित्तत्वाभावात् । इदं सर्वं व्यञ्जनस्य नष्टमार्यावत्त्वस्वीकारे । तथा च जाघ्रायते इति रूपं स्यात् । तथा च अचीति वक्तव्यमित्युक्तं शब्दकौस्तुभे । अत्रायं परिष्कारो न प्राप्नोति । तथाहि । पर्याप्तिसंबन्धेन कार्यानुभवविशिष्टसमुदायः घ्राय इत्याकारकः, तद्घटकवर्णसमुदायः घ्राय् इत्याकारकः स निमित्ततया नाश्रीयते । तथा च निमित्तत्वेन आश्रयणं न स्यात् । इदं च व्यञ्जनानि नष्टमार्यावत्त्वपक्षे । यदा नष्टमार्यावत्त्वपक्षः न स्वीक्रियते तदानीं तु युज्यत एव पर्याप्तिसंबन्धेन कार्यानुभवविशिष्टसमुदायः घ्रा इत्याकारकः तद्घटका वर्णा घ्रा इत्याकारकाः तद्घटितसमुदायो निमित्तत्वेन नाश्रीयते । य इति तु आश्रीयत एव । तथा च ईत्वं सुलभमिति दिक् । अत्र प्रत्यासत्तिः । यत्कार्यं प्रति कार्यिता तन्निरूपितमेव निमित्तत्वं नाश्रीयते । अस्योदाहरणं तु क्षुधित इत्यत्र इडागमसहितः क्तप्रत्ययः सः निमित्तत्वेन नाश्रीयते । तथा च क्ङिति चेति निषेधो न स्यात् । तदर्थमियं प्रत्यासत्तिरवश्यं स्वीकार्या । स्वीकृतायां च तस्यां यन्निरूपितकार्यित्वं तन्निरूपितं निमित्तत्वं जायते । तथा च क्षुधित इत्यत्र इडागमत्वेन कार्यित्वं तन्निरूपितं निमित्तत्वं न स्वीक्रियते, अन्यविषये तु स्वीक्रियते एव । तथा च क्ङिति चेति गुणनिषेधो भवति इति ॥ अपरापि प्रत्यासत्तिर्येन रूपेण कार्यिता तेन रूपेण निमित्तता नाश्रीयते । अन्यरूपेण तु आश्रीयत एव । तथा हि । अस्योदाहरणं तु श्रायस इति । श्रेयसोऽपत्यं श्रायसः । अत्र अण्प्रत्यये आकारे च कृते तस्मात् प्रथमाद्विवचने औप्रत्यये कृते वृद्धिरेचि इति वृद्धौ सत्यां अन्तादिवच्चेति सूत्रेण परादिवद्भावे नुमदीर्घादयः प्राप्ताः । परंतु सिद्धान्ते स्थानिवद्भावे नेषां परिहारः क्रियते । स च यथा ।

[1] A. एषा न ज्ञापकसिद्धा । B P. G. °श्रयणाभावेनैव, न ज्ञापकसाध्या ।

परनिमित्तो नाम औनिमित्तः । अत्र परनिमित्तकं यत्तद्धि घचियस्य स्थानिवद्भाव कर्तव्यः स एव निमित्तभूतो भवति । एतच्च प्लायते इत्यादिसिद्ध्यर्थम् । तत्र च निमित्त त्रयाणा स्थाने पूर्वस्मिन्परस्मिन्नुभयोश्चेति । अस्तु । प्रस्तुतविषये औनिमित्त आदेश· स्थानिवद् भवति स्थानिभूतादच· पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये । परतु अय स्थानिवद्भाव· वक्तु न शक्यते । कुत· । कार्यी निमित्ततया नाश्रीयते इति परिभाषायाः सत्त्वात् । तथा च औङ्त्वस्य परनिमित्तत्वाभावेन स्थानिवद्भावो न स्यात् तथा च नुमादय· स्युरेव । तद्वारणार्थमवश्यं प्रत्यासत्तिर्ग्राह्या । स्वीकृताया च तस्यामेक· पूर्वपरयोरित्यधिकारेण पूर्वत्वपरत्वरूपेण एच्-रूपेण कार्यित्वम् । तेन रूपेण निमित्तत्वाभावान्निमित्तत्व स्वीक्रियते । तथा च स्थानिवद्भाव· सुखेन भवतीति शम् ॥ दधौ इत्यत्र न दोषः । धा औ इत्यवस्थायां निषेधपक्षे न कोपि दोष । परतु रूपस्थानिवद्भावपक्षे दोषो विद्यते । पूर्ववद् धा औ इत्यवस्थाया वृद्धि· क्रियते तत्र वृद्धौ कृताया रूपस्थानिवद्भावस्याप्राप्ति । कुत । द्वित्वनिमित्ते अचि परत रूपस्थानिवद्भावो भवतीत्यर्थ । तथा च एकादेशत्वेन द्वित्वनिमित्ताच्परत्वाभावेन रूपस्थानिवद्भावपक्षे दधौ इत्यस्यासिद्धि· । तत्सिद्ध्यर्थं द्वित्वनिमित्तभूत-अजादेश रूपस्थानिवद्भाव लभते । तथा च न दोषः । तथापि दुद्यूपतीत्यत्र सभव । दिव् धातो सन्काशात्सन्प्रत्यये इड्विकल्पे ऊठि च कृते यणादेश· समात । किं च द्वित्व प्राप्तम् । तत्र निषेधपक्षे न कश्चिद् दोषः । कुत । द्वित्वनिमित्त योच् इत्याकारकः तन्निमित्त अजादेशो न भवति । यद्यपि कार्यी निमित्ततया नाश्रीयते इति परिभाषा विद्यते तथापि कार्यानुभवेन कार्यिणं निमित्ततयानाश्रयणम् । अत्र तु कार्यानुभवाभावस्यैवाश्रयणम् । तथा च द्विर्वचनेचीति निषेध प्रवर्तते । परतु रूपस्थानिवद्भावपक्षे दोषतादवस्थ्यम् । कथमिति चेत् प्रतिपादयामि । दि उ स ति इत्यवस्थाया पर्वं यणादेशो भवति ततो रूपस्थानिवद्भाव कर्तव्य । स च सुतरा कर्तुं न पार्यते । कुत· । द्वित्वनिमित्तभूतो योऽच् उ इत्याकारको मन्यते । परतु कार्यी निमित्ततया नाश्रीयते इति परिभाषया तस्य निमित्ततया नाश्रयणम् । न च भ्रमितव्य कार्यानुभवविशिष्टस्यैव निमित्ततया आश्रयण न तु कार्यानुभवाभावकस्य । अत्रापि साक्षात् कार्यानुभाविनः एव आश्रयणम् । तथा च निषेधपक्षरूपस्थानिवद्भावपक्षयोर्वैषम्यं प्राप्तमिति चेन्न । निषेधपक्षे उ इत्येतस्य निमित्तत्व स्वीक्रियते । तच्च केन रूपेण तर्हि सन्नन्तघटकत्वरूपेण । अच्-रूपेण तु न । अच्त्वस्य द्वित्वे सम्बन्धाभावात् । तथा च सन्नन्तघटकत्वरूपेण तत्रापि निमित्तत्वं स्वीक्रियते । तथा च सन्नन्तस्यैव कार्यित्वेन सन्नन्तस्यैव कार्यित्वानुभव । अत· कार्यी निमित्ततया इति परिभाषा प्रवर्तते । तथा च निषेधपक्षे न उस इत्यस्य निमित्तत्वम् । इदं च विव्यतुरित्यत्रावश्यकम् । अन्यथा तत्र द्विर्वचनेचीति निषेधो न स्यात् । अतस· निमित्तत्वेन तदन्तभूतस्य निमित्त-

एव ह्रिः प्रयुक्तः। स[1] ह्रिरसत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति[2] तत्त्वम् ॥

---

त्वाभावात्। अतः अनेन न्यायेन अकारस्य निमित्तत्वम्। तथा च न तयोर्मध्ये वैषम्यम्। न च ऊर्णुनविषतीत्यत्र दोषः यतः नन्नन्तघटकत्वरूपेण कार्यिता तेनैव रूपेण निमित्तता इति वाच्यम्। तत्र निमित्तत्वावच्छेदकं नन्-त्वं वक्तुं शक्यते। तथा न कश्चिद् दोषः। तत्र च तद्भावभावितामात्रेणापि निमित्तता। तथा च न कश्चिद् दोषः। इदं च तद्भावभावितामात्रेण निमित्तत्वमवश्यं स्वीकार्यम्। कथमिति चेदुच्यते—

नव्यास्तु अभ्यासस्येति संपूर्णं सूत्रं वार्णादाङ्गं बलीयो भवति इत्येतद्विषये ज्ञापकमिति वदन्ति। परंतु तज्ज्ञापकं पुनरां वक्तुमशक्यम्। कुतः। इयेषेत्यत्र चारितार्थ्यात्। तत्र हि द्वित्वनिमित्त-अच्-परत्वाभावेन गुणनिषेधाभावात् पूर्वं गुणे कृते पश्चाद् द्वित्वं स्यात्। ततश्च 'ह्रस्वः' इत्यनेन ह्रस्वे कृते पश्चादभ्यासस्यासवर्णे इत्यस्य चारितार्थ्यं स्यात्। तथा च संपूर्णं सूत्रं ज्ञापकं न स्यात् इति चेन्न। तत्र चित्कलायां चित्कलाकारैः इयेषेत्यस्य अप्रयोग एव इत्युक्तम्। परंतु नैतद्युक्तम्। अप्रयोगोपि भाष्यादिसिद्ध्यर्थः स्वीकार्यः। तथा च शेखरो न युज्यते इत्येतदर्थं तस्यानाश्रयणमयुक्तम्। तत्र चान्यदुत्तरं दातुं शक्यते। तथाहि इयेषेत्यत्र तद्भावभावितामात्रेण निमित्तत्वं स्वीक्रियते। तथा च द्विर्वचनेचीति निषेधो भवति। तथा च न कुत्रापि चारितार्थ्यमित्यलम् ॥

अधिजिगापयिषतीत्यत्र फलभेदसंभावना दृश्यते। तथाहि णिच्यच आदेशो न स्यादित्येतदपि द्विर्वचनेचीति सूत्रेण तुल्यमेव। तेन हि व्यवधानेपि अच आदेशो न स्यात् इति प्रतिपाद्यते। तथा च अधिजिगापयिषतीत्यत्र निषेधपक्षे यत्र द्विरुक्तावभ्यासोत्तरखण्डस्येत्यादिसंकोचस्य सत्त्वेन उत्तरखण्डे अकारस्याभावेन न ज्ञापकसंबन्धः। रूपस्थानिवद्भावपक्षे तु पूर्वमादेशे तत उत्तरखण्डे अकारसत्त्वेन ज्ञापकं स्यात्। तथा च पूर्वमादेशो न स्यात्। तथा च उत्तरखण्डस्यैवादेशो भवेत्। तथा च अधिजिगापयिषतीति रूपं न स्यात्। तथा च फलभेदः प्राप्तः। परंतु नायं फलभेदः। कुतः। नवीनमते उकारस्थानिकः अकारः यत्र उत्तरखण्डे वर्तते तत्रैवेदं ज्ञापकम्। तथा च न कश्चिद् दोषः। प्राचीनमते तु उत्तरखण्डे अकारः स्यान्न वा इति दर्शनावसरे सिद्धान्ते परिभाषा नानीयते। ऊर्णुनूषतीति ज्ञापके यथा परिभाषा गृह्यते तथा न गृह्यत एव। तथा च उत्तरखण्डे अकाराभावेन नेदं ज्ञापकम्। तथा च न कश्चिद्दोषः ॥ अमुमुवत् इत्यत्र

---

१ C. D. K. स हि तत्त्वेन.

२ C. द्योतयति।

द्विर्वचनेऽचि [ १. १. ५९ ] इति सूत्रे भाष्ये ध्वनितैषा ॥ १० ॥

ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह ।

## यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते बोध्यते इत्यर्थः । तत्र [3]तद्गुणीभूता इत्यंशो बीजकथनम् । लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते ॥ यमुद्दिश्य विहित इत्युक्तेः प्रनि-

न चक्रकापत्तिः । तत्र परंपरया ( लघूपधाङ्गत्वरूपेण ) गुणस्यापि निमित्तत्वम् । तथा च द्विर्वचनेचीति निषेधेनैव सिद्धिर्भवति । न च कार्यी निमित्ततया नाश्रीयते इति वक्तव्यम् । तत्र कार्यमनुभवन्निति प्रलापस्य सत्त्वात् । न च रियति पियतीत्यत्र अन्तरङ्गत्वाद् इयङ् इति भाष्यकैयटकौमुद्यादिग्रन्थासङ्गतिः । तथाहि । तत्रापि परंपरया शप्रत्ययस्य निमित्तत्वेन क्ङिति चेति निषेध स्यात् । तथा च गुणप्राप्तिरेव नास्ति । तत्कथमन्तरङ्गत्वमियङ्येति चेन्न । तत्र अगतित्वात् परंपरया निमित्तत्वं स्वीक्रियते । तथा च न दोषः ॥

द्विर्वचनेचीति भाष्ये ध्वनितेति । ध्वननं च तत्र यथा । अचि किम् । जेघ्रीयते देध्मीयते इति । तत्र यदि अज्ग्रहणं न स्यात् तर्हि द्वित्वनिमित्ते वर्णे परतः अच आदेशो न स्यात् । तथा च जाघ्रीयते दाध्मीयते इति स्यात् । तदर्थमचीति वक्तव्यमित्युक्तम् । तथा च द्वित्वनिमित्तस्य अचः परत्वाभावेन न द्विर्वचनेचीति निषेधः इति । परंतु कृतेपि अज्ग्रहणे दोषतादवस्थ्यम् । कुतः । घ्रा ध्मा इत्येतत्समुदायघटकस्य अचो द्वित्वनिमित्तत्वेन दोषः प्राप्तः । भाष्यकारैश्च दोषो नास्तीत्युक्तम् । अतस्तेषामन्तः—करणे इयं परिभाषा विद्यते— कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयत इति ॥

नन्वेवमपि प्रणिदापयतीत्यत्र दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यात् अत आह– यदागमास्तद्गुणीभूता इति । परंतु एतदवतरणं न सम्यग्युज्यते कुतः । आगमे कृतेपि पूर्वं घुसंज्ञायाः सत्त्वेन तां घुसंज्ञामाश्रित्य णत्वं स्यात् । तथा च नैतदवतरणं युज्यत इति चेन्न । अत्र किंचिद्विचार्यते । कार्यकालपक्षे

१ C. H. M. इत्यत्र भाष्ये.

२ A. तद्बोधकशब्देन.

३ A. तद्गुणीभूत इत्यंशो विज्ञानकथनम् ।

यदा कार्यं तदा संज्ञा । तथा च प्रणिदापयतीत्यत्र पूर्वं दाधातोः सकाशाण्णिप्रत्यये पुगागमे कृते पश्चाण्णत्वं कर्तव्यम् । परंतु तत्र पुगागमे कृते आगमसंनिधाने केवलस्यार्थवत्त्वं नास्तीति न्यायात् दा इत्यस्यार्थवत्त्वाभावेन अर्थवद्ग्रहणपरिभाषया च अर्थवतः एव घुसंज्ञाविधानात् दा इत्यस्य घुसंज्ञा न स्यात् इति अवतरणं युज्यते । यथोद्देशपक्षे भविष्यति किंचिदनेन प्रयोजनमिति न्यायेन पूर्वं संज्ञा कर्तव्या । तत्र पूर्वं धातुः साधनेन युज्यते इति पक्षस्य स्वीकार्यत्वेन पूर्वं णिच्प्रत्यये पुगागमे कृते तत्करणात् पूर्वं घुसंज्ञायाः सत्त्वेनापि दोषः प्राप्त एव । नेर्गदेति सूत्रे प्रत्यासत्तिर्विद्यते । यमुद्दिश्य घुसंज्ञा तन्निरूपितमेव उपसर्गत्वं ग्राह्यमिति प्रणिदापयतीत्यत्र यन्निरूपिता घुसंज्ञा तन्निरूपिता उपसर्गसंज्ञा नैव विद्यते । किंतु घुसंज्ञा दा इत्येतद्रूपस्य । उपसर्गसंज्ञा तु दाधातोर्णिच्प्रत्यये णिजर्थनिरूपिता विद्यते । तथा च यन्निरूपितोपसर्गसंज्ञा विद्यते तस्य घुसंज्ञाऽभावेन णत्वं न स्यात् इति युज्यते नवीनरीत्या । प्राचीनरीत्या तु कार्यकालपक्षे एवमेव । यथोद्देशपक्षे किंचिद्भेदः । प्राचीनास्तु– पूर्वं धातुः साधनेन युज्यते किंच पूर्वमुपसर्गेणापि इति पक्षद्वयमपि मन्यन्ते । तथा च पूर्वमुपसर्गेण इति पक्षेपि णत्वं त्रैपादिकं तच्च पश्चात् कर्तव्यम् । अतः पूर्वं णिच् प्रत्ययः ततः पुगागमे पूर्वं दा इत्यस्य कृतापि घुसंज्ञा निवृत्ता स्यात् । तथा च णत्वे कर्तव्ये घुसंज्ञाया अभावेन णत्वं न स्यादत आह– यदागमेति । अस्यार्थः । यमुद्दिश्य आगमो विहितः स तद्गुणीभूतः शास्त्रेण ( अवयवबोधकशास्त्रेण ) अवयवत्वेन बोधितः अतः तद्ग्रहणेन तद्बोधकेन शब्देन गृह्यते बोध्यते इत्यर्थः । तत्र यमुद्दिश्य विहित इत्यतः प्रनिदारयतीत्यादौ न घुत्वम् । कथमिति चेत् प्रतिपादयामि । प्रणिदापयतीत्यादौ आकारमुद्दिश्य पुगागमो विधीयते । प्रनिदारयतीत्यादौ नाकारमुद्दिश्य रेफो विधीयते । किं तु ऋकारस्य वृद्धिर्विधीयते । तस्यां कर्तव्यायां रेफस्तदवयवत्वेन संलक्ष्यते न तदुद्दिश्य । अतः न तत्रेयं परिभाषा नापि घुसंज्ञा । यदि च यमुद्दिश्येति न स्वीक्रियते तर्हि यत्संबन्धित्वेन यो गृह्यते स तद्ग्रहणेन गृह्यते इत्यर्थः स्यात् । तथा च प्रनिदारयतीत्यादौ रेफोऽवयवत्वेन गृह्यत एव । तथा चानया परिभाषया तद्ग्रहणं स्याण्णत्वं च स्यात् । अतः यमुद्दिश्येति स्वीकृतम् ॥ केचन टीकाकारा वदन्ति । यमुद्दिश्येत्युक्ते अथवा यत्संबन्धि इत्युक्ते न कश्चिद् भेदः । तथा च प्रणिदापयतीत्यादौ यथा अवयवावयवः समुदायावयवो भवति इति न्यायेन आकारस्यापि विहितः पुगागमः समुदायस्य दारूपस्यावयवो भवति तथा दारयतीत्यत्र वृद्धिशब्देन क्रियमाणो य आकारस्तस्यावयवो यो रेफस्तस्य दारूपस्यावयवत्वेन ग्रहणं स्यात् । तथा चायं शेखरो न युज्यते इति प्राप्तम् । परंतु तत्र तैरेवं प्रतिपादितम् । पूर्वमवयवत्वेन गृहीतो योवयवस्तस्य योवयवः स समुदायावयवो भवति नान्यः । तथा च दापयतीत्यत्र पूर्वं नाम आगमकरणात्प्राक् अवयवत्वेन गृहीतो य आकारस्तस्या-

वयवो यः पकारः स समुदायरूपेण गृह्यते। भवति च तत्र समुदायरूपेण ग्रहणम्। दारयतीत्यत्र तु पूर्वं नाम अवयवकरणात्प्राक् आकारः अवयवत्वरूपेण गृह्यते किम्। न हि गृह्यते। तेनावयवावयवः समुदायावयवो भवति इति न्यायो नात्र प्रवर्तते। तेन अवयवरूपेण रेफो न गृह्यते। तथा च नात्र यदागमपरिभाषामाप्तिः इति तैः प्रतिपादितम्। तद्विषये ज्ञापकमपि प्रतिपादितम्। तथा हि– सायंचिरेति सूत्रे ट्युट्युलोष्टित्करणं क्रियते। तच्च किमर्थं क्रियते। तर्हि ङीप् प्रत्ययो यथा स्यात् इत्येतदर्थम्। परतु तत्र कर्तव्यम्। कुतः। अवयवावयवः समुदायावयवो भवतीति न्यायात्। ट्युतष्टित्करणेन समुदायात् ङीप् प्रत्ययः स्यादेव। तथा च व्यर्थमिदं ट्युट्युलोष्टित्वम्। न च भणितव्यं ट्युतष्टित्करणमायन्तौ टकिताविन्यायवयवविधानात् तस्य चारितार्थ्यात् कथं टित्करणात् ङीप्रत्ययो भवेदिति। तत्र हि यदि टित्करणसामर्थ्यात् ङीप् प्रत्ययो भवतीति सामर्थ्यवर्णनं क्रियते तर्हि युक्तमिदम्। परंतु सामर्थ्यवर्णनं न क्रियते। किं तु तत्र टित्करणात्कार्यद्वयमपि भवति ङीप् प्रत्ययः आद्यावयवत्वं चेति। तद्विषये लौकिकदृष्टान्तो यथा। घटप्रत्यक्षे उन्मीलितं चक्षुः पट न द्रक्ष्यति किम्। किं तु द्रक्ष्यत्येव। तेन दृष्टान्तेन ङीप् प्रत्ययः स्यात्। आद्यावयवोपि स्यात्। अतष्ट्युट्युलोष्टित्वं व्यर्थं ज्ञापयति पूर्वमवयवत्वेन गृहीतो योवयवस्तत्सबन्ध्यवयवो यत्र गृह्यते तत्रैवायं नाम अवयवावयवः। न च सायंचिरेति सूत्रे टित्करणं व्यर्थमिति वाच्यम्। यत्र त्रयाणामपि एकत्र समावेशो भवति तत्रैवावयवावयवः समुदायावयवो भवतीति न्यायः प्रवर्तते। तथा च यदि ट्युट्युलोष्टित्वं न क्रियते तर्हि ङीप्प्रत्ययो न स्यात्। तत्र हि अवयवस्तुद्करणाद् गृह्यते किम्। न गृह्यते। अतष्टित्वमावश्यकम्। अन्यत्र फलं दारयति। अत्र रेफात् प्राग् आकारोवयवत्वेन न गृह्यते। अतो न तत्र अवयवावयवः समुदायावयवो भवतीति वक्तुं युक्तम्। दापयतीत्यत्र तु पकारकरणात् प्राग् आकारोवयवत्वेन गृह्यते। अतस्तत्राय न्यायः प्रवर्तते। परंतु लोकविरुद्धमेतत्। यथा लोके उपच्छन्दककरणात् प्रागङ्गुल्यादिविशिष्टो हस्तस्तत्र विधीयते। तत्र अङ्गुल्यादिरवयवो न भवति किम्। भवत्येव। अनेन प्रकारेण न स्यात्। कुतः। अवयवकरणात्प्राग अङ्गुल्यादिकरणात्प्राक् अवयवत्वेन गृहीतो योवयवः स विद्यते किम्। नहि विद्यते। अतः अङ्गुल्यादिः प्रतिच्छन्दकस्य अवयवो न स्यात्। अतः लोकविरुद्धमेतत्। किंच यस्य यदागमः इति विग्रहेण यत्सबन्धी इत्यर्थः स्यात्। तथा च यमुद्दिश्येति विवरणं व्यर्थं स्यात्। अतो नेद सम्यगिति स्थितम्॥

अत्र किंचिद्विचार्यते– यदागमपरिभाषायां दोष. प्राप्नोति। कथमिति चेत्प्रतिपादयामि। शेरते इत्यत्र शीङ्धातोः सवाशाज्झप्रत्यये पत्वे कृते शी झे इति जातम्। ततो झकारस्य अत् आदेशस्तस्य रुडागमः। तत्र यदागमन्यायेन अत् इत्यस्य रुट्

अवयवः स्यात्। तत्कथं समुदायस्य अते इत्यस्यावयवः। यदि अते इत्यस्यावयवत्वेन न गृह्यते तर्हि सार्वधातुकत्वाभावेन गुणो न स्यात्। तदर्थं अते इत्यस्य रुडवयव. स्वीकार्य एव। यदागमन्यायेन तु न स्वीकर्तुं पार्यते। अत कथमिद युज्यते। अत्रेद चिन्त्यम्। यथा आदेशविषये आनुमानिकादेश स्थानिवद् भवति तथा आगमविषयेपि क्रियत। तत्राय विचार। यत्र श्रौतस्थान्यादेशभावो विद्यत तत्र स्थानिवत्सूत्र प्रवर्तते। यत्र तु आगमागमिभावस्तत्र यदागमन्याय। तथा च झ इत्यस्य स्थाने झे इत्यादेश। झ इत्यस्य स्थाने अते इत्यादेश। अते इत्यस्य स्थाने रते इत्यादेश। तत्र पूर्वस्थलद्वये स्थानिवद्भावसूत्रम्। तृतीयस्थले न स्थानिवद्भाव किंतु यदागमन्याय। दारयति इत्यत्र तु स्थान्यादेशभाव एव। मूलस्थानी ऋ इत्याकारक। तस्यादेश आ इत्याकारक। तस्मिन् कर्तव्ये रकार अवयवत्वरूपेण प्रकटितो भवति इति यद्यपि अवयवत्वरूपेण रेफ प्रकटितो भवति इति अवयवत्वरूपेण रेफो विद्यत तथापि न तत्र आगमाभिमानोस्ति। अतो न तत्र यदागमन्याय। अत एव वव्रे इत्यस्य सिद्धिः। अत एव नाम यत्र श्रौतस्थान्यादेशभावो विद्यते तत्र स्थानिवत्सूत्र यत्रावयवावयविभावस्तत्र यदागमन्याय इति व्यवस्थितत्वात्। तथा चानुमानकल्पना आगमविषयेपि विद्यते। तेन वव्रे इत्यस्य सिद्धि। वृ धातो सकाशाल्लिट्प्रत्यये एश् आदेशे द्वित्वे इद रूपम्। तत्र व इत्यस्यैवाभ्यासत्व रेफश्च तदवयव। अत्र तु श्रौतस्थान्यादेशभाव एव। तद्विषये च कल्पनात्रय सभवति। वृ इत्यस्य स्थाने व इत्यादेश उत वर्वृ इत्यादेश उत वर् इत्यादेश। तत्र वृ इत्यस्य स्थाने वर् इत्यादेश इति कल्पना कर्तव्या। तत्र अर्थवत्येव स्थान्यादेशभावकल्पनामिति नियमादभ्यासस्यानर्थकत्वेन वृ इत्यस्य स्थाने वर् इत्यादेशकल्पनैव न स्यादिति चेन्न। तत्र भूतपूर्वगत्या अभ्यासस्यार्थवत्त्व स्वीक्रियते। यदि तत्रार्थवत्त्व नाम अन्वययोग्यत्वमिति स्वीक्रियते तर्हि नानर्थकेलोन्त्यविधिरनभ्यासस्यति परिभाषाया अनभ्यासस्येति व्यर्थं स्यात्। तत्रापि नाम अभ्यासविकारे अन्वययोग्यत्वरूपार्थस्याभावेन अनर्थकत्वात्। अस्मन्मतेन वृ इत्यस्य स्थाने व इत्यादेश इति तु कल्पना न भवति। व इत्यस्यादेशस्याभावात्। रेफस्यादेशकरणात् प्रागेव उपस्थितत्वात्। वृ इत्यस्य स्थाने वर्वृ इत्यादेश एतदपि न सभवति। वर्वृ इत्यस्य सपूर्णस्य हलादिशेषापत्ते। अत वृ इत्यस्य स्थाने वर् इत्यादेश इत्येव रमणीयमिति दिक॥

अत्र शेखरविरोध। चेच्छिद्यते इत्यत्र हलादिशेष कुतो न भवतीत्यादि। तत्र इदमुत्तरम्। अभ्याससज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा सहिताना हलामेव तेन निवृत्ति। तथा च यदि लोप स्यात्तर्हि द्वयोरपि स्यात्। द्वयोरपि अनवयवत्वात्। इति विरोध। तथा चाभ्याससज्ञाप्रवृत्तिकाले ८ ॥

साक्षात् स्थानिद्वारा न संहितत्वं वक्तुं शक्यते। वव्रे इत्यत्र तु स्थानिवद्भावेन वक्तुं शक्यते। इति न तत्र विरोधः। दारयतीत्यत्र आनुमानिककल्पना नैव संभवति। कुतः। तत्र दृ इत्यस्य स्थाने दा इत्यादेशः इति वक्तुं न शक्यते। तत्र केवलस्याकारस्य उच्चारणप्रसङ्ग एव नास्ति। आकारोच्चारणप्रसङ्गात् प्रागेव रकारस्यागमात्। आरतुः इत्यत्र द्वित्वे उरदत्वे पुनरभ्याससंज्ञा विधीयते। तथा च हलादिशेषो भवति। परन्तु अयमत्र विरोधः— वव्रे इत्यत्र स्थानिवद्भावाद् व इत्यस्य अभ्यासत्वेन रेफस्य तदवयवत्वेन हलादिशेषो भवतीति प्रतिपादितम्। तत्र तु स्थानिवद्भावेन सिद्धत्वात् पुनः अभ्याससंज्ञा भवति तथा च लोपः अयं विरोधः इति चेन्न। वव्रे इत्यत्र आरतुः इत्यत्र च अस्ति कश्चिद्विशेषः। वव्रे इत्यत्र स्थानिवद्भावो वक्तुं शक्यते। आरतुः इत्यत्र स्थानिवद्भावो नवीनरीत्या वक्तुं न शक्यते। तन्मते स्थानिवत्सूत्रस्यार्थस्तु—आदेशस्थानिभूतो योऽल् तत्संबन्धी च योऽल् तद्वृत्तिधर्माश्रये कस्मिंश्चिद् विधौ कर्तव्ये स्थानिवद्भावो न भवतीत्यर्थः। अत्र च वाक्यार्थद्वयं संभवति। तस्य च फलमपि वक्तुं शक्यते। तस्येदमाद्यदलम्–अल्त्वव्याप्यधर्मावच्छिन्नस्थानितावच्छिन्नस्थानिनिष्ठे यत्किंचिद्धर्माश्रयके विधौ कर्तव्ये स्थानिवद्भावो न भवति। अस्योदाहरणं तु धिन्वन्ति तन्वन्ति। अत्र उकारस्य यणादेशे आर्धधातुकस्येड्वलादेरिति सूत्रेण इडागमः समाप्तः। स्थानिवद्भावेनार्धधातुकत्वात्। परंतु अनल्विधाविति निषेधो वक्तव्यः। तथा हि—आदेशः वकारः। स्थानी उकारः। स्थानिता उकारे। स्थानितावच्छेदकत्वमुकारत्वम्। तथा च तन्निष्ठे यत्किंचिद्धर्माश्रयके विधौ कर्तव्ये आर्धधातुकमुद्दिश्य इडागमे कर्तव्ये न स्थानिवत् इति। द्वितीयो वाक्यार्थः— यत्किंचिद्धर्मावच्छिन्नस्थानितावच्छिन्नस्थानिसंबन्ध्यल्मात्रवृत्तिधर्माश्रयके विधौ कर्तव्ये न स्थानिवत्। उदाहरणं प्रदीव्य। अत्र क्त्वाप्रत्ययस्थं वलादित्वं ल्यप्प्रत्यये आनीय इडागमः कर्तव्यः। परंतु अनल्विधाविति निषेधो भवति। आदेशः ल्यबादेशः, स्थानी क्त्वाप्रत्ययः, स्थानिता क्त्वाप्रत्यये, स्थानितावच्छेदकत्वं क्त्वात्वं, तत्सम्बन्धी अल् तकार, तन्मात्रवृत्तिधर्मः वलादित्वं, तदाश्रयो विधिरिडागमः, तस्मिन् कर्तव्ये न स्थानिवत्। तथैव रामेणेत्यत्र आदेशः इनादेशः, तत्स्थानी टाप्रत्ययः, स्थानिता टाप्रत्यये, स्थानितावच्छेदकत्वं टात्वम्, तत्संबन्धी अल् आकारः, तदाश्रयके विधौ कर्तव्ये न स्थानिवत्। तथा च न सवर्णदीर्घो भवतीति। उभयसाधारणमुदाहरणं द्यौः पन्थाः इत्यादीनि। प्रथमवाक्यार्थेन यथा—आदेशः औकारः तत्संबन्धी स्थानी वकारः, स्थानिता वकारे स्थानितावच्छेदक वकारत्वं, तन्निष्ठयत्किंचिद्धर्माश्रयके विधौ नाम हल्ङ्यादिलोपे न स्थानिवत्। एवं च आरतुः इत्यत्र द्वित्वे उरदत्वे कृते स्थानिवद्भावेन

दारयतीत्यादौ न दारित्यस्य घुत्वम् ॥ आने मुक् [ ७. २. ८२ ] इति मुग्विधानसामर्थ्यादेषानित्या । अन्यथा पचमान इत्यादावकारस्य मुक्यनया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेव । तेन दिदीय इत्यादौ

---

अ इत्यस्याभ्यासत्वं न भवति अनल्विधाविति निषेधात् । पूर्ववाक्यार्थेन स्थानी ऋकारः, स्थानिता ऋकारे, स्थानितावच्छेदकं ऋकारत्वं, तन्निष्ठे यत्किंचिद्धर्माश्रयके विधौ कर्तव्ये अभ्यासत्वमुद्दिश्य हलादिशेषे कर्तव्ये न स्थानिवत् । तथा च स्थानिवद्भावो न । वव्रे इत्यत्र तु स्थानिवद्भावो भवति । तथा च व इत्यस्याभ्यासत्वं सुखेन सिध्यति इति न द्वयोः शेखरयोर्विरोधः ॥

पूर्वं धातुरुपसर्गेण युज्यते इति प्राचीनपक्षे यदागमपरिभाषाया अवतरणं न युज्यते । कुतः । पूर्वं धातुः साधनेन युज्यते इति पक्षस्यैव सिद्धान्तभूतत्वात् । पूर्वं धातुरुपसर्गेण युज्यते इति पक्षो निर्मूलोऽस्ति । यदि पूर्वं धातुरुपसर्गेण युज्यते इति पक्षः स्यात् तर्हि प्रणिदापयतीत्यत्र भाष्यकाराः यदागमन्यायेन नैवोत्तरं दद्युः । कुतः । तत्र यदागमन्यायं विनापि प्रणिदापयतीत्यस्य सिद्धत्वात् । तथाहि । पूर्वं धातुरुपसर्गेण युज्यते इति पक्षे प्रनि इत्यस्य दाधातोर्योगे पूर्वमेव णत्वे स्यात् । न च पूर्वत्रासिद्धमिति सूत्रानुसंधानात् पूर्वं णत्वं न स्यादिति वाच्यम् । पूर्वत्रासिद्धमिति सूत्रं हि फलभेदे सत्येव । एतच्च झरो झरि सवर्णे इति सूत्रे लघुशब्देन्दुशेखरे द्रष्टव्यम् । प्रणिदापयतीत्यत्र न कश्चिद् विशेषः । तत्र हि पूर्वं णिच्प्रत्यये पुगागमे यदागमन्यायेन णत्वं यदि पूर्वं साधनेन योग इति पक्षः । पूर्वमुपसर्गेणेति पक्षे णत्वं सुखेनैव भवति । अतः न कोपि भेदः । पूर्वत्रासिद्धं च न प्रवर्तते ॥ अथवा अन्यदप्युत्तरं दातुं शक्यते । पूर्वत्रासिद्धमिति सूत्रं यौगपद्यासंभव एव प्रवर्तते । अत्र तु असंभवो न विद्यते । पूर्वं णत्वं स्यात् । ततो णिच्प्रत्यये पुगागमः । अथवा पूर्वं णिच् प्रत्ययः पुगागमश्च ततो णत्वम् । एवं च यौगपद्यासंभवो नास्ति । अतो न पूर्वत्रासिद्धमिति प्रवर्तते । अथवा णिच्प्रत्ययात्पूर्वमेव णत्वं स्यात् पूर्वमुपसर्गेण योगात् । अथवा णिच्प्रत्ययस्य पूर्वं णित्वकरणात्प्राग् योग्यतैव नास्ति । कुतः । णत्वं कदा प्राप्तम् । उपसर्गेण सह घोः संबन्धे सति । णिच् प्रत्ययस्तु यदा उपसर्गसंबन्धेन प्रकृष्टार्थविशिष्टार्थविशिष्टधातोः प्रेषणा विवक्ष्यते तदा । एवं च णिचः योग्यतैव न । अतः पूर्वं णत्वं स्यात् । तथा च न तदर्थं यदागमन्यायः स्वीकार्यः । भाष्यकारैश्च स्वीक्रियते । अतः पूर्वं धातुः साधनेन युज्यते इत्येव रमणीयम् इति दिक् ॥

आने मुगिति मुग्विधानसामर्थ्यादेषा अनित्येति । तथा हि— अन्यथा अकारस्य मुकि अनया परिभाषया अकारविशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेव । पचमान इत्यत्र अकारस्य मुगागमे यदागमन्यायेन तस्य अकाररूपेण ग्रह-

णात् सवर्णदीर्घः संप्राप्तः स्यात्। तथा च मुगागमे कृते सवर्णदीर्घः। अकृतेपि भवत्येव। अतो व्यर्थं मुग्विधानम्। तत्सामर्थ्यादनित्यैषा। अत्र किंचिद् विचार्यते। पचमान इत्यत्र विशिष्टस्य सवर्णदीर्घे कृते तद्वैयर्थ्यमित्युक्तं परंतु तत्र सवर्णदीर्घ इति अयुक्तम्। तदपवादस्य आतो ङित इत्यपवादस्य सत्त्वात्। तथा च कथं सवर्णदीर्घ इत्युच्यते। आने मुगिति सूत्रस्य विषये सूत्रद्वयं विद्यते। सवर्णदीर्घविधायक आतो ङित इति च। तत्र नाप्राप्ते कार्यद्वये आरभ्यमाणमाने मुगिति बाधकम्। स च बाध आतो ङित इत्यस्य तक्रकौण्डिन्यन्यायेन। कुतः। उत्सर्गानन्तरमपवादस्य चारितार्थ्यात्। तथा च आने मुगिति सूत्रेण विहितो मुगागम इयादेशे कृते भवति स्थानिवद्भावात्। तथा च उत्सर्गानन्तरमपवादस्य चारितार्थ्यं सुवचम्। तथा च इयादेशस्य तक्रकौण्डिन्यन्यायेन बाधान्न पुनस्तत्प्रवृत्तिः। सवर्णदीर्घस्य तु अनवकाशत्वाद् बाधः। कुतः। सवर्णदीर्घे कृते पुनर्मुगागमो नैव प्रवर्तते। उभयत आश्रयणे नान्तादिवदिति सिद्धान्तात्। तथा च तस्य अनवकाशत्वाद्बाधः। अनवकाशत्वाद् बाधे कृते पुनरुत्सर्गस्य यदि प्राप्तिस्तर्हि सोपि भवति। अतः 'सवर्णदीर्घे' इत्युक्तम्। किं च वैयर्थ्यमपि प्रतिपादितम्। परंतु नैतद्युज्यते। कुतः। मुगागमे कृते तत्स्थानिकस्य सवर्णदीर्घस्य अननुनासिकासिद्ध्यर्थं तस्यावश्यकत्वादिति वाच्यम्। न च अणुदित्सवर्णस्येतिसूत्रे अप्रत्ययस्येत्युक्तत्वेन अस्य विधीयमानत्वेन सवर्णाग्राहकत्वमिति। दीर्घस्यापि सवर्णानुनासिकभेदसत्त्वान्न दोषः। अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याप्रवृत्तिः इत्यनेन उत्तरस्य दातुं शक्यत्वात्। अथवा प्राचेतीत्यादौ समुदायसादृश्यं गृह्यते। कुतः। अगतिकत्वात्। तथा नात्र अवयवसादृश्यं गृह्यते किं तु समुदायसादृश्यम्। अतः मकारस्य सादृश्याभावान्नात्रानुनासिकः। आने मुक् इत्यत्र मुगागमवैयर्थ्यं प्रतिपाद्यते। परंतु न तद् वैयर्थ्यम्। यदि मुगागमो न क्रियते तर्हि सवर्णदीर्घं बाधित्वा आतो ङित इति स्यात्। तदर्थं मुगागमस्यावश्यकत्वम्। तथा च न तस्य वैयर्थ्यम्। अतः कथमनित्यत्वं प्रतिपाद्यते इति चेन्न। यदि पचमान इत्यादौ आतो ङित इति मा भूत् इत्येतदर्थं मुगागमः स्यात्तर्हि आतो ङित इत्यस्योपरि 'आने न' इत्येव ब्रूयात्। तथा च आने मुक् इति सूत्रसामर्थ्यादनित्यत्वं स्वीक्रियते। तेन दिदीये इत्यत्र यणादि न। न च यदागमन्यायेन यदि यणादेशः क्रियते तर्हि युड्विधानं व्यर्थं स्यात्। तत्रापि यदागम इति द्वित्वे कृते द्वियकारात्मकं रूपं सिद्धं स्यात्। तथा च युडागमविधानं व्यर्थं स्यात्। तथा च सामर्थ्याद्यणादेशो न भवति इति कल्पना स्यादिति चेन्न। युडागमे कृते त्रियकारात्मकं रूपं भवति। तदभावे द्वियकारात्मकं स्यादिति फलभेदो दृश्यते। तथा च न सामर्थ्यमिति। परंतु युटि कृते सिद्धान्ते भुग्युटावुवङ्यणाविति वार्तिकेन सिद्धत्वबोधनाद्यणादेशो न

यणादि न । जह्यतेत्यादावात औ णलः ( ७. १. ३४ ) इति न ॥ न चाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम् । वचनेनावयवत्वबोधनात् । तस्य चावयवत्वसादृश्ये पर्यवसानं बोध्यम् ॥ न चोक्तज्ञापकाद्वर्णग्रहणे ऽस्या अप्रवृत्तिरिति वाच्यम् । आने मुक् ( ७. २. ८२ ) इति सूत्रे भाष्ये ऽकारस्याङ्गावयवस्य मुगित्यर्थे पचमान इत्यत्र तास्यनुदात्तेत् ( ६. १. १८६ ) इति स्वरो न स्यादित्याशङ्क्याद्युपदेशभक्तस्तद्ग्रहणेन ग्रहीष्यत इत्युक्तेरसंगत्यापत्तेः ॥ किंच ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यर्थे कुर्वन्नास्त इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य यदा-

भवति । परंतु यदागमन्यायेन तत्प्राप्तिः स्यात्तर्हि तद्वार्तिकवैयर्थ्यं स्यात् । तथा च सामर्थ्यात् दिदीये इत्यत्र यणादेशो न स्यादिति कल्पना स्यादित्यरुचेराह— जहारेति । न च उक्तज्ञापकाद्वर्णग्रहणे अस्या अप्रवृत्तिरिति वाच्यमिति । तथा सति भाष्यविरोधः । तथाहि— भाष्ये पचमान इत्यत्र 'आने मुक्' इति मुगागमविषये पक्षद्वयम्— अकारान्तं यदङ्गं तदवयवीभूतो योकारस्तस्य मुगागमः आने परे इति वैयधिकरण्येन वाक्यार्थः । अथवा अङ्गस्य योकारस्तस्य मुगागमो भवति आने परे इति सामानाधिकरण्येन वाक्यार्थः । तत्र संभवति सामानाधिकरण्ये वैयधिकरण्यस्य अन्याय्यत्वमिति न्यायं परित्यज्य प्रथमो वाक्यार्थो गृह्यते । तथा च पचमान इत्यत्र मुगागमे कृते पश्चात्तास्यनुदात्तेद्० ( ६।१।१८६ ) इति स्वरः कर्तव्यः । स च सुतरां कर्तुं न पार्यते । कुतः । मध्ये मकारेण व्यवधानात् । तथा च आने इत्यस्य अनुदात्तत्वं न स्यात् इत्याशङ्क्य अद्युपदेशभक्तस्तद्ग्रहणेन गृह्यते इत्युच्यते । तत्र हि उपदेशे अकारान्तं तस्य योकारस्तस्येति वक्तव्यमथवा उपदेशे योकारस्तस्मात्परं अनुदात्तं भवतीति वक्तव्यम् । तत्र यदि उपदेशे योकार इत्यर्थः तर्हि ह्यः ह्य इत्यत्र दोषः । यदि उपदेशे अकारान्तं गृह्यते तर्हि दीव्यमानेत्यत्र दोषः । तत्रापि उपदेशकाले अकारान्तत्वात् । किंचेति । ङमो ह्रस्वादचीति सूत्रे वाक्यार्थद्वयं विद्यते । ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडागमो भवति अथवा ह्रस्वात्परस्य ङमः परो योजादिस्तस्य ङमुडागमो भवतीति द्वितीयोर्थः । तत्र प्रथमे

१ A. C. K. M. T. इति न; B D G. H P. इति च न.
२ C G ज्ञापकेन वर्ण॰
३ A. D. K. अप्रवृत्तिरस्तिति वाच्यम् ।
४ G सूत्रस्थभाष्ये, M. सूत्रभाष्ये.
५ C. G P. T. ग्रहीष्यते, A. B D H. K. M. ग्राहिष्यते.

( ७. २. ४ ) णेरनिटि ( ६. ४. ५१ ) इत्यादि चरितार्थम्[1] ॥ अनागमकानां सागमका आदेशा इत्यस्य त्वयमर्थः । आर्धधातुकस्येडागम इत्यर्थे ज्ञाते नित्येषु शब्देष्वागमविधानानुपपत्त्यार्थापत्तिमूलकवाक्यान्तरकल्पनेनेडूहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति । एवं चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः ॥ स्थानिवत्सूत्रे च नेदृशादेशग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभावे चारितार्थ्यात् । किंचैवं सति[2] स्थानिवद्बुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानस्य (प० १२) इति परिभाषाया अप्राप्त्याडा[3]गमसहितस्य पिबाद्यादेशापत्त्या छावस्थायामडिति भाष्योक्तसिद्धान्तासंगतिः । स्थानिवद्भावविषये निर्दिश्यमानस्येति परिभाषायाः प्रवृत्तौ[4] तिसृणामित्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासंगतिः ॥ एङः

---

तथा च वर्णग्रहणेयं न्यायो न प्रवर्तते इति परास्तम् । अनागमकानां सागमका आदेशा इत्यस्य त्वयमर्थ इति । आर्धधातुकस्येडागम इत्यर्थे ज्ञाते शब्दस्य नित्यत्वेन तेषामागमादिविधानमनुपपन्नम् । अतो लोके पीनत्वान्यथानुपपत्त्या रात्रिभोजनं यथा अर्थापत्त्या लभ्यते तथा यथा शब्दानां नित्यत्वं युज्यते तथा आर्धधातुकस्येड् वलादेरित्यत्र कल्पना कर्तव्या । सा चेयमिडूहितबुद्धिप्रसङ्गे सेड्बुद्धिः कर्तव्येति । तथा च बुद्धेरेवानित्यत्वम् । न तु शब्दस्य । एवं च श्रौतस्थान्यादेशस्थले यथा आदेशकल्पना तथैवात्रापि नाम आगमागमिभावेपि बुद्धिविपरिणाम एव इति न नित्यत्वहानिः । एतल्लेखनप्रयोजनं तु यदागमन्यायस्यादेशग्रहणसामर्थ्यात् आनुमानिकादेशो यथा स्थानित्वं प्रतिपद्यते तेनैव सिद्धौ सत्यां पुनः यदागमस्य स्वीकारो न कर्तव्यः इति प्राचीनैः प्रतिपाद्यते । न च अलिविध्यर्थमस्य न्यायस्योपयोग इति वाच्यम् । परिच्छिन्नपरिमाणविषये अयं न्यायः न प्रवर्तते यथाजन्ताद्धस्यागमे कृते तस्याजन्तत्वेन न किंचित्कार्यं क्रियते । अतः स्थानिवद्भावेन सिद्धौ सत्यां यदागमपरिभाषा स्थानिवत्सूत्रेण गतार्था । परन्तु नैतद्युज्यते । स्थानिवत्सूत्रे चेति । ईदृशादेशग्रहणं नाम आगमागमिभावत्वस्य आनुमानिककल्पना । श्रूयमाणादेशविषये न स्थानिवत्सूत्रस्थ आदेशग्रहणं किंतु इको यणचीत्यादौ श्रौतस्थान्यादेशवद्भावो यत्र तत्रैव स्थानिवद्भावेन तद्बुद्ध्यैव कार्यजननात् । तथा च

१ A. D. G. H. चरितार्थत्वात्.
२ C. om. सति.
३ C. G. H. M. P. अप्राप्त्याडा°; B. अप्रवृत्त्याडा°.
४ A. C. G. M. परिभाषाप्रवृत्तौ, H. परिभाषाऽप्रवृत्तौ.

( ३. ४. ८६ ) इत्यादौ स्थानषष्ठीनिर्देशाचदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्याचास्य स्थानिवत्सूत्रग्रहणेन न दोषः ॥ आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इत्यचः परस्मिन् [ १. १. ५७ ] इत्यादेर्नासंगतिः । एतेन यदागमा इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम् ॥ एतत्सर्वं दाधा घ्वदाप् [ १. १. २० ] इति सूत्रे भाष्ये स्पष्टम् ॥ ११ ॥

नन्वेवमुदस्यादित्यादावुदः स्थास्तम्भोः पूर्वस्य [ ८. ४. ६१ ] इति पूर्वसवर्णापत्तिरत आह ।

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

षष्ठी स्थानेयोगा (१. १. ४९) इति सूत्रमावर्तते । तत्र द्वितीयस्यायमर्थः । षष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणमुच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसंबन्धेन युज्यते न प्रतीयमानमिति तेनेदं सिद्धम् ॥

साक्षान्निर्दिश्यमानत्वेन आदेशधारितार्थ्यम् । किंच स्थानिवत्सूत्रेण गतार्थत्वं गृह्यते तर्हि सिद्धान्ते व्यावृत्त्यभावान्निर्दिश्यमानपरिभाषा न प्रवर्तते । यदागमपरिभाषायाः निर्दिश्यमानपरिभाषा बाधिका । परंतु तद्बाधकत्वं न युज्यते । कथमिति चेत्प्रतिपादयामि । यथा निर्जरसावित्यत्र जराशब्दस्य ह्रस्वे कृते स्थानिवद्भावेन आबन्तत्वं स्वीकृत्य जरस् आदेशः क्रियते तत्र निर्दिश्यमानस्येति परिभाषा सिद्धान्ते न प्रवर्तते तथैव आनुमानिकागमागमिभावे आदेशग्रहणे न गृह्यते चेत्तर्हि अपिबत् इत्यत्र दोषः स्यात् । तत्र पाधातोर्लङि अडागमे पिबादेशः कर्तव्यः स च आगमविशिष्टस्य स्यात् । यदि आदेशग्रहणेन आगमागमिभावो गृह्यते तर्हि आगमविशिष्टस्य पिबादेशः स्यात् । सिद्धान्ते तु यदागमपरिभाषाया बाधिका निर्दिश्यमानस्येति परिभाषा । अतः पा इत्यस्यैव पिबादेशः । आदेशग्रहणेन ग्रहणात् । मत्याख्याने तु आगमविशिष्टस्य पिबादेशः स्यात् । तथा च लावस्थायामडागम इति सिद्धान्तासंगतिः । तथा च प्रत्याख्याने न युक्तमिति दिक् । इति शम् ॥

१ A. C. G. H. M. °सूत्रे ग्रहणेन.
२ A. H. M. दाधा घ्विति सूत्रे भाष्ये, G. दाधा घ्विति सूत्रस्थभाष्ये.
३ A. G. H. M. स्तम्भोरिति.
४ C. H. P. °मुच्चार्यमाणमुच्चार्यमाणस°; A. B. D. G. M. °मुच्चार्यमाणम°
५ P. °मिति तेनेदं; B. C. G. M °मित्यर्थस्तेनेदं H. °मित्यर्थः । तेनेदं ।

न चास्य च्वौ ( ७. ४. ३२ ) इत्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम्। जातिपक्षे दोषाभावात्॥ किंच न भूसुधियोः ( ६. ४. ८५ ) इति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः॥ इयङुवङोर्ङित्त्वं त्विवर्णोवर्णान्तधातुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय। रीङ्रिङोर्ङित्त्वं तु स्पष्टार्थमेव। एतेनेदं ङित्त्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमित्यपास्तम्॥ हयवरट्सूत्रस्थेनायोगवाहानामुपदेशोऽलोऽन्त्यविधिः प्रयोजनं वृक्षस्तत्र नैतदस्ति प्रयोजनं निर्दिश्यमानस्येत्येव सिद्धमिति भाष्येण विरोधात्॥ अनया परिभाषया येन विधिः ( १. १. ७२ ) इति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं यदागमाः ( प० ११ ) इति लब्धस्य च। तेन क्षुपद उदस्थादित्यादिसिद्धिः॥ अनया च स्वस्वनिमित्तसंनिधापितानामलोऽन्त्यस्य ( १. १. ५२ ) इत्यादीनां समावेश एव न बाध्यबाधकभावो विरोधाभावात्। नाप्येतयोरङ्गाङ्गिभाव उभयोरपि परार्थत्वेन तदयोगात्। अनेकाल्शित् ( १. १. ५५ ) इति सूत्रे सर्वस्यैतत्परिभाषाबोधित एव गृह्यते॥ यत्त्वादेः परस्य ( १. १. ५४ ) अलोऽन्त्यस्य ( १. १. ५२ ) इत्येतावेव तद्बाधकाविति तन्न। उदस्थादिति सूत्रविषयेऽस्याः पादः पत् ( ६. ४. १३० ) इति सूत्रे भाष्ये संचारितत्वात्। नाप्येतयोरियं बाधिका। एतयोर्निर्विषयत्वप्रसङ्गादिति ति विंशतेः ( ६. ४. १४२ ) इति सूत्रे कैयटः॥ अकज्विषये नायं न्यायः स्थानिवद्भावेनैव तन्मध्यपतितन्यायेन तद्बुद्ध्यैव कार्यजननात्॥ इयं चावयवषष्ठीविषयेऽपि। अत एव तदोः सः सौ ( ७. २. १०६ ) इति सत्वमतिस्य इत्यत्रोपसर्गतकारस्य न। निर्दिश्यमानयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयो न त्वतियूयमित्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम्॥ पादः पत् ( ६. ४. १३० ) इति सूत्रे षष्ठी स्थाने ( १. १. ४९ ) इति सूत्रे च भाष्ये स्पष्टैषा॥ १२॥

१ A. B. C. H. M. °भुधातुभ्रुवामित्यर्थेन; G. P. °धातुभ्रुवा°
२ B. C. ° योगवाहानामुपदेशो.
३ C सिद्ध इति.
४ B. भाष्येण सह. A. भाष्यविरोधात्।
५ A. C. G. H. M. नाप्यङ्गाङ्गिभाव; B. नाप्येतयोरङ्गाङ्गीभाव.
६ G. H. P. इत्येतावेतद्बाधकाविति.
७ G. सचरितत्वात्.
८ C. H. M. °युष्मदाद्यवयव°; B °युष्मदस्मदवयव° A. G. युष्मदस्मदाद्यवयव.

ननु चेतेत्यादौ ह्रस्वस्यैकारस्य प्रमाणत आन्तर्यादकारोऽपि स्यादत आह ।

**यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥ १३ ॥**

अनेकविधं स्थानार्थगुणप्रमाणकृतम् ॥ अत्र मानं षष्ठी स्थाने ( १. १. ४९ ) इत्यत ऐकदेशानुवृत्त्या स्थानेग्रहणेऽनुवर्तमाने पुनः स्थानेऽन्तरतमः ( १. १. ५० ) इति सूत्रे स्थानेग्रहणमेव । तद्धि तृतीयया विपरिणमय्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति संभवे स्थानत एवान्तरतम इत्यर्थकम् । तमब्ग्रहणमेवानेकविधान्तर्यसत्त्वागमकम् । स्थानतः स्थानेनेत्यर्थः ॥ तत्र स्थानत आन्तर्यमिकौ यण्णाचि ( ६. १. ७७ ) इत्यादौ प्रसिद्धमेव ॥ अर्थतः पद्दन् ( ६. १. ६३ ) इत्यादौ । स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्तात्तदर्थाभिधानसमर्थो यः स तस्यादेश इति तत्समानार्थतत्समानवर्णपादादीनां ते । तृज्वत्क्रोष्टुः ( ७. १. ९५ ) इति च ॥ गुणतो वाग्घरिरित्यादौ ॥ प्रमाणतोऽदसोऽसेः ( ८. २. ८० ) इत्यादौ ॥ स्थानेऽन्तरतमभाष्ये स्पष्टैषा ॥ १३ ॥

ननु प्रोढवानित्यत्र प्रादूहोढ ( ६. १. ८९. ३ ) इति वृद्धिः स्यादत आह ।

**अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥**

विशिष्टरूपोपादान उपस्थितार्थस्य विशेषणतयान्वयसंभवे त्यागे मानाभावोऽस्या मूलम् । अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यत इति संख्यायाः ( ५. १. २२ ) इति सूत्रे भाष्ये स्पष्टम् ॥ इयं वर्णग्रहणेषु नेति लस्य ( ३. ४. ७७ ) इत्यत्र भाष्ये स्पष्टम् । अत एवैषा विशिष्टरूपोपादानविषयेति वृद्धाः । एतन्मूलकमेव येन विधिः ( १. १. ७२ ) इत्यत्र भाष्ये पठ्यतेऽल्वैवानर्थकेन तदन्तविधिरिति ॥ किंच स्वं रूपम् (१. १. ६८)

१ A. G. H स्थाने योगेत्यत एक°

२ A. C. H. एकदेशानुवृत्तेः

३ B स्थानेग्रहणमनु° P. स्थानेग्रहणे पुनः

४ A. C. H. P. विपरिणमय्य, B. G. M विपरिणम्य, P. mentions the reading वाक्यभेदेन योज्यम्

५ A. M. इको यणचीत्यत्र; G. M. इको यणचीत्यादौ.

६ A. C G H. M. P. इयं वर्ण°; B. इयं च वर्ण°.

७ C. G M. P. इत्यत्र भाष्ये; A. B. H इति सूत्रे भाष्ये.

८ B. इति सूत्रभाष्ये.

इति शास्त्रे स्वशब्देनात्मीयवाचिनार्थो गृह्यते रूपशब्देन स्वरूपमेवं च तद्भुमयं शब्दस्य संज्ञीति तदर्थः । तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासंभवात्किंतु शब्दविशेषणम् । एवं चार्थविशिष्टशब्दः संज्ञीति फलितम् । तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥ १४ ॥

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्रान्महतः ( ६. ३. ४६ ) इत्यात्त्वापत्तिरत आह ।

## गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ १५ ॥

गुणादागतो गौणः । यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः । अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते । मुखमिव प्रधानत्वान्मुख्यः प्रथम इत्यर्थः । गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्यार्थारोपेण प्रवर्तते । एवं चाप्रसिद्धार्थ गौणलाक्षणिकत्वं चात्र गौणत्वम् ॥ तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव तत्र त्रिशब्दार्थस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात् ॥ किंचायं न्यायो न प्रातिपदिककार्ये किंतूपात्तविशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव । परिनिष्ठितस्य पदान्तरसंबन्धे हि गौर्वाहीक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्ञातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादावत इञः सिद्धय उपाचमित्यादि । न च प्रातिपदिकपदं तादृशमिति वाच्यम् । तेन हि प्रातिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायक ओत् ( १. १. १५ ) इत्यादावेतत्प्रवृत्त्या गोमवदित्यादौ दोषो न ॥ अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽन्तरङ्गत्वादीत्वपत्वे भवत एव । सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तत्रामकावित्यर्थके च न पत्वमाधे गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात् । अत एवा-

१ C °वाच्यार्थो.

२ B. तदुभयशब्दस्य A. C G. H. M. P. तदुभयं शब्दस्य, P. mentions the reading एतदुभयं शब्दस्य.

३ C. चार्थस्य विशिष्ट° A. G. H. M एवं चार्थविशिष्ट श°.

४ B. त्रिशब्दस्येत°. H G. M. त्रिशब्दार्थस्येतर.

५ B. °पस्थितिरिति.

६ G P. न पत्वमाधे; A. B. C. H. M. नेत्त्वपत्वे आद्ये; the latter reading is also mentioned by P.

७ C. अप्रसिद्धत्वात्, B. अप्रसिद्धत्वाच.

ग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपरमग्नेः स्तुत्स्तोमसोमाः ( ८. ३. ८२ ) इति सूत्रस्थं भाष्यं संगच्छते ॥ गां पाठयेत्यादौ मुख्यमोपदार्थस्य पाठनकर्मत्वासंभवेन विभक्त्युत्पत्तिवेळायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकत्वस्य ग्रहेणात्वं त्वं संपद्यतेऽमहान्महान्भूतस्त्वङ्भवतीत्यादिभाष्यप्रयोगे स्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ॥ किंच शुक्लामित्युक्ते कर्म निर्दिष्टं कर्ता क्रिया चानिर्दिष्टे इत्याद्युक्त्वेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्तैव कर्ताभ्याजैव क्रियेत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारकादिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः क्रियावाचकादिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षायां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि । एवमेतन्मूलकोऽभिव्यक्तपदार्था य इति श्लोकोऽपि पदकार्यविषयकः ॥ ध्वनितं चेदं सर्वादीनि ( १. १. २७ ) इति सूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्तिककृता पूर्वपर ( १. १. ३४ ) इति सूत्रेऽसंज्ञायामिति वदता सूत्रकृतान्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च ॥ अर्थाश्रये एतदेवं भवति शब्दाश्रये च वृद्धत्वे इत्योत्सूत्रस्थभाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायस्तद्रहितशब्दाश्रये च ते इत्यर्थो गोतः ( ७. १. ९० ) इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १५ ॥

---

१ M. सूत्रस्थं भाष्यमष्टमे संगच्छते.
२ C. °गौणत्वप्रतीताव°, P. mentions B's reading; A गौणार्थत्व
३ B. P. गौणार्थकत्वस्य ग्रहेण, A. C. गौणार्थकत्वग्रहेण.
४ G. पक्षे नु तदनापत्तिः
५ B. कर्तृ क्रिया चानिर्दिष्टे इत्युक्त्वे° G. चानिर्दिष्टा इत्याद्युक्त्वा.
६ B. and C. without Sandhi देवदत्त इत्यादौ, देवदत्त एव.
७ B. °सूत्रभाष्येण.
८ G. H. क्रियाद्यध्याहारे.
९ A. C. G. H. M. P. एवमेतन्मूलको; B. अत एव तन्मूलको.
१० B. P. सर्वादीनीति सूत्रे; A. C. G. H. M. सर्वादिसूत्रे.
११ C. G. H. M. °कृतान्वर्थसंज्ञया, B. °कृता चान्वर्थसंज्ञया.
१२ C. G. H. M. P. एतदेवं भवति. B. एतदेव भवति.
१३ C. H. °ोपादनस°.

नन्वलुगधिकारः प्रागानङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नमेकयोगनिर्दिष्टत्वात् । तथा दामहायनान्ताच ( ४. १. २७ ) इत्यादौ संख्याव्ययादेः ( ४. १. २६ ) इत्यतः संख्यादेरित्यनुवर्ततेऽव्ययादेरिति निवृत्तमिति चानुपपन्नमत आह ।

क्वचिदेकदेशोऽप्यनुवर्तते ॥ १८ ॥

एकत्रार्थे योगः संबन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थ इति पक्षात्तिः ( ५. २. २५ ) इति सूत्रे कैयटः । तावन्मात्रांशे स्वरितत्वप्रतिज्ञावलाल्लभ्यमिदम् ॥ स्पष्टा चेयं दामहायनान्ताच ( ४. १. २७ ) इति सूत्रे औतोऽम्शसोः ( ६. १. ९३ ) इति सूत्रे च भाष्ये पूर्वा च ॥ १८ ॥

ननु त्यदादीनामः ( ७. २. १०२ ) इत्यादिनेममित्यादावनुनासिकः स्यादत आह ।

भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥

अणुदित्सूत्रे ऽप्रत्यय इत्यनेन सामर्थ्यात्सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः । अत एवाणुदित्सूत्रे प्रत्ययादेशागमेषु सवर्णग्रहणा-

भाव्यमानेनेति । सामर्थ्यादिति । अप्रत्यय इत्यस्येत्यर्थः । तत्र हि न प्रत्ययः अप्रत्यय इत्यर्थः । एवं च प्रत्ययः सवर्णान् न गृह्णाति इति । अस्योदाहरणं तु सनाशंसभिक्ष उः । तेन चिकीर्षुः इत्यादौ न दोषः इति । परंतु अत्रोच्यते । चिकीर्षुरित्यादौ दीर्घस्याप्राप्त्या अप्रत्यय इति व्यर्थम् । तद्ग्रहणसामर्थ्याद् भाव्यमानेनेति । अयं हि सामान्यनिषेधः । तेन सूत्रप्राप्तं नाम ' अणुदित्० ' इति ग्रहणकशास्त्रेण प्राप्तं, जातिपक्षेण प्राप्तं, तथा गुणा अभेदकाः इत्यनेन प्राप्तं सर्वमपि निषिध्यते इति । तेन ' इमम् ' इत्यादौ न दोषः । भाष्येपि एतदुक्तमित्याह— अत एवेत्यादिना । तत्र हि अप्रत्यय इति किमर्थम् । सनाशंसभिक्ष उः इत्युक्त्वा

१ C. सख्यादेरिति वर्तते.

२ B. C. D. E. K. एकयोगनिर्दिष्टानामेकदेशो॰ Benares editions read एकयोगनिर्दिष्टानां क्वचिदेकदेशोनुवर्तते.

३ C. om. संबन्धः, but Kaiyata V. 2. 25 has this word.

४ P. इति सूत्रे च भाष्ये; C. इति सूत्रे भाष्ये; B. इति च भाष्ये.

५ P. mentions the reading अप्रत्यय इत्येतत्सामर्थ्यात्.

६ A. गुणाभेदकेन च.

७ C. E. प्रत्ययागमादेशेषु.

भावं प्रकारान्तरेणोक्तैत्यवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति तज्ज्ञापयति मवल्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहण नेति ॥ किंच ज्याद ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादात् ( ६. ४. १६० ) इति दीर्घोच्चारणमस्या ज्ञापकम् ॥ अणुदित्सूत्रे ज्यादादिति सूत्रे च भाष्ये स्पष्टैषा ॥ चोः कुः ( ८. २. ३० ) इत्यादौ भाव्यमानेनापि सवर्णग्रहणं विधेय उदिदुच्चारण-सामर्थ्यात् । एतदेवाभिप्रेत्य भाव्यमानोऽण्सवर्णान्न गृह्णातीति नव्याः पठन्ति ॥ १९ ॥

नन्वेवमदसोऽसेः ( ८. २. ८० ) इत्यादिनाम् इत्यादौ दीर्घविधानं न स्यादत आह ।

भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति ॥ २० ॥

दिव उत् (६. १. १३१) ऋत उत् (६. १. १११) इति तपरकरण-मस्या ज्ञापकम् ॥ तित्स्वरितम् (६.१.१८५) इति सूत्रे भाष्ये स्पष्टैषा ॥२०॥

---

'अत्यल्पमिदमुच्यते । अभ्यपदेशाटित्किन्मितः इति न वक्तव्यम्' इत्युक्तम् । पश्चादनभिधानाज्ज्ञापकादिप्रकारैः सवर्णग्रहणाभावमुक्त्वा व्यर्थत्वाद् भाव्य-मानेनेत्यादि ज्ञाप्यत इत्युक्तम् । अत्र प्राञ्चस्तु इयं परिभाषा अणुदित् इत्यस्य जातिपक्षस्य च निषेधिका न तु गुणा अभेदका इत्यस्यापि इति वदन्ति । ननु तर्हि इमम् इत्यादावननुनासिकः स्याद् इति चेन्न । तन्निरासार्थं 'गुणा भेदकाः' इति द्वितीया तद्बाधिका परिभाषा गृह्यते । तेन नात्र प्राप्तिरेवेति । ननु भेदका गुणाः इति यदि गुणा अभेदका इत्यस्याः बाधिका तर्हि बहवो दोषाः स्युः इति चेन्न । तौ द्वौ पक्षौ व्यवस्थितौ तेन न दोषः इति प्राचीनाः । कोत्र गुणः यद् भाव्यमानपरिभाषा गुणा अभेदका. इत्यस्य निषेधिका न इत्युक्त्वा प्राप्तानेकान् दोषान् परिहर्तुं अपरां परिभाषां गृहीत्वा तत्र व्यवस्थितत्वं च गृह्यते इति चेत्— त्यत् इत्यत्र हलः स्रंसनधर्मित्वादनुदात्तधर्मित्वादनुदात्त एवाकारो यथा स्यादित्येवमर्थं गुणा अभेदका इत्यस्य भाव्यमानपरिभाषा निषेधिकेति मन्यन्ते । ननु तर्हि कथं वार्यतेयं दोषः यतस्तैर्हि भाव्यमानेनेति निषेधः सर्वेषामेवोच्यते इति चेदुच्यते— त्यदादीनामः इत्यत्र अकार एकश्रुत्योच्चारित इति । सा चैकश्रुतिस्त्रिप्रकारा न तु स्वराभाववती । तेन त्यत्शब्देनुदात्तः द्विशब्दे स्वरितत्वमित्यादि यथासंभवं सत् क्रियते इति संभवत्यपि अस्या ज्ञापकमित्याह— किंचेत्यादिना— ज्य ईयसु भाव्यमानः अकारः दीर्घस्य दीर्घ इति दीर्घ एव स्यादिति आकारविधानं व्यर्थं सत् ज्ञापयति इमां परिभाषाम् । नव्याः दीक्षिताः । इति शम् ॥

१ A. D. K. इति पठन्ति नव्याः.

२ B. D. K. स्पष्टेयम्.

नन्तु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावाधादेशापत्तिरत आह ।

## वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

वर्णप्राधान्यविषयमेतत् । तत्त्वं च प्रत्ययलोपे ( १. १. ६२ ) इति सूत्रे स्थानिवत् ( १. १. ५६ ) इत्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतात्सिद्धम् ॥ वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं च । तेन गोहितमित्यादाववादि न चित्रायां जाता चित्रेत्यादावण्योऽकारस्तदन्तान्ङीबिति ङीप् च न ॥ इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥

नन्वतः कृकमि ( ८. ३. ४६ ) इत्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह ।

## उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥

इदमेवास्या ज्ञापकमिति कैयटादयः । कंसेत्तु न कंसोऽनभिधानात् ॥ प्रत्ययस्य लुक् (१.१.६१) इत्यादौ भाष्ये स्पष्टा ॥ ण्वुल्तृचौ (३.१.१३३) इत्यादौ भाष्ये व्युत्पन्नानीत्यपि । इदं शाकटायनादिरीत्या । पाणिनेस्तु व्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम् ॥ आयनेयी० ( ७. १. २ ) इति सूत्रे भाष्ये स्फुटमेतदेव ॥ २२ ॥

नन्तु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सनन्तत्वप्रयुक्तधातुत्वाबापत्तिरत आह ।

---

१ A. D. E. K. B. °लक्षणेनावादेशापत्ति°.

२ C. °विशेष्यतानिरूपं च.

३ C. ङीप्; A. D. E. K. B. P. ङीप् न; P. says that some books omit न.

४ A. युवोरनाकावित्यादौ भाष्ये स्पष्टेषा । P. says that युवोरनाकावित्यादौ is a wrong reading.

५ B. स्पष्टम्; P. स्पष्टेषा.

६ A. B. C. शाकटायनरीत्या.

७ P. स्फुटमेनदेव; A. D. K. B. C. स्फुटमेतत्.

८ C. E. देवदत्तादेः

९ C. E. सनन्तत्वप्रयुक्त°, A. D. K. B. सनन्तत्वादिप्रयुक्त°, P. सनन्तत्वादिप्रयुक्त°.

## प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥ २२ ॥

यस्मात्प्रत्ययविधिः ( १. ४. १३ ) इति सूत्रे यस्मात्प्रत्ययविधिस्तदादि प्रत्यय इति योगो विभज्यते । गृह्यमाण उपतिष्ठत इति शेषः । तेन तदाद्यन्तांशः[1] सिद्धः । तदन्तांशस्तु येन विधिः ( १. १. ७२ ) इत्यनेन[2] सिद्धः ।

---

गृह्यमाण उपतिष्ठते इति । गृह्यमाणे उपतिष्ठते इति द्वाभ्यां पदाभ्यामर्थः कार्यः इत्यर्थः । स च यथा प्रत्यये गृह्यमाणे सति 'प्रत्ययो यस्माद्विहितस्तदादि' इत्युपतिष्ठत इति । तदाद्यन्तांश इति । तदादिः अन्ते यस्य एतादृशः । प्रत्ययग्रहणे यस्मात्स विहितस्तदादिः इत्येकोंशः सिद्धः । ननु यत्र विशेष्यविशेषणभावस्तत्रैव तदन्तविधिः स्यादिति चेन्न । विशेष्यान्तरस्यासत्त्वेपि शब्दरूपमन्यद् विशेष्यं गृहीत्वा तदन्तविधिः कर्तव्य इति । ननु 'देवदत्ताश्चिकीर्षति इत्यत्र नैष दोषः विशिष्टस्य क्रियावाचकत्वाभावाद्' इति चेन्न । प्राधान्येन यत्र क्रियावाचकत्वं तत्रैव धातुत्वम् इति । ननु किमत्र प्रमाणम् । 'जीव प्राणधारणे' इत्यत्र धारणस्य क्रियात्वेपि प्राणधारणस्य क्रियावाचकत्वमिति । ननु विशेषणविशेष्यभावसत्त्वे तदन्तविधिर्भवत्येव किमर्थं तर्हि परिभाषायां तदन्तेत्यंशग्रहणमिति चेत्— यत्र विशेष्यं न स्यात्तत्रापि शब्दरूपं तदादाय तदन्तविधिः कर्तव्य एवेति अवधारणार्थं परिभाषायां तद्ग्रहणम् । एतत्प्रवृत्तिनिवृत्त्योः प्राचीननवीनयोर्विरोधः । प्राचीनास्तु द्वयोरपि अंशयोः प्रवृत्तिः प्रत्ययग्रहणे चापञ्चम्याः इति निषेधो द्वयोरप्यंशयोर्निवृत्तिं करोति इति । नवीनास्तु द्वयोरपि स्वातन्त्र्यादेकस्मिन्गतेप्यन्यस्य प्रवृत्तिः । ननु तदादिः इति बहुव्रीहिः कर्मधारयो वा इति चेद्, बहुव्रीहिरेव । ननु तदादिरित्यादिबहुव्रीहेर्योऽन्यपदार्थः तस्यैव विशेष्यत्वेन तदन्तविधौ सिद्धे किमर्थं शब्दरूपं विशेष्यमध्याहार्यमिति चेदुच्यते । तदादिरिति बहुव्रीहिः कर्मधारयो वा इति अनिश्चितत्वाद् विशेष्यासंभवः । अथवा तदादिरिति अन्यस्य ( अन्यपदार्थस्य ) विशेषणम् । अतः तस्मिन् इत्यस्य विशेष्यत्वासंभवादन्यनिरूपितस्येत्यर्थः । ननु तर्हि हल्ङ्याब्भ्य इत्यत्र कथं तादृक्संबन्ध इति चेद् बहुश्रेयसीति रूपसिद्ध्यर्थं तत्करणस्यौचित्यात् । तत्र हि ङ्याप्रौ यस्माद्विहितौ तदादितदन्तात्परं सुतिसीति हल् लुप्यते इत्यर्थे ङ्यन्तं श्रेयसी इति बहुश्रेयसीशब्दात् सुप्रत्यये हलो लोपो न स्यात् । अतस्तदादिरित्यंशस्य प्रत्ययविशेष्यं गृहीत्वा तदन्तविधिना अर्थः कार्यः । ततश्च पुनः शब्दरूपं विशेष्यं

---

१ P. E. तदाद्यन्तांशः; A. D. K. B. C. तदाद्यंशः.

२ A. D. E. K. C. इत्यनेन; B. इति सूत्रेण.

स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे ॥ यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात्तद्विशेषणत्वेन तदन्तविधिरिति तन्न। इयानित्यादौ तस्य तादृशसमुदायेन व्यभिचारेणाक्षेपासंभवात् ॥ यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदादीत्यन्तांशमात्रोपस्थितिरित्यङ्गस्य ( ६. ४. १ ) इति सूत्रे भाष्यकैयटयोः। एवं यत्रापि पञ्चम्यन्तात्परः प्रत्यय आश्रीयते तत्रापि तदादीत्यन्तांशोपस्थितिः। परंतु तत्र पञ्चम्यन्तता। अत एवेङ्ह्रस्वात् ( ६. १ ६९ )

गृहीत्वा तदन्तविधौ द्वौ तदन्तविधी भवतः। तथा च वाक्यार्थः— ङ्याबन्तो यः सुतिसीनां तदादिः तस्मात्परस्यापृक्तस्य हलो लोप इत्यर्थः। ङ्याबन्तो नाम ङ्यापौ यस्माद्विहितौ तदादितदन्तमिति। तेन बहुश्रेयसीति सिध्यति। प्राचीनास्तु प्रत्ययग्रहणे चापञ्चम्या इति परिभाषयात्र द्वावप्यंशौ नोपतिष्ठतः। तेन सुतिसीनां तदादिरित्यर्थाभावात् केवलं श्रेयसी इत्यस्य ङ्यन्तत्वेन हलो लोपमाहुः इति। तत्रापि यत्र केवलतदाद्यंशस्यैवोपस्थितिः तत्र कर्मधारय एव यथा एङ्ह्रस्वात्संबुद्धेरित्यत्र। अत्र प्रत्ययग्रहणे चापञ्चम्याः इति परिभाषया तदन्तांशनिषेधात् तदादेरित्यस्यैव लाभात् तदादिरिति कर्मधारयः। तेन संबुद्धिर्यस्माद्विहितः स य आदिः राम इत्यादिः तस्मात् परस्य हलो लोप इत्यर्थः। एवं केवलतदादेरित्यंशे कर्मधारयः। तदाद्यंशमात्रस्योपस्थितौ बहुव्रीहिरपि गृह्यते परंतु तद् प्राकिंचित्कम्। यथा अतो दीर्घो यञि इति। नन्वत्र प्रत्ययग्रहणे चापञ्चम्याः इत्यस्य कथं प्राप्तिः पञ्चम्यन्तत्वाभावादिति चेत्, आर्थिकस्यापि पञ्चम्यन्तस्य ग्रहणात्। अतोऽङ्गस्य दीर्घः स्याद्यञादौ सुपि इत्यत्र षष्ठीनिर्दिष्टस्यादेशा भवन्ति इति

१ A. E. P. शब्दरूपं; B. C. D. K. शब्दस्वरूपं.
२ B. °समुदायापेक्षात्त°.
३ C. om. तद्विशेषणत्वेन.
४ E. K. P. तन्न। इयानित्यादौ, C. तन्न। इयानित्यादौ; A. D. B. व्यतिरेके इयानित्यादौ.
५ B. तदादीत्यंश°. A. तदादेरित्यन्तांश.
६ B. D. भाष्यकैयटयोः स्पष्टम्।.
७ A. E. B. P. तत्रापि; C. तत्र.
८ C. D. E. तदादीत्यन्तांशोपस्थितिः; B. तदादीत्यंशोपस्थितिः. A. तदादेरित्यन्तांश°.
९ B. om. तत्र.

इति सूत्र एङन्तादित्यर्थलाभः ॥[2] अस्याः परिभाषायाः प्रयोजनान्तरं येन विधिः ( १. १. ७२ ) ईत्यत्र भाष्य उक्तं परमगार्ग्यायण इति । परमगार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो न विशिष्टात् । निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेऽपि वृत्तिर्भवत्येव। अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः॥ प्रत्ययमात्रग्रहण एषा न तु प्रत्ययाप्रत्ययग्रहण इत्युगितश्च ( ४. १. ६ ) ईति सूत्रे भाष्ये ॥ इयमङ्गसंज्ञासूत्रे भाष्ये स्पष्टा ॥ २३ ॥

येन विधिः ( १. १. ७२ ) ईति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यते ।

## प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्त-

---

भाष्यादत इति षष्ठी एव । परंतु कस्मात्पर इत्याकाङ्क्षायां आर्थिकस्य पञ्चम्यन्तस्य ग्रहणेपि स निषेधः । एवं चात्र निषेधात् केवलतदाद्यन्तांश एवोपस्थितः । ततः कर्मधारये सति यञादिप्रत्ययः यस्माद् विहितः स य आदिस्तस्य दीर्घः इति स्यात् । परंतु तन्न संभवति । एवं च क्वचित् केवलतदाद्यंशोपस्थितावपि बहुव्रीहिरिति फलितम् । प्रकृते तु द्वयोरंशयोः सत्त्वाद्बहुव्रीहिरेवेति । एवं यत्रापि पञ्चम्यन्तादिति यथा 'एङ्ह्रस्वात्' इत्यत्र तत्र केवलं तदादिरित्यंशस्यैव प्रवृत्तिः। परंतु विभक्तिविपरिणामेन तस्य पञ्चम्यन्तत्वं बोध्यम् । तेन एङन्तो ह्रस्वान्तश्च यः संबुद्धिस्तदादिः तस्मात् परं हल् लुप्यते इत्यर्थः इति । परमगार्ग्यायण इति । गार्ग्यस्य परमशब्देन समासे पश्चाद् यञिञोश्च इत्यनेन फक् । स च केवलगार्ग्यात् कथं कर्तव्यः। युक्तिविरुद्धमेतत् । अत आह–निष्कृष्य तावन्मात्रेणेति। नवीनमते समासे य एकार्थीभावः स एक एव। प्राचीनमते एकार्थीभावः प्रत्येकं भिन्नः। तेन परमशब्दस्य गार्ग्यशब्देन समासे एकार्थीभावः एकः, गार्ग्यस्य फक्प्रत्यये द्वितीयः इति। परंतु एक एव एकार्थीभावस्ततो वृत्तिर्न स्यात् । परंतु केवलगार्ग्य इत्यनेनापि वृत्तिर्भवति । भाष्यप्रामाण्यात् । विशिष्टात् प्रत्यये तु 'किति च' इति वृद्धिः अकारस्य स्यात् । न तु प्रत्ययाप्रत्ययग्रहण इति । यथा अत्वसन्तस्य० ( ६।४।१४ ) इत्यत्र अस् इति रूपं प्रत्ययस्य प्रातिपदिकस्य तथा धातोरपीति। तत्र नेयं परिभाषोपतिष्ठते । इति शम् ।

प्रत्ययग्रहणे चापञ्चम्याः । कार्यान्तरविधानायेति । किमत्र प्रमाणमिति

---

१ C. K. इत्यत्र भाष्ये, B. D. इति सूत्रे भाष्ये. A. येनविधिसूत्रे.

२ A. D. C. इति सूत्रे भाष्ये; B. इत्यत्र भाष्ये.

C. इति सूत्रे; E. इत्यत्र भाष्ये, B. इति सूत्रे भाष्ये.

विधिर्नेत्यर्थः। यथा रदाभ्यां निष्ठातो नः ( ८. २. ४२ ) इत्यत्र। तेन दृष-

---

चेद् फलितं ह्येतद्। यत्र प्रत्ययविध्यर्थमेव पञ्चम्यन्तात् परः प्रत्ययः स्यात् तत्र प्रत्ययग्रहणे यस्मादिति परिभाषाया अप्रवृत्तिरेव। यथा गुप्तिज्किद्भ्यः सन् ( ३।१।५ ) इत्यत्र। वाक्यार्थकाले सनः प्रत्ययत्वाप्रसिद्ध्या प्रत्ययग्रहणे यस्मादिति परिभाषा न। सनः प्रत्ययत्वं तु 'प्रत्ययः, परश्च' इत्यधिकारेण विधिसूत्रस्य गुप्तिज्किद्भ्यः सन् इत्यस्य यदैकवाक्यता स्यात्तदैव। एवं फलितमेव स्पष्टार्थं परिभाषात्वेनाह— यत्र पञ्चम्यन्तात्परः प्रत्यय इति। रदाभ्यां निष्ठातो नः इत्यत्रेति। रदाभ्यामिति पञ्चम्यन्तात् परः प्रत्ययः निष्ठातः कार्यान्तरविधानाय नत्वविध्यर्थं गृह्यते। अतोत्र प्रत्ययग्रहणेपि तदन्तांशस्य निषेधः क्रियते। तेन दृषत्तीर्णेत्यत्र दोषो न। तथा हि— तॄधातोः क्तः प्रत्ययः। ॠत इद् धातोः इत्यनेन इत्त्वे दृषद् तीर्ण् इत्यत्र नत्वं कर्तव्यम्। परं तत्र प्रत्ययग्रहणपरिभाषया द्वयोरप्यंशयोरुपस्थितौ निष्ठा यस्माद्विहिता तदादि तदन्तं यच्छब्दस्वरूपं तदवयवीभूतो यस्तकारः स च कीदृशस्तर्हि रेफदकाराभ्यां परः तस्य नत्वं स्यात् पूर्वस्य दकारस्य च। तथा च दृषत्तीर्णा इत्यत्र निष्ठा यस्माद् विहिता तदादि तदन्तं शब्दरूपं इति तदवयवीभूततौ तकारौ वर्तेते एको दकारात् परः अन्यो रेफात् परः। अतो द्वयोरपि नत्वं स्यात्, पर्यायेण वा प्रवृत्तौ धातुनकारस्यापि स्यादिति दोषः। परंतु प्रत्ययग्रहण इति परिभाषाप्रवृत्त्या तदन्तांशनिषेधात्। निष्ठा यस्माद् विहिता तदादि रेफान्तं यच्छब्दस्वरूपं तस्मात्परो यस्तकारस्तस्य इति वाक्यार्थात् प्रत्ययस्य तकारस्यैव नत्वं भवति इति न दोषः। अतः इयं परिभाषा अवश्यमभ्युपेयैव। ननु तदन्तांशोपस्थितौ दोषः स्यादित्युक्तं परंतु तदयुक्तम्। अन्त्यबाधेन्त्यसदेशस्य इति परिभाषया अन्त्यस्याकारस्य बाधे तत्सदेशस्यैव कार्यमिति न दोष इति चेन्न। दकारस्य विहितं नत्वं दृषद् इत्यत्र दकारस्य स्यात्। यतो निष्ठातः इति समासः। तत्र निष्ठाशब्दस्य निष्ठान्त इत्यर्थः। तेन सह समासे निष्ठान्तात्पूर्वस्य दकारस्य नत्वमित्यर्थे निष्ठान्तं तीर्ण इति तस्मात्पूर्वो दकारः दृषदित्यत्र तस्यापि नत्वं स्यात्। अतः प्रत्ययग्रहण इति परिभाषा आवश्यिकी। नन्वेवमपि निर्दिश्यमानस्यादेशा भवन्तीति परिभाषाया विद्यमानत्वाद्यथा अतिस्थः इत्यत्र उपसर्गतकारस्य सत्त्वनिवृत्तिः क्रियते तथात्रापि निर्दिश्यमानपरिभाषयाऽपि सिद्धिः शक्या। तथा हि— तदन्तांशोपस्थितावपि निर्दिश्यमान इत्यत्र प्रसज्यप्रतिषेधेनान्वयात् निष्ठा यस्माद्विहिता तदादि तदन्तं यच्छब्दस्वरूपं तदवयवीभूतोतः प्रतीयमानानवयवीभूतो यस्तकारः स च पुनः कीदृशस्तर्हि रेफदकाराभ्यां परस्तस्य नत्वं भवति पूर्वस्य

चीर्णेत्यादौ धातुतकारस्य न नत्वम् । तदन्तेत्यंशानुपस्थितावपि तदादी-त्यंशस्योपस्थितौ रेफदान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषस्तदंशानुपस्थितौ मानाभावात् । तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति द्वयचीर्णेत्यादौ

दकारस्य च इत्यर्थः । ततश्च तीर्ते इत्यत्र प्रथमतकारः प्रतीयमानावयवः अतः प्रत्ययतकारस्यैव नत्वे सिद्धे तदन्तांशोपस्थितावपि न दोष इति चेन्न । निर्दिश्यमानं नाम साक्षादुच्चारितं अधिकारलब्धं परिभाषोपस्थितं चेति । तथा च निष्ठान्तस्यापि निर्दिश्यमानत्वात् (प्रतीयमानभिन्नत्वात्) पूर्वस्यापि नत्वं स्यात् । अतः प्रत्ययग्रहणे चापञ्चम्याः इति स्वीकर्तव्यमेव । नन्वेवमपि पदार्थः पदार्थेनैवान्वेति न तु तदेकदेशेन इति, अथवा न ह्युपाधेरुपाधिर्भवति इति न्यायात् 'रदाभ्यां' इत्यत्र निष्ठायामन्वय एव न स्यात् इति । तन्न । विशेष्यविशेषणसंबन्धे हि चत्वारः प्रकाराः विशिष्टे वैशिष्ट्यम्, विशिष्टस्य वैशिष्ट्यम्, एकत्र द्वयम्, विशेषणविशेष्यत्वं चेति । तत्र क्रमेणोदाहरणानि । यथा–रदाभ्यां निष्ठातो नः० (८।२।४२), उतश्च प्रत्ययात्० (६।४।१०६), प्रत्ययस्थात्कात्० (७।३।४४), नीलमुत्पलं इति च । तत्र आद्ये निष्ठात्वविशिष्टे रदोर्वैशिष्ट्यं संबन्धः । द्वितीये स्वसंयोगपूर्व इति विशेषणवतः अकारस्य अङ्गे वैशिष्ट्यं संबन्धः । तृतीये तु एकस्मिन् अकारे एव प्रत्ययः स्यात् ककारात् पूर्वस्येति आपि परतः इति द्वयोरपि संबन्धः । चतुर्थं तु प्रसिद्धम् । तत्र विशिष्टे वैशिष्ट्यं इत्यनेन 'संस्पृश्यावयवास्ते तु युज्यन्ते तद्वता सह' इति न्यायेन निष्ठात्वविशिष्टतकारेऽन्वयः इत्येवं परिभाषाभावे दोषः स्यादिति परिभाषावश्यिकी एव । तदन्तेत्यंशानुपस्थितावपीति । प्रत्ययग्रहणे चापञ्चम्याः इति निषेधाद्यद्यपि तदन्तांशस्यानुपस्थितिस्तथापि तदादीत्यंशोपस्थित्या रेफदान्तात्परस्य निष्ठातस्य इत्यर्थाद् द्वयचीर्णा इत्यत्र न दोषः । अत्र प्राचीननवीनयोर्विरोधः । तत्र प्राचीनानामिदं मतम्— यत्र इत्यादि । तदन्तांशोपस्थितौ त्विति । यदीयं परिभाषा तदाद्यंशमेव निषिध्येत, अर्थात्तदन्तांशोपस्थितौ सत्यां, तर्हि उभयोः परिभाषयोः प्रत्ययग्रहणे यस्मात् प्रत्ययग्रहणे चापञ्चम्याः इत्यनयोरेकविषयत्वं स्यात् । यत्र प्रत्ययग्रहणे यस्मादिति परिभाषाप्रवृत्तिः तत्र द्वावप्यंशौ प्रवर्तेते, निषेधे च द्वयोरप्यप्रवृत्तिरिति । तदेतत् प्राचां मतं खण्डयति–तदंशानुपस्थितौ मानाभावादित्यादिना । तदादीत्यंशानुपस्थितौ प्रमाणाभावात् तदन्तांशस्यैव निषेध उचित इति तदाशयः । स्यतासी लृलुटोः

१ D. E. K. तदादीत्यन्तांशस्य°.

२ A. C. D. E. K. P. रेफदान्तात्परस्य; B. रेफदकारान्तात्परस्य.

३ A. D. C. P. दोषस्तदंशानुपस्थितौ; B. दोषस्तदाद्यंशानुपस्थितौ.

दोषः स्यादेव ॥ स्यतासी लृलुटोः ( ३. १. ३३ ) इत्यादौ लृलुटोः परयोरित्यर्थे नियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरि[1]त्यस्यावधित्वेनान्वयान्न तदन्तविधिः ॥ ङ्याब्भ्यः[2] ( ६. १. ६८ ) इ[3]त्यादौ तु न दोषस्तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पञ्चम्यन्तस्य प्र[4]त्ययविशेषणत्वाभावात् ॥ अ[5]ङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पञ्चम्यन्तस्य विशेषणत्वं स्पष्टमेव । अत एवोत्तमैकाभ्याम् ( ५. ४. ९० ) इत्यादिनिर्दे[6]शाः संगच्छन्ते ॥ २४ ॥

( ३।१।३३ ) इत्यत्र लृट् यस्माद्विहितस्तदादि तदन्तमित्यर्थः स्यात् । पञ्चम्यन्तस्य प्रत्यये सबन्धाभावात् प्रत्ययग्रहणे चापञ्चम्याः इत्यस्या अभावादिति । तत्र लृलुटोः परयोरित्युक्ते कस्मात्परयोरित्याकाङ्क्षा भवत्येव । ततश्च धातोरिति पञ्चम्यास्तत्रान्वय इति सुवचम्, इति न तदन्तग्रहणम् । अङ्गसंज्ञासूत्रे इति । यस्मात्प्रत्ययविधिरित्यत्र योगविभागात् केवल ' अङ्गम् ' इति सूत्रे इत्यर्थः । उत्तमैकाभ्यां चेति । अत्र सुपि चेति दीर्घः सिद्ध इत्यवधेयम् । ननु तिङतिङः इत्यत्र कुतस्तदन्तविधि. । अतिङन्तात परं तिङन्तमिति पञ्चम्यास्तत्रान्वयात् प्रत्ययग्रहणे चापञ्चम्याः इति निषेधात् इति चेत्सत्यम् । यत्राध्याहृतं विशेष्य तत्रैवेयं परिभाषा प्रवर्तते इति संकोचात्, अत्राध्याहाराभावात् न निषेधः । अत्र हि पदस्य पदात् (८।१।१६,१७) इत्यधिकारात् ' अतिङन्तात्परं तिङन्त पदं निहन्यते ' इत्यर्थात्, पञ्चम्या. प्रत्यये अनन्वयात् । संकोचे प्रमाणं किमिति चेदुच्यते । फलित एवायम् । यत्र विशेष्याध्याहारः तत्रैव पञ्चम्याः प्रामुख्येनान्वयो नैव भवति । किंच प्रत्ययग्रहणे यस्मात्० इति परिभाषाया. अध्याहृतं विशेष्य गृहीत्वा इति योंशः स एव मुख्यः अन्यस्तु सिद्धः । एव च ' अध्याहृतं विशेष्य ग्राह्य ' एवमर्थबोधिकेयं परिभाषा । अत एतदपवादत्वात् यत्रैतादृशो विषयस्तत्रैव निषेध. इति स्पष्टमेव । एवमध्याहृनसत्त्वे एवेयम् । तेन तिङतिङ इत्यत्र न दोषः । अत एव किमेत्तिङव्यय०, सुद्तिथो', आदेशप्रत्यययोः इत्यादौ न दोषः इति शम् ॥

१ C. °रित्यस्यावधि°, A. D E K B °रित्यस्यैवावधि°.

२ D. E. P. ङ्याब्भ्यः, A K. B C हल्ङ्याब्भ्य॰, P. mentions the latter reading.

३ B E K इत्यादौ न दोषः.

४ B E K. P प्रत्ययविशेषणत्वाभावात्, A. D C. विशेषणताभावात्.

५ C.P. अङ्गसंज्ञानसूत्रे तु, B D. संज्ञासूत्रेऽपि; P mentions the latter reading A. E. K. om तु

६ K. निर्देशः संगच्छते.

नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ घरूप ( ६. ३. ४३ ) इति ह्रस्वापत्तिरत आह ।

## उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २५ ॥

हृदयस्य हृल्लेखयदण्लासेषु ( ६. ३. ५० ) इत्यत्र लेखग्रहणात् । तत्र लेखेति न घञन्तमनभिधानात् । इयं च हृदयस्येति सूत्र एव भाष्ये स्पष्टा ॥२५॥

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रेवातिकारीषगन्ध्यापुत्र इत्यत्र ष्यङः संप्रसारणं पुत्रपत्योः ( ६. १. १३ ) इति स्यादत आह ।

---

नन्वेवं परमकारीषगन्धीपुत्रः इत्यत्रेवेति । अस्मिन्नवतरणे 'परमकारीषगन्धीपुत्रः इत्यत्रेव' इति दृष्टान्तः । परंतु दृष्टान्तः सिद्धः आवश्यकः । अयं तु नैव सिध्यति । कुत इति चेदुच्यते । करीष इव गन्धः यस्य सः करीषगन्धिः । उपमानाच्च इति इकारः समासान्तः । ततः करीषगन्धेरपत्यं स्त्री इत्यर्थे अण्प्रत्यये अणिञोरनार्षयोर्गुरूपोत्तमयोरित्यनेन ष्यङि करीषगन्ध्या इति रूपं सिध्यति । ततः परमा चासौ करीषगन्ध्या च परमकरीषगन्ध्या । तस्याः पुत्रः इत्यर्थे ष्यङः संप्रसारणं पुत्रपत्योस्तत्पुरुषे इत्यनेन संप्रसारणे कृते 'परमकारीषगन्धीपुत्रः' इति रूपं सिध्यति । परं त्वत्र संप्रसारणे कर्तव्ये ष्यङः इत्यस्य प्रत्ययत्वात् प्रत्ययग्रहणे यस्मादिति परिभाषया ष्यङ् यस्माद्विहितस्तदादि तदन्तं यच्छब्दस्वरूपं तस्य संप्रसारणं स्यात् पुत्रपत्योरुत्तरयोस्तत्पुरुषे इत्यर्थः स्यात् । ततश्च ष्यङ् यस्माद्विहितस्तदादि तदन्तं 'करीषगन्ध्या' इति तस्य पूर्वपदत्वं नास्ति, यत्पूर्वपदं परमकारीषगन्ध्या इति तस्य ष्यङन्तत्वं नास्ति । एवं चात्र संप्रसारणं न स्यादिति परमकारीषगन्धीपुत्रः इत्यस्य सिद्धिर्नैव भवति इति दृष्टान्तत्वेन ग्रहणासंभवादवतरणं न युज्यते इति भाति । अतः 'सिद्धस्य गतिश्चिन्तनीया' इति न्यायात् तत्कथंचिद् ग्राह्यम् । तद्यथा । वक्ष्यमाणायाः स्त्रीप्रत्यये चानुपसर्जने न इत्यस्याः परिभाषायाः द्वावंशौ–– 'स्त्रीप्रत्यये तदादिनियमो न' इति, तथा 'अनुपसर्जनस्त्रीप्रत्यये तदादिनियमोऽस्ति' इति च । तत्र सामान्यस्त्रीप्रत्यये तदादित्वाभावस्य सिद्धत्वेन गृहीत्वा 'ष्यङः संप्रसारणम्०' (६।१।१३) इत्यत्र तदादित्वाभावात् परमकारीषगन्ध्या इत्यस्यापि ष्यङन्तत्वात् संप्रसारणं भवति । ततः परमकारीषगन्धीपुत्रः इत्यस्य सिद्धत्वात् दृष्टान्तत्वेन संग्रहः इत्यवतरणं योजनीयम् । अथवा इवशब्दो भिन्नक्रमः । यथा 'नन्वेवं अतिकारीषगन्ध्यापुत्र इत्यत्रेव परमकारीषगन्ध्यापुत्र इत्यत्रापि स्यात्' इति वक्तव्यम् । यथा अतिकारीषगन्ध्यापुत्र इत्यत्र संप्रसारणं न भवति तथा परमकारीषगन्धीपुत्रः इत्यत्रापि न स्यादिति तदर्थः ।

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

विषयसप्तमी । य स्त्रीप्रत्यय स्त्रिय प्राधान्येनाह तत्र तदादिनियमो न । यस्त्वप्राधान्येनाह तत्र तदादिनियमोऽस्त्येवेत्यर्थ । प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेय तदर्थं प्रत्यनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम् ।

---

सिद्धान्ते त्विष्यते । अत आह—स्त्रीप्रत्यये चानुपसर्जने न । एव सर्वस्या परिभाषाया अवतरण युज्यत । प्रथमपक्षे तु एकस्यैवाशस्य । केय सप्तमी तदाह—विषयसप्तमीयमिति । एव च स्त्रीप्रत्ययविषयके शास्त्रे अनुपसर्जनविषयके लक्ष्य तदादिनियमो नेति द्वावप्यर्थौ पृथक्त्वेनाह – य स्त्रीप्रत्यय इत्यादिना । यत्र यत्र स्त्रीप्रत्ययस्तत्र तत्र द्वौ वाक्यार्थौ कार्यौ — तदादिविधिघटित तद्रहितश्च । ततानया परिभाषया तदाद्यशघटितवाक्यार्थ कुत्र ग्राह्यः रहितश्च कुत्र ग्राह्य. इति व्यवस्था कार्या । तथाहि— य स्त्रीप्रत्यय स्त्रिय प्राधान्येनाह तत्र तदादिनियमो न, नाम तदादिरहितवाक्यार्थेन लक्ष्यसिद्धि कार्या । यत्र च स्त्रीप्रत्यय अप्राधान्येनाह तत्र तदादिनियमोस्त्येव, नाम तदादिघटितवाक्यार्थेन व्यवस्था कार्या । यथा ष्यङ सम्प्रसारणमित्यत्र— ष्यङ् यस्माद्विहितस्तदादि तदन्त यच्छब्दस्वरूप तस्य सम्प्रसारण भवति इत्येको वाक्यार्थ । अपरस्तु ष्यङ् यस्माद्विहितस्तदन्त यच्छब्दस्वरूप तस्य सम्प्रसारण भवति इति । तत परमकारीषगन्धीपुत्र इत्यत्र ष्यङ् प्रत्यय स्त्रिय प्राधान्येनाह अतस्तत्र तदादिरहितवाक्याथन व्यवस्थापितत्वात् सम्प्रसारणादि भवति । अतिकारीषगन्ध्यापुत्र इत्यत्र स्त्रियमप्राधान्यनाह अतस्तत्र तदाद्यशघटितवाक्यार्थप्रवृत्त्या न सम्प्रसारणमिति । नन्वेवमपि अतिराजकुमारि इत्यत्र दोष । तथाहि कुमारशब्दाद् वयसि प्रथमे इति ङीप । राज्ञ कुमारी राजकुमारी, राजकुमारीमतिक्रान्त अतिराजकुमारि, अत्यादय क्रान्ताद्यर्थे इत्यनेन समास । अत्र गोस्त्रियोरुपसर्जनस्य इत्यनेन ह्रस्व कर्तव्य । परतु स्त्रीप्रत्ययशब्द स्त्रीप्रत्ययो यस्माद्विहितस्तदादि तदन्त यदुपसर्जन तस्य ह्रस्व स्यादित्यर्थात् अत्र ङीप् प्रत्ययो यस्माद्विहित तदादि तदन्त कुमारी इत्येव स्यात् । तस्योपसर्जनत्व नास्ति । यस्योपसर्जनत्व वर्तते राजकुमारी इति तस्य स्त्रीप्रत्ययान्तत्व नास्तीति ह्रस्वो न स्यादिति । उपसर्जनत्व द्विविध लौकिक शास्त्रीय च । लौकिक तु किंचिविशिष्टविशेष्यतानिरूपितप्रकारतापन्नत्वम् । तथात्र अत्यर्थनिष्ठविशेष्यतानिरूपितप्रकारता राजकुमारी इति प्रत्ययार्थस्य । अतस्तस्योपसर्जनस्योपसर्जनत्वम् । तथा शास्त्रीयमपि नियतविभक्तिकत्वेन राजकुमारी इत्यस्यैव । अत्र च शास्त्रीयविषयत्वादेव उपसर्जनत्वम् । एव यस्योपसर्जनत्व तस्य स्त्रीप्रत्ययान्तत्वं नास्ति । यस्य स्त्रीप्रत्ययान्तत्व वर्तते तस्योपसर्जनत्व नास्ति । एव अतिराजकुमारि इत्यत्र गोस्त्रियोरुपसर्जनस्य इति ह्रस्वो न सिध्येत् इति दोषापत्ति । ता परिहर्तुमाह—प्रत्यासत्त्या यस्येति । यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वं तदर्थनिरूपित अनुप-

तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दस्यातिशब्दार्थं प्रत्युपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः ॥ अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वम-

---

सर्जनत्वं यत्र तत्रेयं परिभाषा प्रवर्तत इत्यर्थः । अत्र राजकुमारिः इत्यत्र स्त्रीप्रत्ययान्तत्वं राजकुमारी इत्यस्य आनेयम् । परंतु अत्यर्थनिरूपितं एकविभक्ति चापूर्वनिपाते इति उपसर्जनत्वम् । अतः स्त्रीप्रत्यये चानुपसर्जनेनेत्यनेन तदादिनियमात् स्त्रीप्रत्ययान्तत्वं तस्य न स्यात् । परंतु उपर्युक्तप्रत्यासत्त्या अत्र यन्निरूपितमुपसर्जनत्वं तावतः स्त्रीप्रत्ययान्तत्वेनावश्यकत्वम् । अतः यावतः स्त्रीप्रत्ययान्तत्वमानेयं तावतः अनुपसर्जनत्वात् तदादिनियमाभावेन राजकुमारी इत्यस्य स्त्रीप्रत्ययान्तत्वाद् गोस्त्रियोरित्यनेन ह्रस्वसिद्धिः । अत एव अत्र परिभाषायामिति । अस्यां परिभाषायामनुपसर्जनत्वं कीदृशं विवक्षितं लौकिकमुत शास्त्रीयं तदाह—न शास्त्रीयमिति न शास्त्रीयमसंभवात् । तथाहि—विग्रहे यन्नियतविभक्तिकं तदुपसर्जनसंज्ञं स्यादिति तदर्थः । परंतु नियतविभक्तिकत्वं प्रातिपदिकस्य प्रत्ययान्तस्य संभवति न तु केवलप्रत्ययस्य । तथा च स्त्रीप्रत्ययस्योपसर्जनत्वमशक्यमतो लौकिकमेवात्रोपसर्जनत्वम् । ननु गोस्त्रियोरित्यत्र स्त्रीशब्दस्यैव ह्रस्वः स्यात् इति चेन्न । स्वरितत्वप्रतिज्ञाबलात् स्त्रीपदेन स्त्रीप्रत्ययान्तत्वमित्यर्थः । नन्वेवमपि किंचिद्विशिष्टविशेष्यतानिरूपितप्रकारतानापन्नत्वमिति यदनुपसर्जनत्वं तत्तु कुमारीशब्दस्यास्त्येव । तथा प्रत्ययान्तमपि तत् । अतः अतिराजकुमारि इत्यत्र ह्रस्वः स्यादिति नास्त्येव दोष इति चेन्न । गोस्त्रियोरुपसर्जनस्य इत्यत्र उत्तरपदस्य इत्यस्य संबन्धात् उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तं च उत्तरपदं तदन्तस्य ह्रस्वः स्यादित्यर्थात् । अत्रोत्तरपदं राजकुमारीति तस्योपसर्जनत्वात् न ह्रस्वः इति दोषः स्यादिति स्त्रीप्रत्यये चानुपसर्जनेनेत्यत्र यस्य समुदायस्येति प्रत्यासत्तिराश्रयणीयैव । गोस्त्रियोरुपसर्जनस्य इत्यत्र हि शास्त्रीयमेवोपसर्जनत्वमिति सिद्धान्तात् । तथा च शास्त्रीयमुपसर्जनत्व राजकुमारी इत्यस्यैव तस्य स्त्रीप्रत्ययान्तत्वाभावाद् ह्रस्वो न स्यादतः प्रत्यासत्त्यादि गृह्यते । ननु स्त्रीप्रत्यये चानुपेति परिभाषायां प्रत्ययग्रहणे यस्माद्० इति परिभाषया स्त्रीप्रत्ययो यस्माद्विहितस्तदादि तदन्तमित्यर्थलाभात् स्त्रीप्रत्ययान्तं चानुपसर्जनं यत्र तत्र तदन्तविधिर्नास्ति इत्यर्थात् शास्त्रीयोपसर्जनत्वेनापि स्त्रीप्रत्ययान्तकुमारीति अनुपसर्जनमेव इति तदादिनियमाद् ह्रस्वः स्यादेवेति कुतः शास्त्रीयोपसर्जनासंभव इति चेन्न । अस्याः परिभाषायाः प्रत्ययग्रहणे यस्मादिति परिभाषाया अपवादत्वाद्

---

१ B. E. D. °राजकुमारीशब्दार्थस्याति°.

२ A. D. K. C. शास्त्रीयमुपसर्जनम°; B. शास्त्रीयोपसर्जनत्वम°.

संभवात् ॥ अस्याः प्रत्ययग्रहणे ( परि० २३ ) इत्यस्या[1]पवादत्वात्तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपदसंबन्धेन स्त्रीप्रत्ययसामान्यग्रहणे विशेष[2]ग्रहणे च प्रवृत्तिर्न तु स्त्रीप्रत्ययात्स्त्रीप्रत्ययग्रहणे । ध्वनितं चेदमर्थवत्सूत्रे भाष्ये ॥ इयं च वाचनिक्येव ष्यङः ( ६. १. १३ ) इति सूत्रे भाष्ये स्पष्टा ॥ २६ ॥

---

यथा विधिसूत्रस्यार्थो निष्कलङ्को न भवति अतो निषेधसूत्रस्य प्रथमत एवार्थः क्रियते तथा अत्रापि प्रथमतः स्त्रीप्रत्यये चानुपसर्जने नेत्यस्या अर्थः कर्तव्यः। तत्र कर्तव्ये तदादितदन्तांशानुपस्थितिरेवेति। केवलस्त्रीप्रत्ययस्यानुपसर्जनत्वेनैव तस्याः प्रवृत्त्या तत्र शास्त्रीयोपसर्जनासंभवात्। तथा लोकोपसर्जनत्वे प्रत्यासत्तिः फलति। यथा माता पूज्या इत्युक्तौ संबन्धिशब्दत्वात्केनेत्याकाङ्क्षायां पुत्रेणेति फलति तथापि कस्याश्चित् पुत्रेण कस्यचिन्माता पूज्या इत्यर्थः स्यात् तथा च स्वसुतस्य माता स्वभार्यापि पत्युः पूज्या स्यादतो नियताकाङ्क्षैव किंनिरूपितं पूज्यत्वं इत्याकाङ्क्षायां यन्निरूपितं मातृत्वं तन्निरूपितमेव पूज्यत्वमिति प्रत्यासत्तिर्मनस्यायाति। तथात्रापि किंचिन्निष्ठविशेष्यतानिरूपित इत्युक्तौ एव कोन्यो ग्राह्यः इत्याकाङ्क्षा भवत्येव। ततः यन्निरूपितं स्त्रीप्रत्ययान्तत्वं तन्निरूपितमेवानुपसर्जनत्वमिति प्रत्यासत्तिः स्फुरति। अत्र परिभाषायां न शास्त्रीयमुपसर्जनत्वम्। असंभवात्। अत एव अतिराजकुमारिः इत्यत्र ह्रस्वसिद्धिरिति योजना कार्या न तु स्त्रीप्रत्ययात्स्त्रीप्रत्ययग्रहण इति। यत्र प्रत्ययः स्त्रीप्रत्ययः संभवति अस्त्रीप्रत्ययोपि तत्रेयं परिभाषा न प्रवर्तते इति ध्वनितमिति। भाष्ये हि कृत्तद्धितेति सूत्रे समासग्रहणं नियमार्थमित्युक्तम्। परंतु राजकुमारी इति समुदायस्य प्रत्ययान्तत्वेन अप्रत्यय इति निषेधात् न प्रातिपदिक इति संज्ञा इति समासग्रहणं विध्यर्थमित्युक्तम्। अप्रत्ययः इत्यत्र स्त्रीप्रत्यये चानुपसर्जने नेति परिभाषायाः प्रवृत्त्या तदादिनियमाभावेन प्रत्ययान्तत्वेन प्रतिषेधः स्यादिति समासग्रहणं विध्यर्थमेवावश्यकम्। नियमार्थमिति चोच्यते तत्सूचयन्ति भगवन्तो भाष्यकाराः स्त्रीप्रत्ययसामान्ये तद्विशेषे टाब्ङीब्ङीबादिषु इयं परिभाषा प्रवर्तते न तु स्त्रीप्रत्ययात् स्त्रीप्रत्यय इति। तथा चात्र केवलमप्रत्यय इत्येवोक्तम्। स च प्रत्ययः स्त्रीप्रत्ययः स्यात्ताद्धितोपि इति परिभाषाया अप्रवृत्तिः इति समासग्रहणस्य नियमार्थत्वं संगच्छते इति शम्॥

---

१ C. E. इत्यपवाद°.

२ P. विशेषग्रहणे च A. B. C. D E. K. विशेषग्रहणे वा; P. mentions the latter reading.

नन्वेवं तरप्तमपौ घः ( १. १. २२ ) इत्यादिना तरबन्तादेः संज्ञा स्यादत आह ।

**संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥**

सुप्तिङन्तम् ( १. ४. १४ ) इत्यन्तग्रहणमस्या ज्ञापकम् ॥ न च प्रत्यययोः पदसंज्ञायामपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसंभवाज्ज्ञापितेऽपि फलाभाव इति वाच्यम् । पदसंज्ञायाः स्वादिषु ( १. ४. १७ ) इति विषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्ययमात्रग्रहणत्वाभावात्[1] ॥ सुप्तिङन्तम् ( १. ४. १४ ) इति सूत्रे भाष्ये स्पष्टा ॥ २७ ॥

नन्ववतप्तेनकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावात्समासो न स्यादत आह ।

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम् ॥ २८ ॥**

अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके गतिरनन्तरः ( ६. २. ४९ ) इति सूत्रेऽनन्तरग्रहणं[2] ज्ञापकम् । तद्धयभ्युद्धृतमित्यादावतिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद् व्यर्थं सदस्या ज्ञापकम् ॥ न चाभ्युद्धृतमित्यादौ परत्वाद्गतिर्गतौ ( ८. १. ७० ) इत्यनेनाभेर्निघात एवेति वाच्यम् । पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः ॥ अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्धृत्याक्षिप्तधातुनिरूपितमेवानन्तर्यं गृह्यत इति न दोषः ॥ न चाभ्युद्धृतमित्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वाभावेऽपि[3] स्वरार्थं तदिति वाच्यम् । कारकाद्दत्त० ( ६. २. १४८ ) इति सूत्रे कारकादिति[4] योगं विभज्य गतिग्रहणमनुवर्त्य[5] कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमिति नियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः[6] । तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापक-

---

न चाभ्युद्धृतमित्यादौ अभिना समासे इति । अनन्तरग्रहणमन्यार्थमपि संभवति । तथा च कुतो ज्ञापकत्वमित्याह । चरितार्थं इति शेषेण योजनीयम् । तत् खण्डयति— कारकाद्दत्तेति । एवं च स्वरार्थमनन्तरग्रहणमावश्यकमित्यपा-

---

१ A. D. E. K. C. °ग्रहणत्वाभावात्; B. °ग्रहणाभावात्.

२ A. K. C. गतिरनन्तर इति सूत्रे; B. गतिरनन्तरसूत्रे.

३ C. °स्योदः पूर्वपदत्वाभावेऽपि; A. B. °स्योदोऽपूर्वपदत्वेऽपि.

४ A. C. इति सूत्रे कारकादिति; B. इति कारकादिति.

५ C. विभज्य गतिग्रहणं°; A. B. विभज्य तत्र गतिग्रहण°.

६ A. कृत्स्वरेणोदात्तत्व.

मेव ॥ यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव ग्रहणमपिशब्दात्तदसमभिव्याहृतस्य केवलस्यापीत्यर्थः । अन्यथानया कृद्ग्रहणविषये परत्वात्प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपिग्रहणम् ॥ अत एव सांकूटिनमिति गतिकारकोपपदानाम् (परि० ७५) इति कृद्ग्रहण इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिध्यति न तु संकौटिनमितीति पुंयोगात्० ( ४.१. ४८ ) इति सूत्रे भाष्योक्तं संगच्छते । अन्यथा तत्र केवलं कूटिनिन्त्येतस्यापीनुणन्तत्वात्ततोऽणि पाक्षिकदोषो दुर्वार एव स्यात् ॥

स्तमित्यर्थः। अत्र परिभाषायाम् 'अपि' शब्दो दृश्यते तदर्थमाह — यत्र गतिकारकसमभिव्याहृतमिति। एवं च यत्र गतिकारकसमभिव्याहाराभावः तत्रैव केवलस्य कृदन्तत्वेन ग्रहणं नान्यत्रेत्यर्थः। अन्यथेति। अन्यथा नाम एतादृशार्थाभावे तु कृद्ग्रहण इति परिभाषया अवश्यप्राप्तायाः प्रत्ययग्रहणे यस्मादिति परिभाषायाः बाध स्यादेव। एवं च तस्या विषयं परित्यज्य कृद्ग्रहणे इति परिभाषायाः पार्थक्येन विषयो नैव स्यात् इति तुल्यबलत्वाभावात् परत्वकथनं न युज्यते इति चेन्मैवम्। व्यावक्रोशी इत्यादौ कर्मव्यतिहारे णच् स्त्रियामित्यनेन विहितस्य णचः स्त्रीप्रत्ययत्वात् स्त्रीप्रत्यये चानुपसर्जनेनेति प्रतिषेधात् प्रत्ययग्रहणे यस्मादिति परिभाषाया अप्राप्त्या कृद्ग्रहणपरिभाषायाश्चारितार्थ्यं सुवचम्। ततश्चरितार्थयोरेकत्र प्रवृत्तौ परस्य प्राबल्यात् परैव कृद्ग्रहणपरिभाषा प्रवर्तते इति अपिशब्दग्रहणमावश्यकमिति। अत एव नाम गतिकारकसमभिव्याहारे केवलस्याग्रहणादेव 'सांकूटिनम्' इति सिध्यति। तत्र हि संपूर्वकात् 'कुट' परितापे 'कूट' आप्रदाने वा इत्यस्माद् धातोः अभिविधौ भाव इनुण् इत्यनेन इनुण् प्रत्ययः। ततश्च अणिनुणः इत्यनेन स्वार्थे अण् प्रत्ययो विहितः। परंतु अण् प्रत्ययः कर्तव्यः इति प्रश्ने कृद्ग्रहणे गति० इति परिभाषया 'संकूटिन्' इत्यस्मात् स कर्तव्यः। परंतु तत्र पूर्वशब्दस्य पूर्वपदमित्यर्थः। पूर्वपदशब्दस्तु समासस्य प्रथमावयवे रूढ एव। परंतु समासग्रहणात्प्राक् पूर्वपदत्वं नास्तीति इनुणन्तत्वं कूटिन् इत्यस्यैव स्यात् तस्माच्चाण् स्यात्। अतः गतिकारकोपपदानां० इति परिभाषया सुबन्तात् प्रागेव समासे सम् इत्येतस्य पूर्वपदत्वात् कृद्ग्रहणपरिभाषया

१ P. केवलस्यापीत्यर्थः; A. C. B. °पीति तदर्थः; P. mentions the latter reading.
२ B. सांकुटिमिति.
३ A. C. इति सूत्रभाष्योक्तं.
४ B. कुटिन्नित्यस्यापीनु°; A. कूटिन्नित्यस्यापि.

स्पष्टं चेदं सर्वं[1] समासेऽनञ्पूर्वे० ( ७. १. ३७ ) इति सूत्रे भाष्यकैयटयोः ॥ गतिरनन्तरः ( ६. २. ४९ ) इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानाच्चासमवधानेऽपि[2] केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् ॥ इयं च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे च न तु इदकृद्ग्रहण इत्यनुपसर्जनात् ( ४. १. १४ ) इति सूत्रे भाष्ये स्पष्टम् ॥ २८ ॥

---

तदन्तस्य इनुणन्तत्वाद्विशिष्टादेवाण् प्रत्ययो भवति । ननु गतिकारकोपपदानां० इति परिभाषायां कृद्ग्रहणेन विशिष्टस्यैव ग्रहणं स्यादिति चेन्न। समासकरणात् प्राक् पूर्वपदत्वाभावेन कृद्ग्रहणे० इति परिभाषायाः निमित्तोत्पत्त्यभावात् तस्या अप्राप्तिरेवेति न दोषः ॥ नन्वेवमपि पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण इति सिद्धान्तात् प्रथमत इनुण् प्रत्यय एव स्यात् । तस्माच्च स्वार्थे अणि 'संकोटिनं' इत्येव स्यात् इति दोषोस्त्येवेति चेन्न । 'पूर्वं धातुरुपसर्गार्थेन युज्यते ततः साधनेन तत उपसर्गेण' इति सिद्धान्तात् । अत्र पूर्वमुपसर्गार्थेन योगे इनुण्प्रत्यये च कृते अण् प्रत्ययः कर्तव्यः । परंतु अण् प्रत्ययः तद्धितः इति भिन्नवृत्तित्वात् पूर्वं यस्यार्थेन योगः संजातः तेन 'सम्' इत्यनेनैव योगः क्रियते ततश्च गतिकारकोपपदानां० इति समासे कृद्ग्रहणे इत्यत्र 'संकूटिन्' इत्यस्य इनुणन्तत्वेन ग्रहे च 'अणिनुणः' इत्यनेन अणि 'सांकूटिन' इत्येवं रूपं सिध्यति इति न दोषः ॥ ननु 'संकूटिन्' इत्यवस्थायां समासाणप्रत्यययोः कः कर्तव्यः इत्याकाङ्क्षायां अन्तरङ्गत्वात् समासः । तत्र हि 'अणिनुणः' इत्यस्य वाक्यार्थे कृते अण्प्रत्ययस्य स्वरूपज्ञाने च पश्चात्तत्प्रवृत्तिः । परंतु अत्रान्तरे अन्तरङ्गत्वात्समासो निवृत्त एवेति न दोषः इति शब्देन्दुशेखरे । एवं कृदन्तेन समासे कृते विशिष्टादेव 'संकूटिन्' इत्यस्मादण् । कृत्सामान्यग्रहणे 'कर्तृकरणे कृता बहुलम्' इति कृद्विशेषग्रहणे च अणिनुणः इत्यादि तत्रैवेयं न तु अणादिषु । स हि तद्धितोपि कृदपि संभवति तत्र न प्रवर्तते इति तेन कौम्भकारेय इत्यादि सिध्यति । तथा बहुसुरागिणी इत्यत्र 'इनः स्त्रियाम्' इति कप् न । स हि णिनि-प्रत्ययः काश्यपकौशिकाभ्यां० इत्यनेन विहितस्तद्धितोपीति । अतः कृत्सामा-ग्रहणे० इत्याद्यावश्यकमेवेति शम् ॥

---

1 A. C. om सर्वं.

2 C. °विधानात्तःसमवधाने; B. °विधानात्समवधाने.

## पदाङ्गाधिकारे तस्य च तदन्तस्य च ॥ २९ ॥

पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः। येन विधिः (१.१.७२) इत्यस्यायं प्रपञ्चः । तेनेष्टकचितं पक्वेष्टकचितमित्यादाविष्टकेषीकामालानां चित० ( ६. ३. ६५ ) इति ह्रस्वो महान्परममहान्परमातिमहानित्यादौ सान्तमहतः ( ६. ४. १० ) इति दीर्घः सिद्धः। अत एव तदुत्तरपदस्येति पाठोऽयुक्त इति भाष्ये स्पष्टम् ॥ अत्र पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च॥ पादस्य पदाज्याति० ( ६. ३. ५२ ) इत्यत्र न तदन्तग्रहणं लक्ष्यानुरोधादिति सर्वं येन विधिः ( १. १. ७२ ) इत्यत्र भाष्ये स्पष्टम् ॥ २९ ॥

नन्वेवमस्यापत्यमिरित्यादावदन्तप्रातिपदिकाभावादिञ् न स्यादत आह ।

## व्यपदेशिवदेकस्मिन् ॥ ३० ॥

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी । यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः स तेन तुल्यं वर्तते कार्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्तव्यमित्यर्थः । तेनाकारस्यादन्तत्वान्न

---

नन्वेवमस्यापत्यमिरित्यादौ सर्वत्र विशेष्यसत्त्वे तदन्तविधौ वासुदेववाचकादकारात् तस्यापत्यम् इत्यर्थे अत इञ् इत्यनेन इञ् प्रत्ययो न स्यात् । अदन्तत्वाभावात् । स यथा स्यादित्याह–व्यपदेशिवदेकस्मिन्निति । विशिष्टोऽपदेशो व्यपदेशः। सोऽस्यास्तीति व्यपदेशी व्यपदेशीव। व्यपदेशिवत् निमित्तसद्भावान्मुख्यः व्यवहारः यस्य स व्यपदेशी मुख्यव्यवहारवान्। यस्तु तादृशमुख्यव्यवहारनिमित्ताभाववात् अत एव अविद्यमानमुख्यव्यवहारः स तेन तुल्यं नाम मुख्यव्यवहारवता तुल्यं वर्तते कार्यं प्रति कार्ये कर्तव्ये। अविद्यमानमुख्यव्यवहाराभाववतोपि मुख्यः व्यवहारः कर्तव्य इत्यर्थः। अवयवावयविभावसंबन्धाभावात्

---

१ C. तस्य तदन्तस्य च, P. reads तस्य as his remarks on Paribh. 30 show.

२ B. om. च.

३ A. मालानामिति.

४ A. B. D. E. K. G. H. M. N. P. महान्परममहान्परमातिमहा°, C. महान्परममहानतिमहा°.

५ A. C. D. दीर्घः सिद्धः, B. E. K. G. H. M. N. दीर्घश्च सिद्धः.

६ A. B. C. D. E. K. G. H. M. N. P. नन्वेवमस्या°, P. mentions the reading नन्वेवमप्यस्या°.

७ A. C. E. K G. H. M. N. P. मुख्यो व्यवहारो; B. M. मुख्यव्यवहारो.

८ P. reads अकारस्यादन्तत्वान्न क्षतिः ।

  

क्षतिः ॥ एकस्मिन्नित्युक्तेः समासंनयन आकारस्य नादित्वं दरिद्राधाताविकारस्य नान्तत्वम् । अन्यथा समासंनयने भव इत्यर्थे वृद्धाच्छः ( ४. २. ११४ ) दरिद्रातेरिवर्णान्तलक्षणोऽच स्यात् । अत एव हरिष्वित्यादौ सोः पदत्वं न । लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिञ्ज्येष्ठकानिष्ठत्वादिव्यवहारो[3]ऽयं मे ज्येष्ठः कनिष्ठो मध्यम इति किन्त्वेकपुत्रसत्त्व एव ॥ अनेन चाशास्त्रीयस्याप्यतिदेशः । अत

---

तत्र तत्र मुख्यव्यवहारो न भवति । अतोनया परिभाषया अवयवावयविभावस्यातिदेशः कर्तव्यः । तद्धर्मसंपादकद्वितीयशून्ये असहायेपि मुख्यवत् कार्यं कर्तव्यमित्यर्थः । एवं च अदन्तत्वरूपधर्मसंपादकद्वितीयशून्ये अकारेपि तद्धर्मातिदेशादिञ् प्रत्ययः सिध्यति । अत्राकारस्य अन्तत्वं नास्ति समुदायाभावात् । समुदाये तु दक्ष इत्यादौ अवयवी समुदायः अवयवोऽकारः, तस्यान्तत्वे तु अदन्तत्वं सुयोज्यम् । केवलाकारे तु अवयवावयविभावसंबन्धाभावाददन्तत्वं न स्यात् । अतो व्यपदेशिवद्भावः क्रियते इति इः इति रूपं सिध्यति । एकस्मिन्नित्यस्योपयोगं दर्शयति—समासन्नयन आकारस्य नादित्वमित्यादिना । आदित्वं नाम सत्यन्यस्मिन्यस्मात्पूर्वो नास्ति तत्त्वम् । अत्र तु आकारस्यादित्वं व्यपदेशिवद्भावादूह्यम् । परंतु व्यपदेशिवद्भावः ससहायत्वाच्च । यत्र अवयवावयविभावो न स्यात्तत्रारोपः न तु तादृशसंबन्धसत्त्वेऽपि । अतोऽत्र तादृशसंबन्धसत्त्वान्न व्यपदेशः । अतो न आकारस्यादित्वम् । तथा अन्तत्वं नाम सत्यन्यस्मिन्यस्मात्परो नास्ति तत्त्वम् । पूर्ववदत्रापि अवयवावयविभावसत्त्वान्न व्यपदेशेन अन्तत्वम् । ननु तद्धर्मसंपादकद्वितीयशून्यत्वमसहायत्वमिति ग्रहे समासन्नयन इत्यत्र वृद्धसंज्ञारूपधर्मसंपादकद्वितीयशून्यत्वाभाव एव इति व्यपदेशिवद्भावः कथं न इति चेन्न । आकारस्य वृद्धित्वेपि आदित्वाभावाद् वृद्धत्वं नायाति । अतोत्र केवलमादित्वमानेयम् । तच्च ससहायत्वान्नेति सुवचम् । अतो यथायथं छप्रत्ययः अच् प्रत्ययश्च न भवति । अत एव समुदाये व्यपदेशिवद्भावाभावादेव हरिषु

---

१ C. P. समासंनयन आकारस्य, B समासंनयनाकारस्य. A. D. E. G. H. K. M. N. समासंनयने आकारस्य.

२ C. °सत्त्वे नैकस्मिञ्ज्ये°; A. B. D. E. K. G. H. M. N. सत्त्व एकस्मिन्न ज्ये°.

३ A. C. D. E. K. G. H. M. N. ऽयं मे ज्येष्ठ. कनिष्ठो मध्यम; B. ऽयमेव ज्येष्ठकनिष्ठमध्यम.

४ A. B. D. K. H. P. किन्त्वेकपुत्रसत्त्व एव; C. E. G. M. N. °किन्त्वेकपुत्रत्व एव; P. mentions this reading.

एयेयायेत्यादावेकाच्त्वनिबन्धनद्वित्वसिद्धिः। अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वमियानित्यादौ कार्यकालपक्षे तद्धितान्तत्वनिबन्धनप्रातिपदिकत्वं च सिध्यति। अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात्॥ यत्तु योऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथेयायेत्यादावर्थवतो धातोरयं वर्णरूप एकोऽजिति कैयटस्तन्न। तस्यैकपदर्गित्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात्। एकपदर्गि-

इत्यादौ केवलप्रत्ययस्य पदत्वं न। ननु मनोरमायां दीक्षितैः 'अर्थवत्सूत्रे प्रत्ययप्रतिषेधाभावेपि न दोषः व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वात्सिद्धेः' इति वदतां खण्डनार्थं प्रत्ययग्रहणे यस्मात्स विहितः० इत्युत्तरं दत्तम्। एवं च तन्मते शास्त्रीयस्यैव अनया परिभाषया अतिदेशः इति तदाशयो दृश्यते। अत्र तु लौकिकत्वात् 'अनेन चाशास्त्रीयस्याप्यतिदेशः' इत्युच्यते इति कथम् इति केचन वदन्ति परंतु मम युक्तम्। दीक्षितवचनस्य 'अनया अन्तत्वादिसापेक्षधर्मस्यैवातिदेशः न तु स विहितो यस्मादिति तदादित्वमित्यादेः' इत्याशयात्। लोके एकपुत्रसत्त्वे एव एकस्मिञ्ज्येष्ठत्वादिव्यवहारः न तु बहुपुत्रसत्त्वे इति दृष्टान्तानुरोधेन शास्त्रेपि असहाय एवैयम्। एवं लौकिकत्वादशास्त्रीयस्याप्यतिदेशः। अत एव इयायेत्यत्र इण् धातोः लिट्तिप्णलादिषु कृतेषु द्वित्वे कर्तव्ये एकाच्त्वरूपधर्मः इकारस्यावश्यकः। स चाशास्त्रीयः। परंत्वस्या लौकिकत्वात् तस्याप्यतिदेशाद् द्वित्वसिद्धिः। अच्त्वं तु अक्षरसमाम्नायपठितत्वाच्छास्त्रीयम्। एकः अच् यस्मिन् इति बहुव्रीहिघटितो धर्मोऽशास्त्रीय एव। तादृशस्याप्यतिदेशादत्र द्वित्वसिद्धिः। तथा धातुत्वप्रातिपदिकत्वादिसिद्धिरिति। इयाय इत्यत्र द्वित्वसिद्धिर्व्यपदेशिवद्भावादेव। स च व्यपदेशिवद्भावः कथं भवति स कैयटेनोक्तः। तन्मतं खण्डयन्नाह–

यत्तु योऽर्थवांस्तत्र इत्यादिना। धातुसंज्ञा हि अर्थविशिष्टस्य भवति। अतोऽत्र न केवलमिकारमात्रे धातुत्वमपि तु अर्थविशिष्टे तद्। अतः अर्थविशि-

१ A. C. D. E. K. G. H. M. N. °वेकाच्त्वनिबन्धन°; B. °वेकाज्निबन्धन°.

२ A. B. C. D. °ङ्गत्वं व्यतिस इत्यादौ स इत्यस्य पदत्वमियानि°; P. says that the words व्यतिसे—पदत्वम् are a wrong reading. G. E. K. N. भू इत्यस्याङ्गत्वमिरियानित्यादौ.

३ A. C. D. E. K. G. H. M. N. वर्णरूप एको; B. वर्ण एको.

४ A. B. C. D. E. K. G. H. M. N. P. मुख्यव्यवहारसत्त्वात्; P. mentions the reading मुख्यव्यवहारत्वात्.

त्यत्रार्थेन युक्तो व्यपदेश इति भाष्य उक्तम् । ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽवयव इत्यर्थ इति तदाशयः ॥ तस्मादेकस्मिंस्त-द्धर्मारोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहारो यथा च शिलापुत्रकस्य शरीर-मित्यादावेकस्मिन्नारोपितानेकावस्थाभिः समुदायरूपत्वाद्यारोपेणैतस्य शरीर-मित्यादिव्यवहारस्तथात्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम् ॥

टस्य एकाच् अवयवः इकारः इति वक्तव्यम् । तत्रापि च यदा इकारे अज्व्यवहारः कर्तव्यस्तदार्थस्य त्यागः कर्तव्यः । अन्यथा अर्थसहितस्यापि अच्त्वमेव स्यात् । एवमच्त्वव्यवहारकाले अर्थस्य त्यागेन एकाच्त्वव्यवहारे च उपादानेन 'इकारस्य एकाच्त्वनिर्देशाद् द्वित्वं सिध्यति' इति तद्युक्तम् । भाष्ये इयाय इत्यत्र व्यपदेशिवद्भावाद् द्वित्वसिद्धिरित्युक्तत्वात् । ननु अत्रापि कैयटेपि व्यप-देशिवद्भावादेव सिद्धिरुक्ता इति चेदुच्यते । शब्देनात्र व्यपदेशिवद्भावात् सिद्धिरि-त्युच्यते परंतु अत्र भाष्योक्तरीत्या मुख्यव्यवहार एव भवति । तथा हि । एकपदा ऋक् इति वाक्यम् । यजुर्वेदे यत् तत् इत्यादय एव ऋचो वर्तन्ते । तद्वाचक एव एकपदा ऋक् इति शब्दः । एकं पदं यस्यामित्यर्थः । परंतु सोर्थो न युज्यते । अतः पूर्वोक्तकैयटवत् अर्थविशिष्टाया एव ऋक्त्वव्यवहारात्तदवयव एकं पदं यस्यामित्यर्थः । न च एकपदा ऋगित्यर्थोस्त्विति वाच्यम् । तथा सति एकपदं ऋगिति प्रयोगः स्यात् । अतोत्र बहुव्रीहिरेवाश्रयणीयः । ततश्च अर्थस्य त्यागो-पादानाभ्यामेव मुख्यव्यवहारः इत्युक्तम् । एवं चार्थस्य त्यागोपादानाभ्यां यो व्यवहारः स मुख्य एव । तथा च इयाय इत्यत्रापि कैयटरीत्या मुख्यव्यवहार एव स्यात् । भाष्ये तु इयायेत्यत्र व्यपदेशिवद्भावाद् द्वित्व-सिद्धिरित्युक्तम् । अतः कैयटोक्तमयुक्तम् इति । कैयटोक्तरीत्या असिद्धिरपि कुतः इति चेदुच्यते । धातोरवयवस्यैकाचो द्वित्वमुक्तम् । अत्र पूर्वोक्तरीत्या एकाच्त्वेपि सावयवो यस्य एतादृशोन्यः कश्चिद् धातुत्वेन दर्शयितुं नास्त्येव इति एकाच्त्ववि-शिष्टधातोरभावाद् द्वित्वासिद्धिः । अतः कैयटोक्तमयुक्तमेव । अर्थेन युक्तो व्यप-देशिवद्भावः इत्यस्यार्थः ( अर्थाचें ग्रहण केल्यासळें व्यपदेशिवद्भाव झुळला )। एकस्मिन्नेव ज्येष्ठत्वादीनां सापेक्षाणामारोपणेन यथा शिलापुत्रकस्य शरीरमित्यत्र शिलापुत्रत्वमन्यत् तथा च शरीरत्वमन्यत्, एवं एकस्मिन्नेव शिलापुत्रके उपल-मूर्तौ व्यापकव्याप्यानेकावस्थाभिर्वृत्तिभिः समुदायावयवरूपाद्यारोपणेन यथा व्यवहारस्तथाऽत्र इयाय इत्यत्र व्यपदेशिवद्भावेन एकाच्त्वोपपत्तिरिति लौकिक-

१ A. C. D. E. K. G. H. M. N. शब्दमात्ररूपं; B. शब्दमात्रं रूपं.

२ B. शिलापुत्रकस्य.

न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र भू इत्यस्याङ्गत्वानापत्तिः ससहायत्वादिति वाच्यम्। शपमादायाङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्त्वेऽप्येकपुत्रस्य तस्मिन्नेवायमेव ज्येष्ठ इत्यादिव्यवहारवत् ॥ न चैवं निजौ चत्वार एकाच इति भाष्यासंगतिरिकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम्। एकस्मिन्नित्यस्यापर्यालोचनया तत्प्रवृत्तेः ॥ अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाप्यसहायत्वमुपलक्ष्यते । अर्थबोधकेन शब्देन

न्यायसिद्धेयं परिभाषेति। न चासहाय एवैतत्प्रवृत्तावीति । नन्वेवमसहाय एवैतत्प्रवृत्तौ भवति इत्यत्र भू + अ + ति इत्यवस्थायां गुणे कर्तव्ये भू इत्यस्य अङ्गत्वं न स्यात्। तद्धर्मसंपादकस्य भू अ इति द्वितीयसमुदायस्य सत्त्वात्। अङ्गसंज्ञायां हि प्रत्ययो यस्मात् क्रियते तदादि शब्दस्वरूपमावश्यकम्। अत्र तु भू इत्यस्मादेव प्रत्ययः स आदिर्यस्य एतादृशः समुदायो नास्त्येवेति अङ्गत्वं न स्यात्। उपर्युक्तससहायत्वाद् व्यपदेशिवद्भावोऽपि नैव स्यात्। तथा च गुणो न स्यादिति चेन्न। असहायत्वं न केवलं तद्धर्मसंपादकद्वितीयरहितत्वम् अपि, तु तत्कार्यविधायकशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तसमुदायघटितत्वाभाववत्त्वमिति । अत्र च तत्कार्यमित्यनेन न केवलमङ्गसंज्ञा अपि तु शब्निमित्तकाङ्गसंज्ञा, तद्विधायकशास्त्रं यस्मात्प्रत्ययविधिरिति, तदुद्देश्यतावच्छेदके शपि परे धात्वादित्वं, तदाक्रान्तसमुदायोऽत्र नास्त्येव इति समुदायघटकत्वाभावादसहायत्वेन व्यपदेशिवद्भावः सिध्यति ॥ ननु अभावः प्रतियोगिसापेक्षः। अत्र तत्कार्यविधायकशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तसमुदायघटकत्वं कुत्रापि नास्त्येव। यतः शपि परे धात्वादित्वं एतादृशः समुदायोऽशक्य एव। तथा च अभावस्य प्रतियोगिसापेक्षत्वादत्र च प्रतियोगिन एवाभावात्तदभाववत्त्वं वक्तुमशक्यमिति चेन्न। बौद्धप्रतियोगिकल्पनात्। शशशृङ्गत्वाभावः वन्ध्यापुत्रत्वाभाव इतिवत्। एवं शब्निमित्तकाङ्गसंज्ञायां कर्तव्यायां भू इत्यस्यासहायत्वाद् व्यपदेशिवद्भावप्रवृत्त्या अङ्गसंज्ञा भवत्येव। लोके यथा कन्यासत्त्वेऽपि एकपुत्रे ज्येष्ठत्वादिव्यवहारो भवत्येवासहायत्वात् तथात्र शब्निमित्तकाङ्गसंज्ञायां भू इत्यस्य ससहायत्वाभावान्न क्षतिः। एवमसहाय एव

१ A. C. D. E. K. G. H. M. N. P. इत्यस्याङ्गत्वानापत्तिः, B इत्यस्याङ्गानापत्तिः.

२ A. C. D. E. K. G. H. M. N. लोके विजातीय°; B. लोकेऽपि विजातीय°.

३ A. B. D. K. G. H. M. N. P. न चैवं निजौ, C. E. नन्वेवं निजौ.

४ A. B. D. एकाजिति भा°.

व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः। प्रायोऽसहाय एवार्थवत्त्वात्॥ कुरुत इत्यादौ तशब्दाकारो ऽचामन्त्य इति व्यवहारे स आदिर्यस्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धिरित्यन्यत्र विस्तरः॥ ३०॥

ननु गर्गादिभ्यो विहितो यञ् तदन्तविधिना परमगर्गादिभ्योऽपि स्यादत आह।

## ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति॥ ३१॥

इयं च समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जमिति वार्त्तिकस्यप्र-

---

एतस्य प्रवृत्तिरिति सिद्धम्॥ असहाय एव एतत्प्रवृत्त्या 'निजौ चत्वार एकाचः' इति भाष्यं न संगच्छेत। 'णिजिर् शौचपोषणयोः' इत्यस्य द्वित्वे कर्तव्ये एकाचश्चत्वारः। नि निज् इ इज् इति भाष्ये उक्तम्। परंतु इकारस्य असहायत्वाभात्कथमेकाच्त्वेन तस्य ग्रहणम्। तथा च चत्वार एकाचः इति न संगच्छेत इति चेन्न। व्यपदेशिवदेकारस्मिन्निति परिभाषास्थस्य एकस्मिन्नित्यस्यापर्यालोचनया (स्याद्विपर्यौ दुर्लक्ष्य करून) तादृशोक्तिः। अपर्यालोचनायां को हेतुरिति चेदुच्यते। भाष्यकाराणां लक्ष्यैकचक्षुष्कत्वात्। सिद्धान्तेत्र वृक्षप्रचलनन्यायेन निज् इत्यस्यैव द्वित्वसंभवादे कार्त्स्न्येन चतुर्णां तदधिकानां वा ग्रहणेपि न दोषः। ननु शास्त्रे व्यपदेशिवद्भावः इत्युच्यते तत् कथमिति चेत् तदपि असहायत्वबोधकमेव। यतः प्रायः अर्थवत्त्वस्यासहायस्यैव सत्त्वात्। ननु इदं अर्थवत्पदं लाक्षणिकं इति चेन्नियतमेकत्र स्थितिरित्येव असहायस्यैव अर्थवत्त्वात् अर्थवता इत्यस्यासहायेनेत्यर्थः सुवच एवेति। प्रायग्रहणस्य फलं दर्शयति–कुरुते इत्यादौ इत्यादिना। तत्र टेरेत्वे कर्तव्ये टिसंज्ञावश्यकी। सा च व्यपदेशिवद्भावं विना अशक्यैव। अकारस्य च असहायत्वं न स्यादनर्थकत्वात्, परंतु प्रायग्रहणात् तत्संभवः। अत्र च ज्ञापकमिट ईटि इति सूत्रम्। अनेन इटः परस्य सस्य लोपो विधीयते। परंतु आर्धधातुकस्येट्० इत्यत्र वलादेरिति वर्तते। अत्र तु केवलसकार एव। एवं च वलादेरभावादिण् न स्यात्। अतो लोपविधानं व्यर्थं स्यात्। तज्ज्ञापयति—व्यपदेशिवदेकस्मिन् इति। ततश्च वलादित्वादिडागमो भवति। ततश्च लोपार्थं सूत्रमावश्यकम्। अन्यत्र फलम्–अस्यापत्यं इः। इति शम्।

ननु गर्गादिभ्यो यञित्यनेन विहितः यञ् परमगर्गादपि स्यादत आह–ग्रहणवता प्रातिपदिकेनेति। समासप्रत्ययविधौ प्रतिषेध इत्यत्र यत्प्रत्ययग्रहणं तदनुवाद एवायम्। ननु वार्तिके प्रत्ययग्रहणं वर्तते। अत्र तु प्रातिपदिकग्रहणम्। तथा चायं तस्यानुवादः कथमिति चेदुच्यते–प्रत्ययविधौ प्रतिषेध इत्युक्ते कस्मात् प्रत्ययविधाविस्याकाङ्क्षायां प्रातिपदिकादित्येव वक्तव्यम्। तथात्र प्रातिपदिक-

---

१ A. C. D. E. K. G. H. M. N. इत्यने; B. लमते.

त्ययांशानुवादः । अत एवायं प्रत्ययविधिविषय एव । अत एव येन विधिः ( १. १. ७२ ) इति सूत्रे भाष्ये प्रत्ययविधिभिन्नेऽप्तृन् ( ६. ४. ११ ) इत्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च संगच्छते ॥ अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथनवदस्य न कथनम् । सोऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्रातिपदिकसूत्र एव । ध्वनितं चेदमसमासे निष्कादिभ्यः ( ५. १. २० ) इति सूत्रे भाष्ये ॥ अत्र च ज्ञापकं सपूर्वाच्च ( ५. २. ८७ ) इति सूत्रम् । अन्यथा पूर्वादिनिः ( ५. २. ८६ ) इत्यत्र तदन्तविधिनैव सिद्धे किं तेन ॥ ३१ ॥

नन्वेवं सूत्रान्ताट्ठक् ( ४. २. ६० ) दशान्ताड्ढः ( ५.२.४५ ) एकगोपूर्वात् ( ५।२।११८ ) इत्यादेः केवलसूत्रशब्ददशन्शब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह ।

## व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्तव्ये पृथग्योगकरणमस्या ज्ञापकम् । न च इष्टादिभ्यः ( ५. २. ८८ ) इति सूत्रेऽनुवृत्त्यर्थं तथा पाठोऽत एवानिष्टीत्यादिसिद्धिरिति वाच्यम् । ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात् । एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च ॥ अत एव नान्तादसंख्यादेः ( ५. २. ४९ ) इति चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेव ॥ इयं च प्रातिपदिकग्रहण एव

ग्रहणे तदन्तविधिर्नेत्युक्तौ कुत्रेति प्रश्नो भवत्येव । तत्र प्रत्ययविधावित्यनेन वक्तव्यम् । एवं च द्वयोरैक्यमेव । तथा च तदनुवादत्वादियं च तद्विषये प्रत्ययविधिविषय एव । तथा च अस्याः परिभाषायाः अथ च समासप्रत्ययविधौ प्रतिषेधः इत्यस्य चैकविषयत्वादस्यास्तदन्तविधिनिषेधप्रकरणे अकथनमपि संगच्छते । समासप्रत्ययविधावित्ययं निषेधोऽपि विशेषरूपेण प्रकृतेरुच्चारण एव नतु भाग्वतेष्टञ् इत्यादौ । सामान्यप्रत्ययविधौ तु 'यान्ते प्रत्यये इत्यर्थः स्यात् ।

१ A. C. D. E. K. G. H. M. N. P. अत एवायं, B. अत एवेयं
२ A. D. K. H. अत् एव तदन्त.
३ B. केवलसूत्रशब्दे दशान्शब्दादिष्वपि.
४ A. C. D. E. K. G. H. M. N. एव कर्तव्ये; B. एव वक्तव्ये.
५ A. C. D. E. K. G. H. M. N. P. तथा पाठो, B. om. तथा.
६ A. C. D. E. G. K. M. N. तावत उत्तरत्रा°; B. तावतोत्तरत्रा°; Compare Nāgoji on the Bhāsya on I, 1, 72. H. तावत एव उत्तरत्रा°.

न तु प्रातिपदिकाप्रातिपदिकग्रहणे । तेनोगितश्च ( ४. १. ६ ) इत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम् ॥ इयं[1] ग्रहणवता ( प. ३१ ) इति च परिभाषा प्रत्ययविधिविषयैवेत्यसमासे निष्कादिभ्यः ( ५. १. २० ) इति सूत्रे[2] भाष्यकैयटयोः । तेनाहन् ( ८. २. ६८ ) इत्यादेः परमाहञ्शब्दे केवलाहञ्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥ ३२ ॥

ननु वान्तो यि ( ६. १. ७९ ) इत्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह ।

---

ननु यान्तो यीत्यादि । वान्तो यि प्रत्यये इत्यत्र यान्ते प्रत्यये इत्यर्थः स्यात् । ननु यान्ते प्रत्यये परत ओकारो नैव दृश्यते इति चेन्न । गोमयमात्ते गोमयात् । तमाचष्टे गोमययति इति टिलोपे पश्चात् क्विप्प्रत्यये णिलोपे च गोमय् इति जातम् । एवं यकारान्तप्रत्ययपरकत्वं संभवतीति दोषः । कौमुद्यां तु यादौ प्रत्यय इत्यर्थः कथं तदाह-यस्मिन्विधिस्तदादाविति । वाचनिकयेषा । भाष्ये येन विधिरिति सूत्रे भाष्ये वचनरूपेण पठितैषा इत्यर्थः । अत्र केचिद् ‘ रथवदयोश्च ’ इति सूत्रं ज्ञापकमिति वदन्ति । तद्धि कोः कत्तत्पुरुषेऽचीत्यत्र अजन्ते उत्तरपदे कदादेशः स्यादिति कद्रथः इत्यादीनां सिद्धौ सति व्यर्थं सदस्या ज्ञापकमिति । तन्न । रथेनाटति इति रथाट् । तस्माद् णिचि टिलोपे रथ् इति हलन्तं स्यात् । तस्मिश्च परे कोः कदादेशो न स्यात् । अतो न तज्ज्ञापकम् । तथा कद्रथच्छत्त्रम् इत्यत्र पूर्वं रथशब्दस्य छत्त्रशब्देन संबन्धे छे च इति तुकि रथशब्दस्याजन्तत्वाभावाद्रथवदयोश्च इति सूत्रं विना कदादेशो नैव स्यात् । पूर्वं कुशब्देन योगेपि संभावनया कदादेशो नैव स्यादिति रथवदयोश्चेति सूत्रमावश्यकम् । ननु तर्हि ‘ न ल्यपि ’ इति ज्ञापकमस्तु । तथाहि । अनेन हि ल्यपि परे ‘ घुमास्थादेरीत्वं न ’ इति ईत्त्वं निषिध्यते । परंतु तद्विधायके ‘ घुमास्थागा० ’ इत्यत्र तदन्तविधिना प्रथमात ईत्त्वपाज्झलन्ते क्ङिति आर्धधातुके इत्यर्थः स्यात् । तथा च ल्यपि परतः अप्राप्तिरेवेति निषेधो व्यर्थः ज्ञापयति- यस्मिन्विधिरिति । ततश्च झलादावित्यर्थाल्ल्यपि परेपि स्यादतो निषेधः इति स्वास्मिद्धारितात्पर्यम् । अन्यत्र फलं वान्तो यि० इत्यत्रापि यादावित्यर्थो भवति । इत्येवमेतज्ज्ञापनं स्यादिति केचित् । ननु घुमास्थादेरित्यत्र झलन्ते परे इत्यर्थे उदाहरणमेव न संभवेदिति चेन्न । पीतवान् इत्यादौ क्तवतुप्रत्यये परे संभवात् । एवं

---

1 A. C. G. H. K. M. N. P. इयं ग्रहणवता B. इयं च ग्रहणवता.

2 A. C. K. G. H. M. S. इति सूत्रे भाष्य°, B. om. सूत्रे.

## यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

तदन्तविधेरपवाद इयम्[1] ॥ वाचनिक्येषा येन विधिः ( १. १. ७२ ) इत्यत्र भाष्ये पठिता ॥ अस्याश्च स्वरूपसती सप्तमी निमित्तम् । अत एव नेड्वशि कृति ( ७. २. ८ ) इत्यादौ वशादेः कृत इत्यर्थलाभः ॥ इयं चार्धधातुकस्येट् ( ७. २. ३५ ) इति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेषणविशेष्ययोरुभयोः[2] सप्तम्यन्तत्व एव प्रवर्तते । तेन, ङः सि धुट्

च ज्ञापकसाध्याप्येषा इति चेन्न । 'प्रदाय च्छत्रम्' इत्यत्र 'छे च' इत्यनेन तुकि कृते ईत्त्वं स्यात्तन्निषेधार्थं न ल्यपीति सूत्रमिति चारितार्थ्याच्च ज्ञापकता । इदं चारितार्थ्यं नेति केचन वदन्ति तुकोऽसिद्धत्वादित्यादि तत्सर्वं तत्रैव तत्त्वप्रकाशिकायां द्रष्टव्यम् । तथा केचन ओसि च इत्यपि ज्ञापकमिति ब्रुवन्ति । तथा हि । बहुवचने झल्येदित्यत्र 'अनेकवचने झल्येत्' इति पाठः कार्यः । तथा च झलि इत्यनेन तदन्तविधावेकवचनभिन्ने झलन्ते सुपि परे अतोऽङ्गस्यैकारः स्यादित्यर्थे रामयोरित्यादि सिध्यत्येवेति ' ओसि च ' इति सूत्रमिमां ज्ञापयति इति । परंतु तन्न । तथा सति अव्याप्त्यतिव्याप्ती आगच्छतः । तथाहि । झलन्ते परे इत्यर्थे सिद्धान्ते इष्टं रामेषु इत्यत्रैत्त्वं न स्यादित्यव्याप्तिः । रामाः रामान् इत्यादिजस्शस्विषये अतिव्याप्तिश्च । न च प्रथमयोः पूर्वसवर्ण इत्यनेन पूर्वसवर्णदीर्घ एव स्यादिति वाच्यम् । नाप्राप्ते तस्मिन्नारभ्यमाणमेव तद्बाधकं स्यादतो नैतज्ज्ञापकम् । अथवा यञादौ विभक्तौ परतो भवेत्तर्हि ओस्येव इति नियमोपि संभवेत् । एवं च ज्ञापकं नैवेति बोध्यम् । अत आह–वाचनिक्येषेति अस्याश्चेति । अस्याः परिभाषाया निमित्तमाह–स्वरूपसती सप्तमी इति । अर्थतः सप्तमीभिन्नेपि स्वरूपतः सत्सप्तम्यामपीयं प्रवर्तते । अत एव नेड् वशि कृति इत्यत्र वशि इति स्वरूपतः सप्तमी अर्थस्तु षष्ठ्याः । तथापि तत्रैतस्याः प्रवृत्त्या वशादेः इत्यर्थो लभ्यते । विशेष्यविशेषणयोरुभयोः सप्तम्यन्तत्वे एवेयं प्रवर्तते इति । अत्र *प्रमाणमाह–वलादेरित्यादिग्रहणेति । अन्यथा* तत्रापि आर्धधातुकस्य वलि विशेषणे कृतेपि वलादेरित्यर्थः स्यादेवेति आदिग्रहणं व्यर्थं स्यात् । तेन ङः सि धुडित्यत्र उभयोः सप्तम्यन्तत्वाभावात् सादेरित्यर्थो न । ननु यद्येवं तर्हि तीषसहलुभरुषरिषः इत्यत्र ति इति विशेषणम् । आर्धधातुकस्येति विशेष्यम् । एवमुभयोः सप्तम्यन्तत्वाभावादत्रापि परिभाषाप्रवृत्तिर्नैव स्यादिति

१ C. K. E. H. M. S. °रपवाद इयम् ; B. D. °रपवाद एवायम्. A. G. रपवाद एवेयम् H. अपवादभूता वाच°.

२ C. D. °द्विशेषणविशेष्ययोरु° ; B. E. K. G. A. M. S. °द्विशेष्यविशेषणयोरु° A °ष्ययोः सप्तम्य°.

( ८. ३. २९ ) इत्यादौ सादेः परस्येति नार्थः॥ तीषसह ( ७. २. ४८ ) सेऽसिचि ( ७. २. ५७ ) इत्यादौ यथा तादेरित्याद्यर्थलाभस्तथा शब्देन्दुशेखरे निरूपितम्॥ ३३॥

घटपटं घटपटावित्यादिसिद्धय आह।

सर्वो द्वन्द्वो विभाषैकवद्भवति॥ ३४॥

द्वन्द्वश्च प्राणि ( २. ४ २ ) इत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः॥ चार्थे द्वन्द्वः ( २. २. २९ ) इति सूत्रेण समाहारेतरयोगयोरविशेषेण द्वन्द्वविधानान्न्यायसिद्धेयम्॥ तिष्यपुनर्वस्वोः ( १. २. ६३ ) इति सूत्रस्थं बहुवचनस्येति ग्रहणमस्या ज्ञापकम्। तदीदं तिष्यपुनर्वसवित्यत्र तद्याद्वृत्त्यर्थम्।

---

तादेः इति कथमर्थः। तथा सेसिचि कृत इत्यत्रापि सादेरित्यर्थः कथमिति तस्योत्तरमन्यत्र दत्तमेवेत्याह–शब्देन्दुशेखरे निरूपितमिति। तत्र ह्येवमर्थः। ति इति नार्धधातुकस्य विशेषणमपि तु वलादेरित्यत्र वल् इत्यस्य। तथा च तकाररूपोऽथवा सकाररूपो यो वल् तदादेरार्धधातुकस्येड् वा स्यादित्यर्थः। एवं च तदादेरित्याद्यर्थः नैतत्परिभाषालभ्यः। अपि तु आदिग्रहणं वर्तत एव। तकारस्य वल् इत्यत्र विशेषणत्वे तल्लाभः इति। ननु अयुक्तमेतत्। न ह्युपाधेरुपाधिर्भवति इति न्यायानुरोधेन विशेषणीभूते वलि तीत्यस्य विशेषणस्यासंभव एव। एवं च तादेरित्याद्यर्थोऽयुक्त एवेति चेन्न। गुणः कृतात्मसंस्कारः प्रधानस्य महते उपकाराय भवतीति लौकिकन्यायानुरोधेन तादृशसंबन्धस्यापि सुकरत्वात्। एवं तीषसह॰ सेसिचीत्यादौ सादेरित्याद्यर्थ उपलभ्यत इति शम्॥

---

१ A. C. D. E. G. H. S. सादेरित्याद्यर्थं°; B. K. M. तादेरित्यर्थं°.

२ B. घटं पटं घटपटावि°.

३ B. M. and Bhāṣya ad I. 2. 63. विभाषैकव°; A. C. D. E. K. G. H. S. विभाषयैकव°.

४ A. C. समाहारेतरयोरवि°; D. E. K. G. H. M. S. समाहारेतरेतरयोगयोरवि°.

५ A. D. G. H. इति सूत्रे भाष्ये तत्सूत्रस्थबहुवचन°.

६ B. बहुवचनग्रहणम्°. E. बहुवचनेतिग्रहणम्.

७ P. says that some read तत्फलमपि.

८ H. G. E. K. तदि इदं.

९ A. C. D. E. K. G. H. M. S. P. °पुनर्वसवित्यत्र तद्वयावृ°; B. पुनर्वसवित्यादिव्यावृ°.

न चैवमप्यत्र जातिरप्राणिनाम् ( २. ४. ६ ) इति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम् । तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिन इति वाच्यम् । आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् ॥ स्पष्टं चेदं तिष्यपुनर्वस्वोः ( १. २. ६३ ) इति सूत्रे भाष्ये ॥ अत एव द्वन्द्वश्च प्राणि ( २. ४. २ ) इत्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

## सर्वे विधयश्छन्दसि विकल्पन्ते ॥ ३५ ॥

व्यत्ययो बहुलम् ( ३. १. ८५ ) इति सूत्रे भाष्ये बहुलमिति योगविभागेन षष्ठीयुक्तश्छन्दसि ( १. ४. ९. ) इति सूत्रे वेति योगविभागेन चैषा साधिता ॥ तेन प्रतीपमन्य ऊर्मिर्युध्यतीत्यादि सिद्धम् । युध्यत इति प्राप्नोति ॥ ३५ ॥

ननु क्षियः ( ६. ४. ५९ । ८. २. ४६ ) इत्यादावियङ्कथमत आह ।

## प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

क्षिय इतीयङ्निर्देशोऽस्या ज्ञापकः ॥ तत्रैव प्रातिपादिकत्वनिबन्धनविभक्तिकरणादनित्या चेयमिति क्षियो दीर्घात् ( ८. २. ४६ ) इति सूत्रे भाष्ये स्पष्टम् ॥ ३६ ॥

ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षेऽपि कथं पदत्वमुभयत

---

ननु रामाविति । रामौ इत्यत्र औप्रत्यये वृद्धौ कृतायां स्वरे कर्तव्ये पदस्य पदादित्यधिकाराद् रामौ इत्यस्य पदत्वमावश्यकम् । तच्च सुप्तिङन्तं पदमित्यनेन वाच्यम् । परंतु यद्वा कार्यं तदा संज्ञा इति कार्यकालपक्षे सुप् यस्माद्विहितस्तदादितदन्तत्वाभावात्सुबन्तमत्र दुर्लभम् । तथाहि-रामौ इत्यत्रैकादेशे कृते प्रकृतिप्रत्ययसंमोह एव । अतः अन्तादिवच्चेत्यनेन

---

१ C. B. E K. M. S. °तद्वैकल्पिकत्वस्याप्य° ; B. G. तद्वैकल्पिकस्याप्य°. A. एतद्वैक°.

२ A. C. D. G. इत्यादेः; B. E. K. H. M. S. इत्यादौ.

३ D. E. K. G. P. विकल्पन्ते; A. B. C. H. M. T. विकल्प्यन्ते.

४ C. om. योगविभागेन-वेति. A छन्दसि वेति सूत्रे योग°.

५ P. कार्यकालपक्षेऽपि; A B. C. D. E. K. G. H. M. S. कार्यकालपक्षे; P. mentions the latter reading.

६ A. C. D. E K. G. P. °यत आश्रयणे ; B. °यताश्रयणे.

आश्रयणेऽन्तादिवत्त्वाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह ।

## एकदेशविकृतमनन्यवत् ॥ ३७ ॥

अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यसादृश्यनिषेधेऽन्यत्वाभावः सुतराम् । अत एव तादृशादर्थबोधः । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानाद्वतो बोधो न स्यात् । एवं च राम् इति मान्तस्य यस्माद्विहितस्तत्त्वमौ इत्यस्य पराादिवत्त्वेन सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम् ॥ छिन-

अन्तादिवद्भावेन औ इत्यस्य सुप्त्वं वाच्यम् । परं त्वेवमप्यादौ राम् इति मान्तं वर्तते नास्मात्प्रत्ययो विहित इति सुबन्तत्वं न स्यात् । न चान्तादिवद्भावेन औ इत्यस्य परादित्वमुक्तं तद्वत् पूर्वान्तत्वेन रामौ इत्यस्य यस्माद्विहितस्तत्त्वं कुतो नेत्याह— उभयत आश्रयणेऽन्तादिवत्त्वाभावादित्यादिना । एतद्धि कार्यकालपक्षे उक्तम् । शेखरस्थं कार्यकालपक्षे इति उपलक्षणं यतः यथोद्देशपक्षेप्यासिद्धिरेव । तथाहि । भविष्यति किंचिदनेन प्रयोजनमिति बुद्ध्या राम औ इत्यस्यामवस्थायां कृतं पदत्वमेकादेशे कृते वक्तुमशक्यं समुदायस्यान्यत्वात् । आनुमानिककल्पनया राम औ इत्यस्य स्थाने रामौ इत्यादेशः इत्युक्तौ स्थानिवद्भावेन पदत्वं स्यात् । स्थानिवत्सूत्रे आदेशग्रहणात् आनुमानिकादेशोऽपि स्थानिवदित्युक्तत्वादत्र पदत्वं स्यादिति वाच्यम् । परंतु तन्न अशास्त्रीयत्वात् । तथापि अन्तादिवद्भावेन औ इत्यस्य सुप्त्वे व्यपदेशिवद्भावेन यस्माद्विहितस्तदादित्वमिति वाच्यम् तदपि न । एतादृशधर्मस्य व्यपदेशिवद्भावेनानानयनात् । एवं च केनापि प्रकारेण पदत्वं वक्तुमशक्यमत आह–एकदेशेति । एकदेशविकृतिमच्छब्दस्वरूपमन्यवन्न । अन्येन तुल्यमन्यवत् । अन्यसदृशं नेति यावत् । एवं चान्यसदृशमेव यदि न, तर्हि अन्यं नेति किमु वक्तव्यम् । किं नामान्यत्वं किंवा अन्यसदृशत्वम् । स्वसादृश्याभाववत्त्वे सति स्वप्रतियोगिताभेदवत्त्वमन्यत्वम् । अन्यभिन्नभिन्नत्वे सति अन्यगतभूयोधर्मवत्त्वमन्यसदृशत्वम् । एवं च अन्यसदृशः अन्यभिन्नो नाम स्वपक्ष्य एव । एवं च स्वस्य मूलस्वरूपस्य राम इत्याद्यकारान्तस्य अन्यसदृशो नैकटिकः । तथा च तदभावत्वकथने अन्यत्वाभावोऽवक्तव्य एव । एवं च एकदेशविकृतं मूलस्वरूपतोऽविकलमिति बोध्यम् । एतादृशार्थादेव एकदेशविकृतादप्यर्थबोधः । अन्यथा शक्ततावच्छेदकेति । शक्तं राम इति । शक्तता रामे । शक्ततावच्छेदकं रेफोत्तरवर्ति-

१ C. E. H. परादिवत्त्वेन सुप्त्वमिति तदादितदन्त°, A. B. परादित्वेन सुप्त्वमिति तदन्त°.

२ A. G. M. °अर्थसमाज°.

पुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् ॥ अत एव प्राग्दीव्यतः ( ४. १. ८३ ) इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानुकरणमिदमित्युक्त्वा किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्याचार्यो भवत्येषा[1] परिभाषैकदेशविकृतमनन्यवदितीत्युक्तम्[2] । एतेनायं न्यायः शास्त्रीय[3]कार्य एव शास्त्रीयविकार एवेत्यपास्तम्[4] । विकृतावयवनिबन्धनकार्ये तु नायं[5] छिन्नपुच्छे शुनि पुच्छवत्त्वव्यवहारवद्विकृतावयवव्यवहारस्य[6][7] दुरुपपादत्वात् ॥ एवमक्तपरिमाणग्रहणेऽपि नायमुक्तयुक्तेः । एतथेन विधिः ( १. १. ७२ )

आकारोत्तरमकारोत्तरवर्ति-अकारत्वमिति मान्तेऽभावादर्थबोधो न स्यात् । आर्थसमाजग्रस्तम् । अर्थानां समूहः आर्थः । आर्थानां समाजः आर्थसमाजः । आर्थसमाजे ग्रस्त आर्थसमाजग्रस्तम् । एतेनायं न्यायः शास्त्रीयकार्य एवेति । अस्य न्यायस्य लौकिकत्वादेव अशास्त्रीयकार्ये अशास्त्रीयविकारे च अस्य प्रवृत्तिर्भवतीति शास्त्रीयकार्य एवेत्यपास्तम् खण्डितम् । विकृतावयवेति । विकृतावयवनिबन्धनविकारवान् योवयवः तन्निमित्तककार्ये अयं न्यायो नैव प्रवर्तते । तत्र लौकिकदृष्टान्तमाह-छिन्नपुच्छे शुनीति । अत्र विकारशब्देन रूपान्तरापत्तिर्हि विकारः इत्यर्थो न गृह्यते अपि तु भावरूपोऽभावरूपो वा योवयवस्य विपर्यय. स एवात्र विकारशब्देन लक्ष्यते । अन्यथा रामौ इत्यत्रैवाकारस्याभावाद्विकाराभावेन प्रकृतन्यायस्य प्रवृत्तिर्नैव स्यात् । अक्तपरिमाणग्रहणेति । परिच्छिन्नपरिमाणग्रहणे अदन्तत्वादौ नास्य प्रवृत्ति. । छिन्नपुच्छे पुच्छत्वव्यवहारस्य दुरुपपादत्वादेवेत्याह-उक्तयुक्तेः ... ध्वनितमिति । येन विधिस्तदन्तस्येत्यत्र भाष्ये ध्वनितम् । सर्वशब्दादकाचि सर्वकशब्दाज्जस्प्रत्यये कृते यद्यत्र सर्वनामसंज्ञा स्यात्तो जसः शी इत्यनेन शीभावे कृते सर्वके इति रूपं सिध्यति । परंतु अत्र भाष्यकारैरेवमुक्तम् । तन्मध्यपतित इति न्यायेन सर्वनामतेति । नन्वत्र तन्मध्यपतितन्यायोत्र किमर्थमङ्गीकृतः एकदेशविकृतन्यायेनेव सिध्येदिति । नैष

१ A. C. D. E. G. H. M. S. P. and Bhāṣya ad IV. 1. 83 भवत्येषा ; B. भविष्यत्येषा.

२ A. E. अनन्यवद् भवतीत्युकम् ; D. अनन्यवादित्युकम् ।

३ A. शास्त्रीयकार्ये एव शास्त्रीयविकारे एवायं न्याय इत्येतेन परास्तम् ।

४ H. एव चेत्यपास्तम् ।

५ C. E. K. G. H. नायं छिन्न° ; A. B. D. नायं श्छिन्न°.

६ C. D. E. K. G. H. पुच्छवत्त्वव्यव° ; B M. पुच्छत्वव्यव°.

७ P. °व्यवहारवद्वि° ; A. B. C. E. G. H. M. व्यवहाराभाववद्वि° ; P. mentions the latter reading.

इत्यत्र भाष्यकैयटयोर्ध्वनितम् ॥ यत्र त्वर्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोऽवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानल्पावयवत्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् ॥ केचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम्। तेनामीपादित्यादीसिद्धिः । स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः प्रथमयोः पूर्वसवर्णः ( ६. १. १०२ ) इत्यत्र कैयटेन दर्शितेत्यन्यत्र विस्तरः ॥ ३७ ॥

दोषः। उपसर्गस्य अक्परिमाणत्वात्। प्र परा इत्यादौ न्यायाप्रवृत्तौ एकदेशविकृतन्यायेन पदत्वे झलां जशोऽन्ते इत्यनेन जश्त्वं स्यात्। तन्निरासार्थमनाश्रयणमस्य न्यायस्य। केन च संकोचं स्वीकुर्युः। यो धर्मः एकदेशाविशिष्टे अन्तादिवच्चेत्यनेन संपादनार्हः स एकदेशविकृतन्यायेन नायाति। तेन गणेशः इत्यस्य सिद्धिः। आद्गुणः इति गुणैकादेशे कृते अन्तादिवच्चेत्यनेन परादिवद्भावे गण् इत्यस्य एकदेशविकृतन्यायेन ङमुडापत्तिस्तथा गण्णेश इति स्यात्। पूर्वोक्तसंकोचेन यः पदत्वरूपधर्मः एकदेशाविशिष्टे गणे इत्यत्र संपादयितुं शक्यः स एकदेशविकृतन्यायेन तदेकदेशे गण् इत्यत्र नायाति इत्युक्तत्वाद् ङमुड् न इति श्रीगणेशः इति सिद्धम्। इति शम् ॥

प्रथमप्रकरणं समाप्तम्।

१ A. इति सूत्रे भाष्य°.

२ A.C.D.G.H.M. केचित्तु लक्ष्यानुरोधा° ; B.E.E.K. कचिल्लक्ष्यानुसारा°.

पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥

पूर्वात्पर बलवत् । विप्रतिषेधशास्त्रात्पूर्वस्य पर बाधकमिति यावत् ॥३८॥

नन्वेव भिन्द्धकीत्यत्र परत्वाद्विना बाधितोऽकृजू न स्यादत आह ।

पुनःप्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥

अथ द्वितीय प्रकरणमारभ्यते । पूर्वपरेति । अत्र पट् प्रकाराः । परापेक्षया नित्यम्, अन्तरङ्गम्, अपवाद इति । नित्यापेक्षया अन्तरङ्गम्, अपवादश्च । अन्तरङ्गापेक्षया अपवादः ॥ अत्र नित्यान्तरङ्गे द्वे बले । परं तु न बलम् । तुल्यबलविरोधे पर कार्यं इति विधानात् । अयं पाठः प्राचीननवीनयोस्संमतः । परमप्राचीनानां तु न संमतः । तथा हि । तैर्बहिरङ्गादन्तरङ्गं बलीयः इति परिभाषा स्वीक्रियते । सा च बलीयस्त्वमात्रबोधिका । अतो यत्र एकस्य नित्यत्वमपरस्यान्तरङ्गत्वं तत्र परत्वाद् व्यवस्था । अत एव 'परत्वान्नित्यत्वाच्चातो येय इति प्राञ्चः' इति 'अतो येयः' ( ७।२।८० ) इत्यत्र सिद्धान्तकौमुद्यामुक्तम् । प्राचीननवीनाभ्यां बहिरङ्गादन्तरङ्गं बलीयः इति परिभाषा अन्तरङ्गपरिभाषायां भाव्यते । तेन नित्यस्यासिद्धत्वबोधनाच्च क्वापि अन्तरङ्गापेक्षया नित्यं बलीयः । अत एव 'यद्यप्यन्तरङ्गत्वात्पररूपं न्याय्यं' इत्यादिग्रन्थोतो येय इत्यत्र लिखितः । ननु परनित्येतिक्रमे प्रमाणं किमिति । उच्यते । विप्रतिषेधसूत्रात्पूर्वापेक्षया पर प्रबलम् । अत्र यदि पूर्वस्य नित्यत्वं तर्हि लौकिकन्यायेन तदेव प्रबलं भवति । अन्तरङ्गत्वे सति अन्तरङ्गपरिभाषया परस्यासिद्धत्वबोधनात्पूर्वमेव बलवत् । पूर्वस्यापवादत्वे सूत्रवैयर्थ्यात्पूर्वमेव बलिष्ठम् । अतः सर्वापेक्षया परस्य पूर्वपाठः । तथैव यत्रैकस्य नित्यत्वमपरस्यान्तरङ्गत्वं तत्र अन्तरङ्गपरिभाषया नित्यस्यासिद्धत्वबोधनादन्तरङ्गं बलिष्ठं भवति । अतः अन्तरङ्गापेक्षया नित्यस्य पूर्वं पाठः । एवमन्यत्राप्यूह्यम् । परोदाहरणं रन्धयति । अन्तरङ्गोदाहरण अदीदिपत् । अपवादोदाहरणं सर्वेषाम् ॥

अकृज् न स्यादिति । क्वचिद् भिन्द्धीत्यत्र परत्वात्तातङा बाधितो धिर्न स्यादिति पाठः । स च इत्थ योजनीयः । तातङा बाधितो धिर्न स्यादित्यनेन तातङ्घटितं रूपमनिष्टं फलति । ननु तातङो वैकल्पिकत्वेन तदभावे धेश्चारिताथ्र्यमिति तातङा बाधितो धिर्न स्यादिति ग्रन्थासंगतिरिति चेत्सत्यम् । उच्यते । भिन्तात् इत्यस्यानभिधानं स्वीक्रियते । तथा च भिन्द्धि इत्यत्र परत्वात्तातङि कृते

१ The reading भिन्द्धकीत्यत्र परत्वाद्विना बाधितोऽकृज्न स्यादत आह is supported by P. Dr. Kielhorn, supported by some Mss. reads नन्वेवं भिन्द्धीत्यत्र परत्वात्तातङा बाधितो धिर्न स्यादत आह.

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्रयादेशः स्यादत आह—

**सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ ४० ॥**[1]

तत्र क्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसंभवेन[2] बाधकाभावात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धिः। यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति। यदा तमुभौ युगपत् प्रेरयतो नानादिक्षु च कार्ये तदोभयोर्न करोति यौगपद्यासंभवात्। तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्यसंभवादप्रतिपत्तौ[3]

---

विभाषार्थं पुनःप्रसङ्गविज्ञानं स्वीक्रियते। ननु अनभिधानस्वीकारो न युक्त इति चेदुत्तरं दीयते—तुह्योस्तातङिति सूत्रे शाखीयविभाषा स्वीक्रियते। अत्रोपयोगात्। शास्त्रे तस्या एवोक्तत्वाच्च। तथा च तातङ् भवति पक्षे न भवति। अत्र न भवतीत्यनेन हेः स्थितिः संभाव्या। अत्र च परत्वाद् हेः स्थितौ कृतायां धिर्न स्यात्। अतः पुनःप्रसङ्गविज्ञानं स्वीक्रियते। अत्र विकल्पस्य निषेधे पर्यवसानं भवति। तातङा बाधित इत्यस्य तुह्योरिति सूत्रस्थविकल्पनिषेधे इत्यर्थः। इदमेव विकल्पस्य निषेधे पर्यवसानं नाम। विकल्पस्य निषेधे पर्यवसानं स्वीकृत्य 'न भवति इत्यनेन धेर्निषेधोऽयुक्तः, किंतु तातङो निषेधो युक्तः' इदमपि न युक्तम्। नञ उक्तार्थे शक्तिस्वीकारे गौरवात्। भिन्द्धकीत्यस्योपलक्षणम्। अत्र परत्वाद्धिना बाधितोऽकच् न स्यात्। अतः पुनःप्रसङ्गेति गृह्यते। तथा च न कोऽपि दोषः॥

त्र्यादेशः स्यादिति। स्त्रीत्वविशिष्टप्रातिपदिकान्तात् त्रिशब्दादामि त्रयादेशः प्राप्तः तिस्रादेशश्च प्राप्तः। पुंसि त्रयादेशश्चरितार्थः। तिस्रः इत्यादौ तिस्रादेशश्चरितार्थः। अतः परत्वात् तिस्रादेशे स्थानिवद्भावेन त्रिशब्दत्वात् त्रयादेशः स्यादित्यर्थः। गतौ। उभयोः प्राप्तौ। विप्रतिषेधे नाम परत्वाद् बाधे कृते। सकृत्। एकवारं यद् बाधितमित्यर्थः। चरितार्थयोः। रामाभ्यां रामेषु इत्यादौ। एकस्मिन्। रामेभ्यः इत्यादौ। बाधकाभावात्। बाध्यबाधकाभावात्। तृजादिवत्। ण्वुल्तृचावितिवन्नियमार्थमिति। प्रेष्यः। सेवकः। अप्रतिपत्तौ। संदेहे।

---

१ D. G. P. and Bhāṣya विप्रतिषेधे ; A. B. C. E. K. H. M. विप्रतिषेधेन.

२ A एकस्मिन्नुभयोः कार्ययोर्युगपदसंभवेन.

३ A. C. D. E. G. H. K. प्रवृत्त्यसंभवादप्रतिपत्तौ प्राप्ता°; B. °अप्रवृत्तौ प्राप्त°, M. प्रवृत्तिसंभवादप्रतिपत्तौ.

प्राप्तावपीदं पैरविध्यर्थं तंत्र कृते यदि पूर्वप्राप्तिस्तदपि भवत्येवेति पुन -प्रसङ्गविज्ञानसिद्धिरिति विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ॥ यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्य लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषयोर-चारितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गति-न्यायसिद्धि । अत्र पक्ष एतन्नियमनशादेतल्लक्ष्यविषयकपूर्वशास्त्रानुपप्लव एव । जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते कैचिल्लक्ष्ये चरितार्थयेर्द्वयो शास्त्रयो. सत्प्र तिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थल उभयोरप्यप्राप्तौ पैरविध्यर्थमिद-

---

भवत्येवेति । प्रेष्येण योगपद्यासम्भवात् कस्यापि कार्ये अकृते सति कश्चिद् व्यव स्थापक आगत्य कथयति अस्य कार्यं कुरु इति । तत परस्तु 'अबल प्रेष्य करोतु मा वा' इति मत्वा कार्यं कृत्वा कथयति प्रेष्यश्च यथाकाल करोति तथा निमित्तसत्त्वे पूर्वशास्त्र भवति ॥ यत्तु कैयटादय इति । भाष्यकारोक्तदृष्टान्तद्वयेन नियमार्थं विध्यर्थं चेदमिति प्रतिपादितम् । कैयटेन तत्र जातिव्यक्तिपक्षौ स्वीकृत्य नियमाथ विध्यथ चद योजित तदुपन्यस्यति । व्यक्तिविति । व्यक्तौ पदार्थे नाम एकन सूत्रेण एकमेव लक्ष्य साधनीयमिति पक्षे । उपप्लवात् । आवृत्ते । सर्वलक्ष्यसिद्ध्यथमिति भाव । लक्ष्यविषययो । रामेभ्य इत्यादिलक्ष्यविषयया । ननु विप्रतिषेधात्पर मेव कार्यं क्रियते तर्हि एतल्लक्ष्यविषयकपूर्वशास्त्रस्याप्रवृत्तिर्यथा स्यात् । अत आह—अत्र पक्षे इति । ननु यदि उपप्लवो नास्ति तर्हि विप्रतिषेधसूत्र नियमाथ कथमिति चेत्सत्यम् । यदि विप्रतिषेधसूत्र न स्यात्तर्हि लक्षणोपप्लवात्सुपि चेति सूत्र रामेभ्य इत्यत्र प्रवर्तेत यथा राजन् शब्द । तत्र हि सौ दीर्घलोपयो प्राप्त-योर्द्वयोरपि नित्यत्वात् परत्वाद्दीर्घे हल्ङ्याब्भ्यादिलोप । कृताकृते दीर्घे लोपस्य प्राप्तिर्विद्यत इति लोपस्य नित्यत्वम् । यथा दीर्घस्य सौ परत प्राप्तिर्विद्यते इति लोपस्य नित्यत्वे द्रष्टव्य प्रत्ययलक्षणेन प्राप्ति स्वीक्रियते तथा प्रकृतस्थलेऽपि । जातिपक्षे इति । अस्मिन्पक्षे अनेनैव सूत्रेण सर्वलक्ष्याणि साधनीयानि । उद्देश्यतेति । सुपि चेत्यस्य रामादिषु सुप्परक अदन्ताङ्ग बहुवचनेत्यस्य च झलादिबहुवचनपरक अदन्ताङ्गम् । सत्प्रतिपक्षन्यायेनेति । यथा शब्दो नित्य

१ A B °परविध्यर्थमिति

२ B C D E G K तत्र कृत यदि पूर्वप्राप्तिरस्ति तर्हि तदपि

३ B विषययो°

४ P नियमार्थमिदमिति, B C D E G H K नियमार्थमिति M om नियमार्थमिदमिति

५ H M D H K कचिच्चरितार्थ°

६ A B P परविध्यर्थमिदमिति, C E G H परविध्यर्थमिति

मिति पुनःप्रसङ्गविज्ञानसिद्धिरित्याहुस्तन्न[1] ॥ व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मानाभावात् । न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव[2] जातिपक्षाश्रयणस्य भाष्ये दर्शनात् ॥ अत एव सरूपसूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधेः प्रवृत्तेर्गौरनुबन्ध्य इत्यादौ सकलगवानुबन्धनासंभवात्कर्मणो[3] वैगुण्यमुक्तम् । द्रव्यवादे चासर्वद्रव्यगतेर्गौरनुबन्ध्य[4] इत्यादावेकं शास्त्रोक्तमपरमशास्त्रोक्तमित्युक्तम्[5] ॥ किंच न[6] हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र[7] मानमस्ति ॥ अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं

श्रावणत्वात् शब्दत्ववत् इत्यस्य अनुमानस्य शब्दः अनित्यः कृतकत्वाद् घटवत् इत्यनुमानं प्रतिबन्धकम् । तत्र अनुकूलतर्कादिना अन्यतरस्य सत्यत्वज्ञानपर्यन्तं परस्परेण परस्परस्य प्रतिबन्धस्तथा युगपदसंभवरूपनिरोधस्थलेऽपि । उक्तकैयटग्रन्थेन व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रेण व्याप्यते जातिपक्षे नेति सिद्धम् । तत्खण्डयति—व्यक्तिपक्षे इति । सर्वं लक्ष्यं कर्म । शास्त्रं कर्तृ । कैयटमतविरुद्धां जातिपक्षे व्याप्तिमाह—न ब्राह्मणेति । व्यक्तिपक्षे एकं ब्राह्मणं हत्वैव मनुष्यः कृती स्यात् तथा शास्त्रमपि कृतार्थं भवेदिति । वैगुण्यमिति । गौरनुबन्ध्यः इत्यनेन यूपे वृषभस्य बन्धनं विधीयते । तत्र यदि जातिपक्षो गृह्यते तर्हि सर्ववृषभबन्धनमावश्यकं भवेत् । तच्च न संभवति । अतः कर्मणो वैगुण्यमुक्तम् । द्रव्यवादे इति । व्यक्तिपक्षे इत्यर्थः । इत्युक्तमिति । व्यक्तिपक्षे गौरनुबन्ध्य इत्यनेन एकस्य बन्धनं विधीयते तस्यैव अवगतिरपि । तथा शास्त्रोक्तबन्धनमपि एकस्यैवेत्यर्थः । कैयटेन तृजादिदृष्टान्तः व्यक्तिपक्षे कथितः लौकिकदृष्टान्तः जातिपक्षे लापितः तदयुक्तमित्याह— किं चेति । कैयटेन व्यक्तिपक्षं स्वीकृत्य या सकृद्गतिन्यायसिद्धिः कृता सा न युज्यते इत्याह—अपि चेति । अन्यव्यक्तिरूपेति । रामाभ्यां रामेषु इति । चरितार्थयोः सुपि च बहुवचने झल्येत् इत्यनयोः इयं व्यक्तिः

१ A. C. D. E. G. H. M. K. om. आहुः.
२ A. B. D. H. M. °विषयत्वार्थमेव; E. G. K. C. विषयार्थमेव.
३ A.B.P.H.M.K. सकलगवानुबन्धना°; C. E. सकलगवामनुबन्धना°.
४ G. चासर्वद्रव्यगते°.
५ D. E. G. M. K. P. एकः शास्त्रेकः.
६ A. C. G. H. M. E. K. om. न हि.
७ G. H. M. इत्यत्र न मानमस्ति.

व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम्। जातिपक्षे ऽपि तं- ज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्वमित्यत्र विनिगमनाभावः ॥ तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसंमतमार्ग एव युक्त इति बोध्यम् ॥ द्वयोः कार्ययोर्यौगपद्येनासंभव एव विप्रतिषेधशास्त्रोपयोगी। इदमिको गुण [ १. १. ३ ] इति सूत्रे कैयटे स्पष्टम्। यथा शिष्टादित्यादौ तातङ्शाभावयोर्युगपत् प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभवः। यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव तत्तथाप्यादेशप्रवृत्त्युत्तरमेव स न तु तत्प्रवृत्तिकाले। एवं नुम्तृज्वत्त्वयोः प्रियक्रोष्टूनीत्यादौ युगपदसंभवो यदागमा

---

नाम विरोधः लक्ष्यं रामेभ्य इत्यादि। न कल्पयति। स्वविषये कथमपि न प्रकटयते। कैयटेन जातिपक्षे उक्तसूत्रस्य रामाभ्यां रामेषु इति चारितार्थ्यं दत्तं तदपि न युज्यत इत्याह— जातिपक्षेपीति। तज्जातीति। यत्रादिसुप्प्रकारान्तत्वादि जात्याश्रयतद्व्यक्तिरामाभ्यामित्यादिविषयकत्वम्। सुपि चेत्यस्य रामाभ्या मित्यत्रैव चारितार्थ्यं देयं रामेभ्य इत्यत्र चारितार्थ्यं न दीयते ॥

कैयटमतं खण्डयित्वा सिद्धान्तमाह–तत्रेति। आनन्तर्यासंभवः। शा हौ इत्यनेन हौ परतश्शादेशो विधीयते तुह्योरित्यनेन अङ्गात्परस्य तातङ् विधीयते। तत्र हिपरकः शा साधुः अङ्गपूर्वकस्तातङ् साधुः इति एक- स्मिन् काले न वक्तुं शक्यते। अतः शिष्टात् इत्यत्र परत्वात्तातङ् इति। ननु तातङ्शाभावयोः युगपत् कृतयोरपि शातातङित्यत्र स्थानिवद्भावेन अङ्गत्वं वियत इत्याह–यद्यपीति। तत्। आनन्तर्यम्। उत्तरमेव। स्थानिवद्भावेनान्यर्थं। प्रियक्रोष्टूनीति। तृज्वत् क्रोष्टुः। इकोचि विभक्तौ। अत्र सर्वनामस्थानपरकः क्रोष्टु साधुः सर्वनामस्थानपरकः क्रोष्टूः साधुः इति युगपद्वक्तुमशक्यम्। अतः परत्वान्नुम्। ननु नुगागमे कृतेपि यदागमं यायनं क्रोष्टुशब्दोस्त्येव अत आह—यदागमेति।

१ A C D L G H M K ऽपि तज्जात्याश्रय°, B ऽपि जात्याश्रय°

२ A C D E G H M K विप्रतिषेधशास्त्रोपयोगी, B विप्रतिषेधशास्त्री यापयोग

३ B H स्वस्वानिमित्ताऽभाव

४ A B E H त्तरमेव तन्न त C G M D K P त्तरमेव स न तु

५ B H A प्रियक्रोष्टुनी°

[ ७० ११ ] इत्यस्य नुम्प्रवृत्युत्तरं प्रवृत्तेः । एवं भिन्द्धीत्यत्र[1] तातङ्धिभावयोर्युगपदेकस्थानिसंबन्धस्याङ्गरूपनिमित्तानन्तर्यस्य[3] चासंभवो बोध्यः । नुम्नुटोरपि नुट्यजादिविभक्त्यानन्तर्यबाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसंभवाद्विप्रतिषेधः ॥ क्वचिदिष्टानुरोधेन पूर्वशास्त्रं स्वरितत्वप्रतिज्ञाबलात्स्वरितेनाधिकं कार्यमित्यर्थात्पूर्वमेव भवति । तेन सर्वे पूर्वविप्रतिषेधाः संगृहीता इति स्वरितेन [ १. ३. ११ ] इति सूत्रे भाष्ये । विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात्तत्संग्रह इति विप्रतिषेधसूत्रे भाष्ये ॥ ४० ॥

नन्वेवमेधत[6] इत्यादौ परत्वाद्विकरणेऽनुदात्तङित: [ १. ३. १२ ] इत्यादिनियमानुपपत्तिस्तेन व्यवधानादत आह ।

---

भिन्द्धीत्यनेन भिन्तात् इति रूपस्य अनभिधानं सूचितम् । एकस्थानिसंबन्धस्येति । धितातङौ हेर्युगपत्कर्तुमशक्यावित्यर्थः । ननु हेः तात् धि इति आदेशः क्रियते तथा च न दोषः इति चेत् तत्राह—अङ्गरूपेति । अङ्गात्परौ धितातङावपेक्षितौ । अतः यदि तात् धि. इति आदेशः क्रियते तर्हि अङ्गात्परो धिर्न स्यात् । यदि हितात् इत्यादेशः क्रियते तर्हि अङ्गात् परः तात् न स्यात् । वारिणा इत्यादौ तु नुमचिरतृज्वद्भावेभ्यो नुट् विहितः तत्रासंभवमाह—नुम्नुटोरिति । तयोः कृतयोः ह्रस्वनद्यापूर्वोक्तो नुट् साधुः अजादिविभक्तिपरको नुम् साधुः इति युगपद्वक्तुमशक्यम् ॥ ४० ॥

परत्वाद्विकरणे इति । ननु एतदसंगतम् । शप्प्रत्ययस्य कर्त्रर्थे सार्वधातुके परतो विधानात् पूर्वं अनुदात्तङित इति आत्मनेपदं स्यात् । पश्चाच्च शपः प्राप्तिः । अतः अनुदात्तङित इति नियमापेक्षया परत्वाद् विकरण. इति कथमिति चेदुच्यते—सिद्धधर्मिणमुद्दिश्य साध्यधर्मो विधीयते इति न्यायात् आत्मनेपदादिसंज्ञा लस्य भवति । अतः एधधातोः लटि कृते तस्मिन् तिप्तस्झि इत्यनेन अष्टादश प्रत्यया जाताः । ततश्च सिद्धधर्मत्वात् 'लः परस्मैपदम्' इत्यनेन परस्मैपदसंज्ञा

---

१ D G. H. M. K. B. भिन्द्धीत्यादौ. A. C. E. भिन्द्धीत्यत्र.
२ B. M. °पदेकस्थानस°.
३ B. H. °र्यस्यासंभवो.
४ C. om. प्रतिज्ञा.
५ G. भवतीति सर्वे पूर्व.
६ P. H. नन्वेवमेधत इत्यादौ, A. B. C. D. K. M. नन्वेवमेधते पचत इत्यादौ; E. G. P. mentions the reading नन्वेव पचत इत्यादौ.

## विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥

अत्र वृद्भ्यः स्यसनोः [१. ३. ९२] इति सूत्रेण स्ये विभाषातङ्विधानं[1] ज्ञापकम्। अन्यथा स्य[2]व्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धया विकल्पविधानं व्यर्थं स्यात्। अत्रार्थे ज्ञापिते तु स्य इति [3]तत्र विषयसप्तमी बोध्येत्यनुदात्तङित: [१. ३. १२] इ[4]त्यत्र भाष्यकैयटयोः स्पष्टम् ॥ विकरणव्यवधानेऽपि नियमप्रवृत्तेरिद ज्ञापकमिति शदेः शितः [ १. ३. ६० ] इत्यत्र भाष्ये ध्वनितम् ॥

---

जाता। तङानाविति आत्मनेपदसंज्ञा जाता च। ततश्च सार्वधातुकपरत्वात्कर्तरि शप इत्यनेन शप् प्राप्तः। अनुदात्तङित इति नियमश्च प्राप्तः। अत्र परत्वाद्विकरणे 'अनुदात्त० इति नियमो न प्रवर्तते शपा व्यवधानात्' इति अवतरणं संगच्छते। सिद्धान्ते अनुदात्त० इति नियम । तिप्तस्झि इति सूत्रेण अष्टादशप्रत्ययानां सिद्धत्वेन आत्मनेपदस्यासिद्धत्वात्। ततश्च सूत्रं व्यर्थं नियमयति— अनुदात्तङिद्धातोः आत्मनेपदमेव अवशिष्यते परस्मैपदं निवर्तते। तथा च प्रधानानुरोधेन कल्पितप्रकृतयोपि निवर्तन्ते इति। ज्ञापकमिति। वृद्भ्यः स्येतिसूत्रेण स्ये परतः विभाषा परस्मैपदं विधीयते। तच्च न विधेयम्। उक्तरीत्या परत्वात् विकरणे कृते स्ये परतः विभाषा परस्मैपदं विधीयते। तच्च न विधेयम्। उक्तरीत्या परत्वाद् विकरणे कृते स्येन व्यवधानात् अनुदात्तङित इति प्राप्त्यभावेन परस्मैपदं निवर्तते। तथा चोभयपदसिद्धौ इदं सूत्रं व्यर्थं ज्ञापयति–विकरणेभ्यो नियमो बलीयानिति। तथा च नियमस्य प्राबल्येन स्याविकरणात् पूर्वमनुदात्तङित इति नियम'। तथा च परस्मैपदं न स्यात्। तदर्थं चेदं सूत्रमावश्यकम्। अन्यत्नफलं एधते इत्यत्र विकरणात्पूर्वं नियमः प्रवर्तत। उक्तज्ञापकस्वीकारे सति वर्तिष्यते इत्यादौ विकरणात्पूर्वं वृद्भ्य. इति सूत्रं प्रवर्तते। तेन च धातोः स्ये परतः विभाषा परस्मैपदं विधीयते तत्र स्यपरकत्वं न संभवति। अत आह—अत्रेति। ध्वनितमिति। शदेः शित इति सूत्रे उपसर्गनिमित्तकानियमे अड्व्यवाये उपसंख्यानमिति वार्तिकम्। तच्च वार्तिकं 'विकरणव्यवधानेपि नियमप्रवृत्ति.' इति स्वीकृते एव युज्यते नान्यथा। तथा हि—निपूर्वकाद्विश् धातोः नेर्विशः इत्यनेन आत्मनेपदं विहितं तत्र लङि कृते लुङ्लङ० इति अट् प्राप्तः, उक्तसूत्रेण आत्मनेपदं प्राप्तम्,

---

१ P. says that some read विभाषानङ्विधानं; others विकल्पविधान D. H. M विभाषाऽतङ्

२ A. C. D. H. M. K. स्यव्यवधाने; B. स्यनिधाने.

३ A. C. D. H. M. K. P. तत्र; E. G. C. om. तत्र

४ A. C. E. D. G. H. M. इत्यत्र भाष्य°; B. इति सूत्र-भाष्य०.

वस्तुतोऽस्माज्ज्ञापकादनुदात्तङित [ १. ३. १२ ] इत्यादि प्रकरण तिङादिविध्ये[1]कवाक्यतया विधायकम्। तत्र धातोः [ ३. १. ९१ ] इति विहितपञ्चमी तत्समानाधिकरणमनुदात्त [ १. ३. १२ ] इत्यादि विहितविशेषणमेव[2]। एवं च लावस्थायां स्येऽपि तद्व्यवधाने[3] तङ्सिद्धिः।

शप् प्राप्त, तत्र सर्वापेक्षया परत्वात् अटि कृते विकरणनियममार्गो विकरणेभ्यो नियमो बलीयानिति स्वीकृते आत्मनेपदं प्राप्तं तच्च वार्तिकं व्यर्थमेव भविष्यति। अत्र वार्तिककरणेन भाष्यकाराणामयमभिप्रायः शबडागमयोः प्राप्तयोर्नित्यत्वाच्छप्, अट् तु न नित्यः शपि कृते विश इत्यस्य अट् स्यात् अङ्गस्य विधानात्, अन्यथा विश् इत्यस्य स्यात्। एवं च शब्दान्तरस्य प्राप्तस्य अनित्यत्वादटि कृते अविश् इत्यस्मात् स्यात्। अन्यथा विश् इत्यस्मात्स्यादिति चेन्न। तस्य क्वाचित्कत्वेनात्राग्रहणात्। एवं च नित्यत्वाच्छप् स्यात्पश्चादडागमः शबन्तस्य भवेत्। तथा च यदागमन्यायात् शबन्तेन अटो ग्रहणं स्यात् न तु धातुना। एवं च उपसर्गात्परोऽव्यवहितो धातुर्नास्ति। अत उपसर्गनिमित्तक इति वार्तिकं कृतम्। तेन च विकरणव्यवधानेऽपि नियमप्रवृत्तिः इति सूचितम्। अन्यथा शब्व्यवधानान्नेविंश इति नियमप्रवृत्तिर्न स्यात्। अत वृद्भ्यः स्येति सूत्रं ज्ञापनीयमिति। उक्तरीत्या अनुदात्त इति नियमस्वीकारे दोषत्रयं प्राप्नोति। 'श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्। प्राप्तस्य बाधादित्येवं परिसङ्ख्या त्रिदूषणा' इति त्रिदोषग्रस्तत्वात्। नियमस्य एको दोषः प्रत्ययानामपहार इति, द्वितीयः प्रकृतीनामपहार इति ॥

पक्षान्तरमाह— वस्तुत विधायकमिति। उक्तरीत्या परत्वाड्विकरणे तेन व्यवधानादनुदात्तङित इति नियमानुपपत्तिः। अत व्यर्थं ज्ञापयति। अनुदात्तङित इत्यादिप्रकरणं तिङादिविध्येकवाक्यतया विधायकम्। यदि चेदानीं सूत्रं न क्रियेत तर्हि वृतादिभ्यः पदद्वयं न स्यात्। अतस्तदावश्यकम्। अन्यत्रफलमेधते इति। अस्मिन्पक्षे यादृशो यो धातुस्तस्मात्तादृशं पदं भवति न तु सर्वेभ्य पदद्वयं भवति। अतो न नियमादिदोषत्रयम्। अस्मिन्पक्षे वाक्यार्थमाह— तत्र धातोरिति। एवं च अनुदात्तङिद्यो धातुस्तस्माद्विहितो यो लकारस्तस्य स्थाने आत्मनेपदं भवति इति। अत्र पक्षे धातोरिति विहितपञ्चमी इति नित्य ङित इत्यस्य सिद्ध्यर्थं सिद्धान्तः स्वीकृत एव। लावस्थायामिति। एधिष्यते इत्यादौ लकारे कृते स्यतासी इत्यस्य प्राप्तिः।

1. C ०विध्येक वाक्यतया
2. C D E G H M K विशेषणमेव, A B om एव
3. A B G H. K. P. स्येऽपि तद्व्यवधाने, C. E. स्ये तद्व्यवधानेऽपि.

शबादिभ्यस्तु पूर्वमेव नियम । यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा लकारविशेषापेक्षत्वात्स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोष । अत्र पक्षे वृद्भ्य' स्य [१ ३. ९२] इति सूत्रे स्यविषय इति व्याख्येयम्। आत्मनेपदशब्दादौ भाविसंज्ञाश्रयणीयेति तत्त्वम्॥ भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्या। भुक्तवन्तं प्रति मा भुक्था इति ब्रूयात्किं तेन कृतं स्यादिति न्यायस्तु नात्र शास्त्र आश्रयितुं युक्तो नियमादिशास्त्राणां वैयर्थ्यापत्ते ।ध्वनितं चेदं स्थानेऽन्तरतमसूत्रे भाष्ये।

लस्थाने आदेश प्राप्त । स्यप्रत्ययस्य सामान्यधातुरपेक्षित अत अन्तरङ्गत्वादिति प्राचीनमतेन। ननु स्यतासी इत्यस्य लृलुटोरिति परनिमित्तत्वमपेक्षितम्, आदेशस्य अनुदात्तङित इत्यनेन पञ्चम्यन्तं निमित्तमपेक्षितम्। एवं चोभयो समत्वात् परत्वात् आदेश स्यादिति चन्न। स्यतासीति सूत्रे आर्धधातुके इत्यनुवृत्त्या आर्धधातुके परत स्यतासोर्विधानात्। आर्धधातुकत्वं च लस्यैव न तु आदेशानाम्। अस्मिन् पक्षे स्य इति परसप्तम्येव। तदसिद्धिरिति विशेषणस्वीकारात्॥

ननु आर्धधातुके इत्यस्यानुवृत्तौ परत्वात्तिबादय स्यु इत्याशङ्क्य प्राचीनमतेनोत्तरमाह— यद्वेति । सामान्यधर्मग्रहणे विशेषधर्मो नोपतिष्ठते विशेषधर्मग्रहणे तु सामान्यधर्मस्योपस्थितिर्वर्तते। अत विशेषापेक्ष बहिरङ्गम्। पञ्चभ्याम् इति ध्रुवमपाये इति विहितपञ्चमी, दिग्योगे अन्यारादित्यादिसूत्रेण पञ्चमी। तत्र विहितपञ्चम्यां स्वीकृतायां आर्धधातुके इत्यनुवृत्त्या उत्तरं संभवति, यद्वेति इत्यपि संभवति। परपञ्चम्यां तु द्वितीयमेवोत्तरम्। ननु यद्वेति पक्षे शबादीनां पूर्वमेव प्राप्तत्वात्स्यपरत्वं कथमित्याह— अत्र पक्षे इति। ननु एकवाक्यतापक्षे अनुदात्तङित इत्याद्येकत्वापत्तिप्रसक्ति० इत्यस्य अनुदात्तङितो धातोर्लस्य स्थाने आत्मनेपदं भवतीति वाक्यार्थ कथमित्याशङ्क्याह— आत्मनेपदशब्दादौ भाविसंज्ञा इति। तथा प्रत्यय कर्तव्य यस्मिन् कृते सति आत्मनेपदसंज्ञा जायेत इत्यर्थं गृहीत्वा सर्वं साधनीयम्। नियमपक्षे व्यवस्थामाह— भिन्नवाक्यतयेति। लुगादिना। षड्भ्यो लुक् इत्यादिना। जातनिवृत्तिरिति। तिप्तस्झि० इत्यनेन अष्टादश प्रत्यया कृता। तत अनुदात्तेति नियमे परस्मैपदं निवर्तनीयम्।

१ C H स्ये विषये
२ D C H. P नियमे तु लुगा०, A E M B om तु
३ A C. E G युक्तो; D H M K B शक्यो

शास्त्रानर्थक्यं तु वृद्धिसञ्ज्ञासूत्रे भाष्ये तिरस्कृतम्। सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पना तावत्प्रकृतिकल्पनया कार्या प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्ति. कल्प्येति गौरवमित्यन्यत्र विस्तर ॥ ४१ ॥

## परान्नित्य बलवत् ॥ ४२ ॥

कृताकृतप्रसङ्गित्वात्। तत्राकृताभावकस्याभावकल्पनापेक्षया कृताभावकस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजम्। तदाह। कृताकृतप्रसङ्गि नित्य तद्विपरीतमनित्यम्। अत एव तुदतीत्यादौ परादपि गुणान्नित्य वान्शप्र यमादिर्भवति ॥ ४२ ॥

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुन प्रवृत्तौ कृताकृत प्रसङ्गित्वमित्याशयेनाह।

## शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥

इद शदे शित [ १. ३. ६० ] इति सूत्रे भाष्ये स्पष्टम्। तत्र हि न्यविशतेत्यत्र विकरणे कृते तदन्तस्याडकृते धातुमात्रस्येत्यडनित्य इत्युक्तम् ॥ ४३ ॥

---

ध्वनितमिति। तत्र हि इको यणचि इत्यनेन इक स्थाने प्रत्येक चत्वारो यण कृता। पश्चाच स्थानेन्तरतम इति परिभाषया अन्तरतम एवावशिष्यत अन्ये च निवर्तन्त इति नियम कृत्वा अन्ये निवर्तिता। तेन अत्र शास्त्रे उक्तन्यायस्य सचारो निरस्त ॥ ४१ ॥

प्रसङ्गित्वादिति। कृतेऽकृते च य प्रसङ्ग सोऽस्यास्तीत्यर्थ *। बीजमिति। सम्बन्धितयैवेति। यादृशीं शब्दप्रवृत्तिमुद्दिश्य पूर्वं कार्यं प्रवृत्त तमेव शब्दमुद्दिश्य पुन प्रवृत्तौ तस्य नित्यत्व नान्यथेत्यर्थ ॥ ४२ ॥

न्यविशतेति। नेर्विश इत्यात्मनेपदम्। अत्र विकरण-अडागमयोः प्राप्त्यो-

---

१ D H M read कृताकृत मनि यम् as a separate परिभाषा

२ A C E D G H M P धातुमात्रस्येत्यडनि य; B. om इति h °मात्रस्येत्यनित्य

* एकाद्यारा नाकर ठवावयाचा असतांना दोन अर्ज आले, एक जवळच्या मनुष्याचा आणि दुसरा अन्य इसमाचा त्या ठिकाणीं दुसरा ठवला तरी जवळचा ठवला पाहिजच अशी स्थिती असतांना जवळचाच ठेवणें उचित

तत्तुल्यन्यायेनाह ।

शब्दान्तरात्प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चा-
नित्यत्वम् ॥ ४४ ॥

एतन्मूलकमेवाह ।

लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥

अतिदेशविषय इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥ ४५ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह ।

क्वचित्कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनःप्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकं न तु बाधकाबाधितफलोपहितप्रसङ्गो ऽपि तथेति भावः ॥ ४६ ॥

---

नित्यत्वाद्विकरणः । विकरणे कृते निविश इति अदन्तव्यक्तेः अट् प्राप्नोति अङ्गस्याड्विधानात् । विकरणाभावे शान्तव्यक्तेः अट्प्राप्तिः । एवं च यद्व्यक्तिसंबन्धितयेति नानित्यत्वम् । अत्र शब्दान्तरात्प्राप्नुवन् इति शप्रत्ययस्य अनित्यत्वं न ग्राह्यम् । अत्र उदाहरणान्तराणि भैरवीतः अवगन्तव्यानि ॥ ४३ ॥

व्यतिरेकेणेति । एतेन लक्षणान्तरेणेति परिभाषाया अविषयः सूचितः । व्यक्तिविशेषेति । एतेन यद्व्यक्तिः इत्यस्य निरासः सूचितः । बाधकाबाधितत्वे सति यस्य फलोपहितत्वं तन्नित्यमित्यर्थः । यस्य नित्यत्वं वक्तव्यं तद् बाधकाबाधितमपेक्षते । स्वापयतीत्यत्र बाधकाबाधितं विद्यते । तुदतीत्यादौ बाधकाबाधितं विद्यते । फलोपहितस्योदाहरणं शोधनीयम् । तस्य कल्पनं त्वित्थम्— चिनुधातोः सति गुणदीर्घयोः प्राप्तयोः नित्यत्वाद् गुणे चे स इत्यवस्थायां एकारस्य यदि दीर्घ एकारः स्यात्तर्हि फलोपहितः स्यात् परंतु क्त्वित्वाद्गुण एवात्र नेत्यर्थः ॥ ४६ ॥

---

१ C. तत्तुल्यन्यायेनाह; A. D. G. H. M. E. K. B. एतत्तुल्यन्यायेनाह.

२ D. B. H. श्चानित्यम्.

३ A. B. D. G. H. M. K. P. कचित्कृता°; C. om. कचित्, E. प्रसङ्गित्वमात्रेणापि.

४ C. E. G. °स्य पुनःप्रसङ्गमात्रं नित्य,° A. B. D. H. M. K. °स्य प्रसङ्गमात्रनित्य°.

५ B. H. P. °प्रसङ्गोऽपि तथेति भावः ।; A.D.G.M.E.K.C. °प्रसङ्गः ।

तदाह ।

यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ ४७ ॥

क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते । तदाह ।

यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥ ४८ ॥

सप्तमे कैयटेनैतदुपस्तम्भक लोकव्यवहारद्वयमुदाहृतम् । वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हतेऽपि सुग्रीवस्य वालिन प्राबल्य न व्यवहरन्ति । भगवत्सहाये पाण्डवैर्जये लब्धेऽपि पाण्डवाना प्राबल्य व्यवहरन्ति चेति ॥ सर्वं चेद लक्ष्यानुरोधाद् व्यवस्थितम् ॥ ४८ ॥

लुट प्रथमस्य [ २. ४ ८५ ] इति सूत्रे भाष्ये

स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४९ ॥

इति पठ्यते ॥

---

तदनित्यम् । अस्योदाहरण ज्ञापयात । युष्मच्छब्दाण्णिचि प्रत्ययोत्तरपदयोश्च इति त्वादेशः । तथा च त्व अद् इ इत्यवस्थायां पररूपटिलोपौ प्राप्तौ । तत्र पररूपे कृते अकृते च टिलोपस्य प्राप्तिर्विद्यते । प्रकृत्यैकाजिति पररूपे कृते प्रकृतिभावस्य प्राप्तिरित्यन्यादेशाट्टिलोपस्य प्राप्तिमात्र विद्यते । अतो नित्यत्वा ट्टिलोप पूर्व ॥ ४७ ॥

तदप्यनित्यमिति । अस्योदाहरणम्– अस्मै । अत्र नित्यत्वात् ङे स्मै पश्चाद्धलि लोपः । यद्यत्र पूर्वोक्त नित्यत्व गृहीत तर्हि स्मै इत्यादेशे कृतेपि अनाप्यक इति प्राप्तिमात्रस्य सत्त्वात्तस्यापि नित्यत्व स्यात् । तथा च स्मै इत्यादेशात्परत्वादनादेश स्यादिति ज्ञम् ॥ ४८ ॥

१ A G H M K P यस्य र, B C. om च

२ C K D G H M K क्वचित्तु यत्र° A. B. om. तु

३ A. B C E. D G H M K °दुपष्टम्भक

४ E. D G H M K. C द्वयमुदाहृतम्, B °द्वय समुदाहृतम् A °द्वयमुपन्यस्तम्

५ B D H M K व्यवहरन्ति चेति, D A. G E. C व्यवहरन्ति

६ A C. E D. G H M. K लक्ष्यानुरोधा°, B लक्ष्यानुसारा°

७ A C G E and Bhasya ad III, 1, 3 स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति, B D H M K स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्य

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च [1]तत्रेच्छयान्यतरत्तदुभयं वा तस्य बलवत्त्वे नियामकमुल्लेख्यम्। अत एव तत्रतत्र परत्वान्नित्यत्वाच्चेति भाष्य उच्यते। [2]वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः। स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे॥ णौ चङि (७. ४. १) इति ह्रस्वापेक्षया नित्यत्वान्तरङ्गत्वयुक्त[3]द्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम्। एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि यौगपद्यासंभव [4]एवेति बोध्यम्॥ ४९॥

नित्यादप्यन्तरङ्गं बलीयोऽन्तरङ्गे बहिरङ्गस्यासिद्धत्वात्। तदाह।

## असिद्धं बहिरङ्गमन्तरङ्गे॥ ५०॥

अन्तर्मध्ये बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गम्। एतच्च खरवसानयोः (८. ३. १५) इति सूत्रेऽसिद्धवत्सूत्रे च भाष्यकैयटयोः स्पष्टम्॥ अत्राङ्गशब्देन शब्दरूपं निमित्त[5]मेव गृह्यते शब्दशास्त्रे तस्य प्रधानत्वात्। ते[6]नार्थनिमित्तकस्य न बहिरङ्गत्वम्। अत एव न तिसृचतसृ (६. ४. ४) इति निषेधश्चरितार्थः। अन्यथा स्त्रीत्वरू[7]पार्थ-

अन्तरङ्गे इति। अस्याः परिभाषाया उदाहरणम्—अदीदिपत् इति। अत्र णिचं निमित्तीकृत्य प्राप्तो गुणो नेत्यर्थः। बहिरङ्गत्वात्। अत्र घटकतया अन्तरङ्गत्वं गुणस्येति बोध्यम्। अन्तर्मध्ये इति। कस्य मध्ये इत्याकाङ्क्षायां उपस्थितत्वाद् बहिरङ्गशास्त्रीयनिमित्तसमुदायो गृह्यते। ननु अङ्गशब्दो निमित्तवाची निमित्तं क्वचित्संज्ञा क्वचिदर्थः क्वचिच्छब्दश्च। अतः परिभाषया कस्य ग्रहणं कार्यमित्याकाङ्क्षायामाह—अङ्गशब्देनेति चरितार्थ इति। तथा हि। अर्थनिमित्तस्य बहिरङ्गत्वे स्वीकृते अयं निषेधो व्यर्थः। त्रिशब्दादामि त्रेत्रयः त्रिच-

१ C. तत्रेच्छया युगपदुभयं वा; A. B. G. H. M. तत्रेच्छयान्यतरदुभयं वा; D M. P. read तदुभयं.

२ A. B. D. E. K. G. C. P. वस्तुतस्तत्र, H. M. वस्तुतस्तु तत्र.

३ A. C. E. G. H. K. M. °द्वित्वस्य. B. °द्विवचनस्य

४ C. G. एवेति बोध्यम्; B. D. H. M. om. इति.

५ H. P. निमित्तमेव; A. B. C. D. E. G. M. om. एव.

६ C. तेनार्थनिमित्तस्य.

७ B. D. E. M. स्त्रीत्वनिमित्तक°.

निमित्तकनिरपेक्षयान्तरङ्गत्वात्त्रयादेशे तदसंगतिः स्पष्टैव । अत एव त्रयादेशे स्रन्तस्य प्रतिषेध इति स्थानिवत्सूत्रस्थभाष्यवार्तिकादि सङ्गच्छते ॥

तुरो. स्त्रियां तिसृचतसृ ह्रस्वनद्यापो नुट् इति कार्यत्रयं प्राप्तम् । नुटि कृते दीर्घश्च । तत्र स्त्रीत्वरूपार्थसापेक्षत्वेन तिस्रादेशो बहिरङ्गः । अतस्त्रयादेशनुटोः प्राप्तयोः प्रथमोपस्थितत्वेन पूर्वं त्रयादेशः पश्चान्नुटि ततो दीर्घः । ततः सर्वापेक्षया बहिरङ्गभूतस्तिस्रादेशः । स्थानिवद्भावेन त्रिशब्दत्वात् पुनश्च दीर्घो न प्राप्नोति । लक्ष्ये लक्षणं सकृदेव प्रवर्तते इति न्यायात् । यद्यपि वर्णभेदाल्लक्ष्यभेदस्तथापि आदेशकृतो लक्ष्यभेदो नाङ्गीक्रियते इति वचनम् । अत्र प्रमाणं तु प्रत्यिवहोरोद्वर्णस्य इति सूत्रे ओत् इति तपरकरणम् । तद्धि उदवोढाम् इत्यत्र ढत्वादीनामसिद्धत्वात्पूर्वं दीर्घे ढत्वे ढलोपे अवर्णस्य ओकारे कृते पुनः वदव्रजेति वृद्धिर्मा भूत् किं तर्हि ओकार एवावशिष्येतेति कृतम् । परंतु भाष्यकारै. वर्णभेदाल्लक्ष्यभेदे सत्यपि लक्ष्यलक्षणन्यायेन पुनर्वृद्धेरप्राप्तिं स्वीकृत्य तपरकरणं प्रत्याख्यातम् । यतः वर्णभेदे सत्यपि तपरकरणं प्रत्याख्यायते तेन ध्वनयति आदेशकृत इति । एवं च तिसृणामित्यत्र पुनर्दीर्घाभावे सिद्धे न तिसृ० इति निषेधो व्यर्थः । स ज्ञापयति अर्थनिमित्तकस्येति । ततश्च त्रि आम् इत्यवस्थायां सर्वापेक्षया परत्वात्तिस्रादेशे नुटि प्राप्तदीर्घवारणाय 'न तिसृ०' इति वक्तव्य सकृद्गतिन्यायाच्च । अन्यत्रफलं तु अतिस्त्रिणे । अत्र स्त्रिया इति इयङ् प्राप्तः नुम् प्राप्तः । तत्र अर्थसापेक्षत्वेन बहिरङ्ग स्त्रीकारादन्तरङ्गत्वादियङ् न, किं तु परत्वान्नुम् । एवं चार्थनिमित्तकस्य न बहिरङ्गत्वम् । तथैव संज्ञासापेक्षस्यापि । न तिसृचतसृ इति सूत्रे त्रिचतुरो. स्त्रियां तिसृचतसृ इत्यस्य सम्बद्धत्वेन न तिसृचतसृ इति ज्ञापकात्संज्ञासापेक्षस्येति तिसृचतस्रोर्विभक्तौ परतो विधानात् । अत एव 'एतेन गौधेरः पचेरन्' इत्यादिशेखरो युज्यते । स्रन्तस्य प्रतिषेध इति । त्रिशब्दात् आमि तिस्रादेशे कृते स्थानिवद्भावेन त्रिशब्दात् त्रयादेशो प्राप्ते स्थानिवद्भावनिषेधार्थं वार्तिकं स्रन्तस्य प्रतिषेध इति । सृ अन्तो यस्य स स्रन्तस्तादृशश्च तिसृचतसृ इति शब्दः । ततश्च तिस्रादेशस्य त्रिशब्दत्वाभावात् त्रयादेशो नेति वार्तिकाभिप्रायः । भाष्यकारैस्तु सकृद्गतिन्यायेन सिद्धिं कृत्वा वार्तिकं प्रत्याख्यातम् । अन्यथा उक्तरीत्या लक्ष्येलक्षणन्यायेन त्रयादेशाभावे सिद्धे निषेधो व्यर्थ. स्यात् । एतेन गौधेरः इत्यत्र गोधाया ढ्रक् इति ढस्य एयादेशे गौधेय् र इत्यवस्थायां वलिलोपे कर्तव्ये अन्तरङ्गपरिभाषा प्रवर्तते । अन्तरङ्गे वलिलोपे कर्तव्ये अङ्गसंज्ञासापेक्षत्वेन बहिरङ्गस्यैयादेशस्यासिद्धत्वम् । तथैव पचेदित्यत्र 'अतो येयः' इति इयादे-

१ A. D. E. G. K. C. H. M. °त्सूत्रस्थभाष्य°; B. °त्सूत्र एव भाष्य°.

एतेन गौधेर पचेदित्यादावेयादीनामङ्गसंज्ञापेक्षत्वेन बहिरङ्गतयासिद्धत्वाद्वलि लोपो न स्यादिति परास्तम्। एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च ॥ ननु येन विधिस्तदन्तस्य (१. १. ७२) इति सूत्रे भाष्य इको यैण्णाचि

---

शस्यापि। परास्तमिति। ननु तर्हि प्राचीनैस्तन्मते एयादीनामसिद्धत्वाद्यलोप कथ क्रियते इति चेत्तर्हि वलिलोपे अन्तरङ्गपरिभाषा न प्रवर्तत इति स्वीक्रियते। तद्विषये प्रमाण तु 'चेलै क्नोपे' इति निर्देश। क्नूयीधातो सकाशाण्णिचि अर्तिह्रीव्लीरीक्नूयीत्यनेन पुकि यलोप कर्तव्य। परन्तु अङ्गसज्ञासापेक्षत्वेन पुगागमस्यासिद्धत्वात्स न स्यात्। एव च सति क्नोपेरिति पाणिनिना उच्चार्यत तदेव सूचयति—वलिलोपे अन्तरङ्गपरिभाषेति। प्रमाणान्तरमपि ज्वरत्वरेति सूत्रे स्त्रिविग्रहणम्। तद्धि उपधावकारयोरूठा कृतयो स्रू इति रूपसिद्ध्यर्थं क्रियते। परन्तु तन्न कार्यम्। स्त्रिविधातो. क्विपि च्छ्वो शूडनुनासिके च इति वकारस्य ऊठि यणि च कृते स्रू यू ऊठ् इत्यवस्थाया अन्तरङ्गे वलिलोप कर्तव्ये अङ्गसज्ञासापेक्षत्वेन बहिरङ्गस्य ऊठ असिद्धत्वम्। एव च वकारपरत्वाद् वलिलोपे स्रू इति रूपसिद्धौ ज्वरत्वरेति सूत्रेण उपधावकारयोरूड्विधान व्यथ ज्ञापयति—वलिलोपे अन्तरङ्गेति। तथा च वलपरकत्वाभावेन वलोपो न स्यादिति स्त्रिविग्रहणमावश्यकम्। अन्यत्र फलम्—अक्षद्यू। अत्र ऊठोऽसिद्धत्वाभावाद् यलोपो नेत्यर्थ। एव च गौधेर पचेत् इत्यत्र वलिलोपे अन्तरङ्गपरिभाषा न प्रवर्तत इति स्वीकृत्य सिद्धि क्रियते प्राचीनै। सज्ञासापेक्षत्वेन बहिरङ्गत्व सर्वापेक्षया प्रबलमिति प्राचीनै स्वीक्रियत। अन्तरङ्गत्वाच्चेति। अन्तरङ्गकथनेन अन्तरङ्गे कृते एयादेशे प्राप्यमाणस्य परनिमित्तकत्वेन बहिरङ्गस्य वलिलोपस्य असिद्धत्वम् इति प्राप्यमाणस्य बहिरङ्गत्वकथन प्रतीयते। परन्तु नैतत्तथालेखनम्। किंतु प्रतिद्वन्द्विकोटचै प्राचीनै वलिलोपेऽन्तरङ्ग उक्त। तन्न युक्त किं तु विपरीतम्। एयादेशादेरवापरनिमित्तकत्वेनान्तरङ्ग इति अनेन प्रतिपाद्यते। न तु अन्तर्मध्ये बहिरङ्गनिमित्तकसमुदायमध्ये इत्यर्थकेन असिद्ध बहिरङ्गमन्तरङ्गे इति वचनेन बहिरङ्ग नाम घटकतया निमित्तसमुदायान्त पातिनिमित्तकत्वेन अन्तरङ्गत्व सिध्यति। न तु अपरनिमित्तकत्वेन। अत तद्विषये प्रमाण किमिति चेदुच्यते। यो बहिरङ्गनिमित्तकसमुदाय तदन्त-

---

१ A. E B P पचेदित्यादावे°, A D K C G H M पचेरन्नित्यादाव°

२ P reads सज्ञासापेक्षत्वन

३ A B D E. K M H G यणची°

(६ १. ७७) इत्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते तत्र सिध्येदूनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् गुण एव स्यादित्युक्तम् । अत्र कैयट. । सिवेर्बाहुलकादौ

---

पातिनिमित्तकत्वेन यदि अन्तरङ्ग भवति तर्हि तादृशा बहिरङ्गनिमित्तसमुदाय यस्य किंचिन्नापेक्षित तस्य अन्तरङ्गत्व स्यादेवेति कैमुतिकन्यायेन अपरनिमित्तकत्वेन अन्तरङ्ग सिध्यति । प्रमाणान्तरमपि विद्यते । तथाहि । ऊकालोऽज्झ्रस्वदीर्घप्लुत इत्यत्र ऊ इति निर्देश प्रमाणम् । अत्र उश्च ऊश्च ऊ३श्च इति समाहार द्वन्द्वे तत्र सुब्लुकि ह्रस्वो नपुंसकेति ह्रस्व प्राप्त । किंच सवर्णदीर्घश्च प्राप्त । यदि अपरनिमित्तकत्वेन अन्तरङ्गत्व न गृह्यते तर्हि द्वयो प्राप्तौ परत्वाद् दीर्घ स्यात् । ततश्च ह्रस्वे कृते उकाल इति रूप स्यात् । लाघवात्तथैवोच्चारयेत् । यत दीर्घ उच्चार्यते तस्मादपरनिमित्तकत्वेनान्तरङ्गत्व विद्यते । तथा च ऊकाल इति रूप स्यात् । तथाहि उ ऊ ऊ३ इत्यत्र समाससंज्ञाया सुब्लुकि नपुंसकह्रस्व प्राप्नोति । तत्र प्रातिपदिकापेक्षो ह्रस्व वर्णद्वयसापेक्ष परश्च दीर्घ कर्तव्य । स च पूर्वोपस्थितिकत्वात् उ ऊ ऊ३ इत्यत्र पूर्व भवति । ततश्च ऊ इति जातम् । तत्र ह्रस्वसवर्णदीर्घयो प्राप्तौ अपरनिमित्तकत्वेन अन्तरङ्गत्वात्पूर्व ह्रस्व । उ ऊ इति दीर्घे ऊकाल इति स्यात् । अतो दीर्घनिर्देशो युज्यत इति भाव ॥ तथा च कथ रूपसिद्धिरिति चेदुच्यते—उ ऊ ऊ३ इत्यवस्थाया प्रथमोपस्थितत्वात् आद्यदीर्घे कृते ऊ ऊ३ इत्यवस्थाया ह्रस्वदीर्घयो प्राप्तौ अन्तरङ्गत्वाद् ह्रस्वसंज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् । पश्चाद् ह्रस्वसवर्णदीर्घे दीर्घनिर्देश सगच्छते । अपरनिमित्तकत्वेन अन्तरङ्गाश्रयणस्य फल पञ्चावेदम् । अत्र एत ऐ इति ऐत्व न । अन्तरङ्गे ऐत्वे कर्तव्ये बहिरङ्गस्य गुणस्यासिद्धत्वम् । नाजानन्तर्ये इति तु न । अजानन्तर्याभावात् । एत इत्यस्य षष्ठ्यन्तत्वात् । ननु सवाभ्या वा मौ इति कुतो न प्रवर्तत तर्हि सवाभ्यामित्यत्र सकारोदाहरण मध्यमपुरुष एव सभवति । अत साहचर्यपरिभाषया वकारोपरस्यापि मध्यमपुरुष एव मोऽग्रम् ॥ तदन्तविधाविति । येन विधिरिति सूत्रभाष्ये यत्र विशेष्य नास्ति तत्र शब्दस्वरूप विशेष्यमध्याहृत्य तस्य तदन्तविधि क्रियते । तथा च को यणचि इत्यस्य इगन्तस्य यणादेश स्यादजादौ शब्दस्वरूपे परे इत्यर्थ । एवरीत्या इष्यते इति । सि ऊन इत्यवस्थाया लघूपधगुणयणो प्राप्तयो अन्तरङ्गत्वाद्यण् इत्यर्थ । अत्र अन्तरङ्गत्वमित्थम् । यण ऊन इति अजादिसमुदाय निमित्तम् गुणस्य तु तदन्त पाती एकोवयव इति । अत गुणोऽन्तरङ्ग । एतदुपपादयति । कैयट इति । सिवेर्नप्रत्यय

स्यादिर्भाष्येण[1] च परिभाषायामङ्गशब्देन सप्तम्याद्यन्तोपात्तं[2] शब्दरूपं, निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् ॥ यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रित्येत्यादिभाष्यासंगत्या चिन्त्यम् ॥ वाडि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम् । तत्सूत्रे[3] भाष्य

---

च गुणस्य संज्ञापञ्चकसापेक्षत्वेन अन्तरङ्गो यण् भवति । एवं च तत्तन्निमित्तापेक्षया द्वयोरप्यन्तरङ्गत्वं प्राप्तम् । अतः परत्वाद् व्यवस्था क्रियते । परत्वं च गुणस्य । अत. परत्वाद् गुण. इति कैयटेनोक्तम् । ननु नैतत्परत्वं युज्यते । कैयटरीत्या परस्परनिरूपितं परस्परस्यान्तरङ्गत्वं बहिरङ्गत्वं च विद्यते तत्र असिद्धपरिभाषया परस्परनिरूपितपरस्परस्य असिद्धत्वे प्रतिपादिते एकस्मिंल्लक्ष्ये युगपद् द्वयो. विरोधो नास्ति । अतः परत्वं कथमिति चेदुच्यते । अत्र युगपद्संभवरूप एव विप्रतिषेधो गृह्यते न तु परस्परविरोधरूपः । अत्र युगपद् द्वयोरसंभवो विद्यते अतः परत्वं युज्यते । नन्वेवमसिद्धवदत्राभात् इत्यनेनापि परस्परदृष्ट्या परस्परस्यासिद्धत्वप्रतिपादनादेकस्मिंल्लक्ष्ये द्वयोर्विरोधाभावेपि युगपदसंभवरूपविप्रतिषेधस्य ग्रहणं युज्येत । अतः परत्वविषये घुमास्थेति सूत्रस्थं हलीति ज्ञापकं व्यर्थमिति चेत्सत्यम् । हलिग्रहणं न विप्रतिषेधस्य अपूर्वबोधकं किं तु युगपदसंभवरूपो यो विप्रतिषेधो गृह्यते तस्य पोषकमात्रम् । पूर्वत्रासिद्धमित्यधिकारे तु न विप्रतिषेधः । पूर्वदृष्ट्या परस्यासिद्धत्वे तस्यातीव दुर्बलत्वात् । एवं च समबलत्वाभावाच्च विप्रतिषेधः । नन्वेवं कैयटोक्तं परत्वं युज्यते कथंचित्परंतु ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुणः इत्यन्तरङ्गत्वाद् गुण एव स्यात् इति भाष्यं कथं लापनीयम् । तत्र परत्वस्यानुक्तेरिति चेदुच्यते । अन्तरङ्गत्वादुभयोः समबलत्वेन परत्वाद् गुण एव स्यादिति वाक्यशेषेण योज्यम् ॥ चिन्त्यमिति । ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद्गुण एव स्यात् इत्यस्य स्वरसतः पूर्वोक्तोर्थो न भवति । अतोत्रासंगतिः । एवं संज्ञाकृतबहिरङ्गत्वमाश्रित्य गौधेरः पचेरन् इत्यादौ यलोपविषये प्राचीनोक्त समाधानं खण्डयति—वाडिलोप इति । अत्र भाष्यकारैः पदसंज्ञायां नलोपासिद्धत्वस्य प्रयोजनं नास्तीत्युक्तम् । एतद् भाष्य प्राचीनैः अन्तरङ्गायां पदसंज्ञायां कर्तव्यायां

---

१ A. B. D. E. G. K. ०भाष्येण परि० ; C. ०भाष्ये च परि० ; P. भाष्येण च परि०.
२ A. P. सप्तम्य द्यन्तोपात्त ; B C. D. E. K. G. H. M. सप्तम्याद्यन्ततयोपात्त
३ A. D. E. M. H. G. तत्सूत्रभाष्ये एव.

णादिके नप्रत्यये गुणवलोपोठां प्रसक्तं ऊडपवादत्वाद्वलोपं बाधते गुणं त्वन्तरङ्गत्वाद्बाधते । गुणो ह्यङ्गसंबन्धिनीमिग्लक्षणां लघ्वीमुपधामार्धधातुकं चाश्रयति । ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यणगुणौ प्राप्नुत इति । एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत् । न । तदन्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासंगतेः । बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयालाभाच्च । तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत् ।। अत एव विप्रतिषेधसूत्रे भाष्ये गुणाद्यणादेशोऽन्तरङ्गत्वादित्यस्य स्थाने इत्युदाहरणं न तु गुणादूडन्तरङ्गत्वादित्युक्तम् । त्वद्रीत्या तदपि वक्तुमुचितम् । प्राथम्यात्तदेव वा वक्तुमुचितम् । मम त्वन्तरङ्गपरिभाषया तद्वारणासंभवात्तन्नोक्तम् । किंच सिद्धान्ते नित्यत्वात्पूर्वमूड्[1] गुणस्तूठि यणा बाधितत्वादनित्यः । ऊनशब्दमाश्रित्ये-

कृते त्रयाणां कार्याणां प्राप्तिः । तत्र पूर्वं नाप्राप्ते वलोपे आरभ्यमाणः ऊठ् वलोपं बाधते । ततः ऊड्गुणौ प्राप्तौ । तत्र ऊठः अन्तरङ्गत्वाद् यणः गुणबाधकत्वमिष्यते इति भाष्यं योज्यम् ॥ ननु नशब्दमाश्रित्य गुण इति भाष्यकारोक्तं न युक्तम् । तथाहि । कार्यी निमित्ततया नाश्रीयते गुणे कर्तव्ये । कार्यी इकारः । तस्य न इति आश्रयः । परन्तु ऊनशब्देऽपि यः ऊकारः स गुणस्य निमित्तं इति वक्तव्ये न काचित् क्षतिः इति चेन्न । वस्तुतः तस्य निमित्तत्वाभावात् । किं च उकारस्यापि निमित्तत्वं कारणत्वमिति उच्यते तर्हि या या कारणता सा सा किंचिद्धर्मावच्छिन्ना इति नियमात् अस्य निमित्ते कारणस्य को धर्मः इति चेदुच्यते । अत्त्व हि उपधासंज्ञाद्वारा निमित्तं गुणस्य एवं च उकारो निमित्तं स्यात् इति चेन्न । परम्परानिमित्तस्यानाश्रयणात् । किं च । अत्त्वं हि उपधासंज्ञायाः प्रयोजकम् । संज्ञासापेक्षत्वेन च बहिरङ्गत्वं नाश्रीयते इति सिद्धान्तः । एवं च न गुणस्य ऊकारो निमित्तं किंतु नशब्द एव । अतो नशब्दमाश्रित्य इति सम्यगेव । बहुपदार्थरूपसंज्ञापञ्चकरूपमेव । भाष्यासंगतेरिति । ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुणः इत्यन्तरङ्गत्वाद् गुण एव स्यात् इति भाष्यकृता उक्तम् । भवन्मते यदि संज्ञासापेक्षत्वेन बहिरङ्गत्वं स्यात् तर्हि संज्ञापञ्चकसापेक्षत्वेन गुणस्य बहिरङ्गत्वं स्यात् । तथा चान्तरङ्गत्वाद् गुण एव स्यादिति भाष्यं निरुध्येतेत्यर्थः ॥ किं चेति । परत्वाद् गुण इति । अयं कैयटाभिप्रायः । ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुण इति स्वीकृते गुणः अन्तरङ्गो भवति । तथा

1 C. नित्यत्वात्पूर्वं°; A. D. E. B. G. H. M. नित्यत्वाद्गुणात्पूर्वं°.

स्यादिभाष्येण[1] च परिभाषायामङ्गशब्देन संसम्याद्यन्तोपात्तं[2] शब्दरूपं, निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् ॥ यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रित्येत्यादिभाष्यासंगत्या चिन्त्यम् ॥ वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्तत इति तु न युक्तम् । तत्सूत्रे[3] भाष्य

च गुणस्य संज्ञापञ्चकसापेक्षत्वेन अन्तरङ्गो यण् भवति । एवं च तत्तन्निमित्तापेक्षया द्वयोरप्यन्तरङ्गत्वं प्राप्तम् । अतः परत्वाद् व्यवस्था क्रियते । परत्वं च गुणस्य । अतः परत्वाद् गुणः इति कैयटेनोक्तम् । ननु नैतत्परत्वं युज्यते । कैयटरीत्या परस्परनिरूपितं परस्परस्यान्तरङ्गत्वं बहिरङ्गत्वं च विद्यते तत्र असिद्धपरिभाषया परस्परनिरूपितपरस्परस्य असिद्धत्वे प्रतिपादिते एकस्मिंल्लक्ष्ये युगपद् द्वयोः विरोधो नास्ति । अतः परत्वं कथमिति चेदुच्यते । अत्र युगपद्संभवरूप एव विप्रतिषेधो गृह्यते न तु परस्परविरोधरूपः । अत्र युगपद् द्वयोरसंभवो विद्यते अतः परत्वं युज्यते । नन्वेवमसिद्धवदत्राभात् इत्यनेनापि परस्परदृष्ट्या परस्परस्यासिद्धत्वप्रतिपादनादेकस्मिंल्लक्ष्ये द्वयोर्विरोधाभावेपि युगपदसंभवरूपविप्रतिषेधस्य ग्रहणं युज्येत । अतः परत्वविषये घुमास्थेति सूत्रस्थं हलीति ज्ञापकं व्यर्थमिति चेत्सत्यम् । हलिग्रहणं न विप्रतिषेधस्य अपूर्वबोधकं किं तु युगपदसंभवरूपो यो विप्रतिषेधो गृह्यते तस्य पोषकमात्रम् । पूर्वत्रासिद्धमित्यधिकारे तु न विप्रतिषेधः । पूर्वदृष्ट्या परस्यासिद्धत्वे तस्यातीव दुर्बलत्वात् । एवं च समबलत्वाभावाच्च विप्रतिषेधः । नन्वेवं कैयटोक्तं परत्वं युज्यते कथंचित्परंतु ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुणः इत्यन्तरङ्गत्वाद् गुण एव स्यात् इति भाष्यं कथं लापनीयम् । तत्र परत्वस्यानुक्तेरिति चेदुच्यते । अन्तरङ्गत्वादुभयोः समबलत्वेन परत्वाद् गुण एव स्यादिति वाक्यशेषेण योज्यम् ॥ चिन्त्यमिति । ऊनशब्दमाश्रित्य यणादेशः नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद्गुण एव स्याद् इत्यस्य स्वरसतः पूर्वोक्तोर्थो न भवति । अतोत्रासंगतिः । एवं संज्ञाकृतबहिरङ्गत्वमाश्रित्य गोधेरः पचेरन् इत्यादौ यलोपविषये प्राचीनोक्तं समाधानं खण्डयति—वलिलोपे इति । अत्र भाष्यकारैः पदसंज्ञायां नलोपासिद्धत्वस्य प्रयोजनं नास्तीत्युक्तम् । एतद् भाष्यं प्राचीनैः अन्तरङ्गायां पदसंज्ञायां कर्तव्यायां

1 A. B. D. E. G. K. ०भाष्येण परि० ; C. ०भाष्ये च परि० ; P. भाष्येण च परि०.

2 A. P. सम्याद्यन्तोपात्तं, B. C. D. E. K. G. H. M. सम्याद्यन्ततयोपात्तं

3 A. D. E. M. H. G. तत्सूत्रभाष्ये एव.

एव मथ्यादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न न च बृश्चतीत्यादौ चारितार्थ्यं बहिरङ्गतया संप्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः ॥ यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात्पञ्चेत्यत्र न षट् ( ४. १. १० ) इति निषेध इति तच्चिन्त्यम् । नलोपस्य[१] हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम् । तच्च न संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्[२] । पञ्चेत्यत्र निषेधस्तु स्त्रियां यत्प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम् ॥ अत एव कृति तुग्ग्रहणं चरितार्थम् । वृत्रहभ्यामित्यादौ पद-

---

पदसंज्ञाप्रातिपदिकसंज्ञासापेक्षत्वेन बहिरङ्गस्य नलोपस्य असिद्धत्वमिति नलोपस्यासिद्धत्वान्न नलोपःसुप्स्वरेति असिद्धत्वस्य षट्संज्ञायां प्रयोजनमिति लाभ्यते तत् खण्डयति—यत्तु इत्यादिना । ननु तर्हि नलोपस्य सिद्धत्वाट्टाप् स्यादिति चेन्न । पञ्चेति । सामर्थ्येनेति । बाध्यसामान्यचिन्तया स्त्रियां यत्प्राप्नोति पञ्चेत्यत्र टाबभावार्थं क्रियते । यदि अत्र षट्संज्ञाभावान्निषेधो न प्राप्नोति तर्हि व्याख्यानं व्यर्थं स्यात् । यत्तु पञ्चेत्यत्रान्तरङ्गायां षट्संज्ञायां कर्तव्यायां बहिरङ्गस्य नलोपस्यासिद्धत्वमिति असिद्धत्वप्रतिपादनात् षट्संज्ञायां सत्यां न षट्स्वस्रादिभ्य इति निषेधान्न टाबिति सिद्धान्तकौमुद्यामुक्तं तस्यायमभिप्रायः । नात्र यथोद्देशकार्यकालाभ्यां सिद्धिः । तथा हि । यथोद्देशे लुगर्थं कृता संज्ञा स्थानिवद्भावेन आनेया इति वक्तव्यम् । परन्तु षट्संज्ञायां नलोपेति भाष्यमुद्देश्यविषयकम् । एवं च नकारस्य विद्यमानत्वादादेशाभावेन तत्स्थानिवद्भावप्राप्तिः इदानीं कर्तव्येति चेन्न । उक्तभाष्येण नलोपस्य सिद्धत्वान्नान्तत्वाभावेन न स्थानिवद्भावप्राप्तिः । कार्यकालपक्षेऽपि नेदानीं कर्तुं शक्या उक्तभाष्यान्नलोपस्य सिद्धत्वेन नान्तत्वाभावात् । कार्यकालपक्षे न षट्स्वस्रादिभ्य इति सूत्रं ष्णान्ता षट् इत्यनेन एकवाक्यतापन्नम् । न च न षडिति सूत्रं स्थानिवत्सूत्रेण एकवाक्यतां कृत्वा तेन आनेयेति वाच्यम् । उक्तभाष्यक्रमात् । ष्णान्ता इति सूत्रे भाष्ये उपदेशे षान्ता नान्ता च संख्या षट्संज्ञा स्यादिति उपक्रमं कृत्वा नलोपस्येति भाष्यकारैरुक्तम् । अतः पूर्वापरसंदर्भादिदं भाष्यमुपदेशविषयकम् । उपदेशविषयकत्वेन नकारस्य विद्यमानत्वेन आदेशाभावात् । एवं च न किमपि सिध्यति । अतः भूतपूर्वेति । ननु नलोप इति सूत्रस्य त्रिपादीस्थत्वे तत्कृतनलोपस्यासिद्धत्वात्कथं स्थानिवद्भाव इति चेदुच्यते । इदुदुपधस्येति सूत्रे अप्रत्ययग्रहणेन असिद्धत्वाभावस्य

---

१ A. D. E. K. C. M. नलोपस्य हि पदसंज्ञासापेक्ष° ; B. नलोपस्य पदसज्ञासापेक्ष° ; G. H. P. नलोपे हि पद°.

२ A. D. E. K. C. G. H. M. संज्ञाकृतबाहि° ; B. संज्ञाकृतस्य बहि°.

त्वनिमित्तकत्वेऽपि नलोपस्य बहिरङ्गत्वाभावात् । म्यामः पदसंज्ञानिमित्तत्वेऽपि नलोपस्य तन्निमित्तकत्वाभावात् । परंपरया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे तु न मानम् । ध्वनितं चेदं नलोपः सुप्० ( ८. २. २ ) इति सूत्रे भाष्य इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम् ॥

---

ज्ञापनात् । अत्रोच्यते । कार्यं द्विविधम् । ज्ञातं कर्तव्यं च । तत्र प्राचीनैः कर्तव्ये कार्ये त्रिपाद्यां सूत्रं नीयते । अत्र प्रमाणं धर्मिग्राहकमानम् । अप्रत्ययग्रहणं हि स्थानिवत्सूत्रस्य त्रिपाद्यां प्रवृत्तौ मानम् । तच्चाप्रत्ययग्रहणं अग्निः करोति इत्यत्र षत्वाभावार्थम् । एवं चात्र अप्रत्यय इति निषेधे कर्तव्ये स्थानिवत्सूत्रमानीयते । इदं धर्मिग्राहकमानम् । लौकिकी युक्तिरपि । किंचिन्निमित्ताभावेन विधिसूत्राप्रवृत्तौ अतिदेशो मृग्यते । तच्च कार्यं कर्तव्यमेव । जाते कार्ये स्थानिवत्सूत्रस्योपयोगो नास्त्येव । एवं च कर्तव्ये कार्ये स्थानिवत्सूत्रं त्रिपाद्यां प्रवर्तते । एतत्फलमबान्धामिति प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो न । प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वादित्युक्त कौमुद्याम् । प्रत्ययलक्षणसूत्रं च स्थानिवत्सूत्रस्य प्रपञ्चः । उक्तोदाहरणे स्थानिवत्सूत्रदृष्ट्या सिद्धमिति सार्वत्रिकं प्राचीनैः स्वीक्रियते तेन दोषोपि देयः । जातं कार्यं तु तत्र तत्र प्रमाणं दृत्वासिद्धमित्युच्यते । अनेन च दोषो न देयः । यथा रामः इत्यत्र विसर्गः सिद्ध एव कर्तव्यत्वात् । एवं तु प्रत्ययनिर्देशात्सिद्धं वक्तव्यम् । अबान्धाम् इत्यत्र भष्भावः सिद्ध एव कर्तव्यत्वात् । सिज्लोपस्तु न सिद्धः जातत्वात् । एवं च प्राचीनमते अप्रत्यय इति ज्ञापकात् स्थानिवद्भावं प्रति अन्तादिवच्चेत्येवं प्रति नियमपक्षे विध्यर्थपक्षे वा प्रत्ययलक्षणसूत्रं प्रति त्रिपादीस्थं कर्तव्यं सिद्धं, कृतं तु न सिद्धम् । स्थानिवत्सूत्रस्योदाहरणं 'अग्निः करोति' इति । अन्तादिवच्चेत्यस्योदाहरणं क्षीरपेण । अत्र एकाजुत्तरपदे णः इति णत्वे कर्तव्ये 'पे' इत्यस्य एकाजुत्तरपदत्वं सिध्यति । प्रत्ययलक्षणसूत्रस्योदाहरणं 'हे दीर्घाहो निदाघ' इति पुंसि संबुद्ध्यन्तम् । अत्र रोमुषीति 'असुपि' इति निषेधे कर्तव्ये प्रत्ययलक्षणं त्रिपाद्यां सिध्यति । अत्र प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो नेति प्रत्ययलक्षणं प्रति सिज्लोपस्य सिद्धत्वात् इति कौमुदी वार्तिकमते विध्यर्थपक्षे बोध्या । नियमपक्षे प्रत्ययलक्षणसूत्रस्य स्थानिवत्सूत्रप्रपञ्चत्वात्सादित्वस्य विशेषणतया अल्वृत्तित्वादनल्विधाविति निषेधात् । एतत्सर्वं प्राचीनमतम् । तस्य प्रकृते नोपयोगः । तन्मते मान्तसंख्यात्वरूपपदत्वस्य अल्वृत्तित्वेन स्थानिद्भावेन आनेतुमशक्यत्वात् । अतः प्रस-

---

१ B. तत्रैव प्रदीपो°.

अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः । [1]वृश्चत्यादिषु पदसंस्कारपक्षे समानकालत्वमेव [2]द्वयोरिति बोध्यम् ॥ एते-नान्तरङ्गं बहिरङ्गाद्बलीय इति [3]परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य विप्रतिषेधसूत्रे [4]भाष्ये [5]तस्याः प्रत्याख्यानाच्च ॥ [6]अन्तरङ्गशास्त्रत्वमस्या

ङ्गतः अत्र प्राचीनमतं लिखितमिति बोध्यम् । अथ नवीनमतेनोच्यते । तर्हि अप्रत्यय इति ज्ञापकात्स्थानिवत्सूत्रं त्रिपाद्यां कर्तव्ये कार्ये जातकार्ये च नीयते । न चैवं अव्रान्ध्वामित्यत्र सादिप्रत्ययमानीय भष्भावः स्यादिति वाच्यम् । प्रत्ययलक्षणसूत्रस्य नियमार्थत्वेन स्थानिवत्सूत्रप्रपञ्चत्वात् । सादिप्रत्ययस्य अल्वृत्तित्वेन स्थानिवद्भावाभावात् । एतच्च भ्वादिगणे शेखरे स्पष्टम् । भष्भावविधायके सूत्रे ध्वसाहचर्यात् सपदेन सादिप्रत्यय एव गृह्यते । प्रकृतस्थले पक्षेऽप्यत्र अप्रत्ययज्ञापकेन त्रिपाद्याः सिद्धत्वात् । स्थानिवद्भावेन षट्त्वं कुतो नानीयते इत्यस्योत्तरं दीयते । यद्यपि अप्रत्ययज्ञापकेन स्थानिवत्सूत्रं त्रिपाद्यां गच्छति तथापि प्रकृतस्थले न गच्छति । तथाहि । अप्रत्यय इति ज्ञापकात् सिद्धत्वं प्राप्तम् । नलोपः सुप्० इत्यनेन असिद्धत्वं प्राप्तम् । 'अत्र किं ग्राह्यम्' इत्याकाङ्क्षायां प्रत्यक्षमनुमानात् प्रबलमिति अप्रत्ययग्रहणेन ज्ञापितं सिद्धत्वं बाध्यते । नलोपः सुप्० इत्यस्य प्रत्यक्षत्वात् । ज्ञापकसिद्धासिद्धत्वस्य चारितार्थ्यं नलोपः सुप्० इति व्यतिरेकस्थले अग्निरित्यादौ । प्रत्यक्षस्य अनुमानबाधकत्वमग्रे स्पष्टम् । एवं भूतपूर्वपदत्वमादाये-त्यादिशेखरग्रन्थः सम्यगेव ॥

पदसंस्कारपक्ष इति । पदसंस्कारत्वं नाम पदसमाप्तिपर्यन्तं प्रकृतिप्रत्ययान् प्रस्थाप्य क्रमपूर्वककार्यकर्तव्यरूपत्वम् । अत्र किंचित् परिभाषाविषयो लिख्यते—अस्यां परिभाषायां षट् प्रकारा भवन्ति—अन्तरङ्गे कर्तव्ये जातं, तत्कालिकं, प्राप्स्यमानमिति त्रयः । तथा अन्तरङ्गे कृते त एव त्रयः । अत्र कोऽर्थो ग्राह्य इति चेदुच्यते—अन्तरङ्गे कृते बहिरङ्गस्यासिद्धत्वकथनं निष्फलम् । एतेन त्रयः पक्षाः गताः । तथा अन्तरङ्गे कर्तव्ये प्राप्स्यमानस्य बहिरङ्गस्य असिद्धत्वकथनं व्यर्थम् । यथा गोधेरः इत्यत्र वलिलोपे प्राप्स्यमाने यवादेशादेरपरनिमित्तकत्वेन अन्तरङ्गत्वं ज्ञातव्यम् । परंतु अन्तरङ्गस्य जातत्वात्तद् व्यर्थम् । अन्तरङ्गे

१ E. P. वृश्चत्यादिषु, B. C. G. व्रश्चादिषु. M. व्रश्चत्यादिषु H. वृश्चतीत्यादिषु.
२ A. D. E. K. C. G. M. द्वयोरिति; B. द्वयोरपि.
३ B. परिभाषान्तरमपास्तम्.
४ G. E. सूत्रभाष्ये.
५ B. M. तत्प्रत्याख्यानाच्च ॥
६ B. अन्तरङ्गशास्त्रमस्या.

लिङ्गम् ॥

इयं च त्रिपाद्यां न प्रवर्तते त्रिपाद्या असिद्धत्वात् । अस्यां च वाह ऊठ्सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा संप्रसारणमात्रविधानेन लघूपधगुणे वृद्धिरेचि ( ६. १. ८८ ) इति वृद्धौ विश्वौह इत्यादिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । सत्यां[1] ह्येतस्यां बहिरङ्गसंप्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यात् ॥ न च पुगन्त० ( ७. ३. ८६ ) इति सूत्रे निमित्तमिको विशेषणमत एव भिनत्तीत्यादौ न गुण एवं च नाजानन्तर्ये० ( परि.५१ )

यणादेशे कृते वल्लिलोपो भवत्येव । एवं च असिद्धत्वं व्यर्थम् । जातं तत्कालिकं च अवशिष्टम् । तत्रैवेयं परिभाषा प्रवर्तते इति सिद्धम् । लिङ्गमिति । अस्य फलं हे पयोद । अत्र एकपदस्थवर्णद्वयसापेक्षत्वेन अन्तरङ्गे अतो रोरप्लुतादिति उत्वे कर्तव्ये वाक्यसंपादकपदान्तसापेक्षप्लुतस्य असिद्धत्वम् । एवं च प्लुतस्यासिद्धत्वात् अतो रोरप्लुतादप्लुते इत्यनेन उत्वं भवति । यद्यपि परिभाषादृष्ट्या प्लुतस्य असिद्धत्वं विद्यते तथापि अन्तरङ्गमुत्वं नासिद्धम् । प्लुतस्यासिद्धत्वेपि न काचित् क्षतिः । स्वदृष्ट्या असिद्धत्वस्यापि परं प्रति सिद्धस्य मुमूर्षुन्यायेन असिद्धत्वप्रतिपादनं युज्यते । स्पष्टं चैतच्छब्देन्दुशेखरे स्वादिसंधौ । अतः इयं परिभाषा अन्तरङ्गदृष्ट्या प्रवर्तते इत्यर्थः । स्पष्टं चेदमन्तरङ्गपरिभाषातत्त्वप्रकाशिकायाम् ॥

त्रिपाद्या असिद्धत्वादिति । एवं चान्तरङ्गशास्त्रं न दृश्यते, अतो न परिभाषा प्रवर्तते । ज्ञापकमिति । संप्रसारणस्य हि विश्ववाह् शस् इति प्रकृतिप्रत्ययसमुदायोपेक्षितः, गुणस्य तदन्तर्गतः केवलो णिच्प्रत्ययस्तथा च लघूपधमङ्गम् । एवं च संप्रसारणस्यासिद्धत्वाद् गुणो न । ननु कार्यी निमित्ततया नेति परिभाषया अत्र वाह इत्यस्य कार्यित्वान्निमित्तत्वं न स्यात् । तथा च कथमत्र संप्रसारणस्य बहिरङ्गत्वमिति चेदुच्यते । अत्र उत्तरचतुष्टयं वर्तते । तद्यथा । गुणानां परार्थत्वादिति न्यायेन परिभाषयोः परस्परं संबन्ध एव न, अतो न दोषः इति एकम् । इग्यणः संप्रसारणमिति संज्ञायाः द्वौ पक्षौ । वर्णसंज्ञापक्षः वाक्यार्थसंज्ञापक्षश्चेति । तत्र वाक्यार्थसंज्ञापक्षे कार्यकालपक्षे च वाक्यैकवाक्यता कर्तव्या । तदानीमयमर्थः । वाहशब्दान्तं यदङ्गं भसंज्ञं तदवयवीभूतो यो वाह्शब्दस्तदवयवीभूतस्य यणः इगादेशो भवति इति । अत्र च वकारस्य निर्दिश्यमानत्वात्तन्मात्रस्यैव कार्यित्वम् । एवं च तस्यैव निमित्तत्वं न स्यात् । अन्येषां निमित्तत्वेनाश्रयितुं

1 P. सत्यां ह्येतस्यां ; A. B. C. D. G. H. M. सत्यां हि तस्यां.

इति निषेधात्कथं परिभाषाप्रवृत्तिरिति वाच्यम् । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात् । पुगन्तेत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इतीको गुणवृद्धी ( १. १. ३ ) इति सूत्रभाष्यसमतेऽर्थे भिनत्तीत्यादावदोषाच्च ॥ अकारान्तोपसर्गेऽनकारान्ते चोपपदे वहेर्वाहेर्वा ण्विविचावनभिधानान्न स्त एव । वार्यूहेत्यादि तूहते क्विपि बोध्यम् । धातूनामनेकार्थत्वान्नार्थासंगतिः । प्रौढ इत्याद्यसाध्वेव वृद्धेरप्राप्तेः । अस्योहस्यानर्थक्यान्न प्रादूहोढो० ( ६. १. ८९ वा ३ ) इत्यस्यापि प्रवृत्तिः ॥ न च कार्यकालपक्षे त्रिपाद्यांमतःप्रवृत्तिर्दुर्वारेति वाच्यम् । पूर्वं प्रति पर-

---

युक्तमेवेति न दोष इति द्वितीयम् । तथा भसज्ञासबन्धिकार्यकालपक्षे याचि भम् इत्यनेन वाह ऊठ् इत्यस्य वाक्यैकवाक्यता कृत्वा शस्प्रत्ययस्य सम्प्रसारणनिमित्तत्वेन बहिरङ्गत्व गुणस्य तु अन्तरङ्गत्वामिति न दोष इति तृतीयम् । अङ्गसज्ञाक्षिप्तप्रत्ययेन वाहो विशेषणात् इति शेखरोक्त चतुर्थम् । अत्र आद्यमन्तिम च साधु । मध्यम तु अयुक्तम । तथा हि—द्वितीयोत्तर कार्यानुभवविशिष्टवर्णसमुदायघटित० इति परिष्कारेण सह विरोध । तृतीये तु अन्तरङ्गशब्द कथचियोज्यत इति असाध्वव । एव च सम्प्रसारणस्य वहिरङ्गत्व स्पष्टमेव । *अतो गुणो न स्यात् । अत ऊठ्ग्रहणमावश्यकमिति चारितार्थ्यम् ।* ननु उक्तरीत्या सम्प्रसारणस्यासिद्धत्वपि तत्स्थानिकस्य पूर्वरूपस्य आसिद्धत्व नास्ति । प्रकृते च पूर्वरूप नीयते । तस्य अन्तरङ्गपरिभाषया आसिद्धत्व नास्ति । अतो गुणो भवेदिति स्वाशे चारितार्थ्याभाव । न च सम्प्रसारणस्य बहिरङ्गपरिभाषया आसिद्धत्वात् स्थानिकस्य पूर्वरूपस्यापि असिद्धत्व सुलभमिति वाच्यम् । शिवोर्च्य इत्यत्र गुणाभावप्रसङ्गात् । तत्र हि सुस्थाने जायमानस्य रुत्वस्यासिद्धत्वात् तत्स्थाने विद्यमानस्योत्वस्यासिद्धत्व भवेत् । तत्र यदि उत्वदृष्ट्या रुत्वस्यासिद्धत्व नास्ति तथापि आद्गुण इत्यस्य दृष्ट्या असिद्धत्व वर्तत एव । अतोऽत्र गुणो न भवेत् । यदि तत्र रुत्वस्यासिद्धत्वेऽपि सपादीस्थस्य उत्वस्यासिद्धत्व नास्ति इति ब्रूषे तर्हि अत्रापि सम्प्रसारणस्यासिद्धत्वेऽपि पूर्वरूप सिद्ध स्यात् । तथा च पूर्वोक्तदोष स्पष्ट एव । इयमेव उभयतस्पाशा रज्जुरिति । अत्रोच्यते । अनयो-

---

१ A D C. G M गुणवृद्धाति°, B om इति
२ B. वायूहेत्याद्यूहते A D. वायूह इ या दि तु ऊहत
३ M. P त्रिपाद्याभेतत्र°, A D L B G G H त्रिपाद्या तत्र°

स्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया[1] तस्यासिद्धत्वप्रतिपादनासंभवात्। न चानया पूर्वस्यासिद्धत्वात्तदभावेन[2] तं प्रति परासिद्धत्वं पूर्वत्र० ( ८. २. १ ) इत्यनेन वक्तुमशक्यमिति वाच्यम्। एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः। किंच पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः। अतः कार्यकालपक्षेऽपि त्रिपाद्यामस्या[3] अनुपस्थितिरेव॥ अत एव कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्त्वातोऽयुक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वादितीत्युक्तं विसर्जनीयसूत्रे[4] भाष्ये सिद्धान्तिना। त्रिपादीस्थेऽन्तरङ्गे कर्तव्येऽयं परिहारो न युक्त इति तदर्थः। किंतु वचनमेवारब्धव्यमिति तदाशयः। अत एव निगाल्यत इत्यादौ लत्वार्थं तस्य दोष इति[5] वचनमेवारब्धम्। अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव॥ येऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति तेऽपि लक्षणैकचक्षुर्भिर्नादर्तव्या[6] इति दिक्॥

[7] अत एवोमाङोश्च ( ६. १. ९५ ) इत्याङ्ग्रहणं चरितार्थम्। तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वान्तरङ्गत्वाद्गुणे कृते[8] वृद्धिप्राप्तौ

उदाहरणयोर्वैलक्षण्यं वर्तत एव। तथाहि। पूर्वरूपं नाम पूर्वस्य रूपं कर्तव्यम्। अत्र 'पूर्वोक्तम्' इति आकाङ्क्षा विद्यते। सा च 'संप्रसारणम्' इति कथिते शाम्यति। तच्च संप्रसारणमसिद्धमिति तत्स्थानिकं पूर्वरूपमसिद्धमेव। पूर्वरूपस्य विधानात्। शिवोर्च्यः इत्यत्र न तथा। गुणः कर्तव्यः तत्र उकारः कुत आगत इति दर्शनाकाङ्क्षा नास्ति। अतः तत्र उकारत्वाद् आद् गुणः इति प्रवर्तते। अत्र पूर्वरूपस्याप्यसिद्धत्वाद्गुणो न स्यादत ऊड्ग्रहणम्। अन्यत्र फलं अदीदिपत् इति॥

'मनुष्योयं प्रातरुत्थाय०' इति न्यायेनास्यां परिभाषायामन्तरङ्ग गृह्यते इति स्वीकृत्य बाहिरङ्गादन्तरङ्गं बलीयः इति परिभाषा तिरस्कृता। एतद्विषये प्रमाणयति सूत्रकारः। तदेव दर्शयति—अत एवेत्यादिना तद्धि खट्वा आ ऊढेत्यन्तेन। खट्वा आ ऊढा इत्यवस्थायां सवर्णदीर्घगुणयोः प्राप्तौ परत्वात्सवर्णदीर्घः प्राप्तः

१ A. E. C. G. M. ०भावात्तया तस्या०; B. om. तया. H. भावादनया तस्या०.
२ C. H. ०सिद्धत्वात्तदभावेन; B. G. om. तद्. A. M. अन्तरङ्गत्वाभावेन.
३ B. त्रिपाद्यामस्यानुप°. ४ B. °सूत्रभाष्ये. ५ B. om. तस्य दोष इति.
६ C. लक्षणैकचक्षुर्भिर्नादर्तव्या इति; B G. H. M. लक्षणचक्षुर्भिर्नादरणीया इति.
७ अत एवोमाङोश्च° M. अत एव ओमा०
८ B. P. G. °ङ्गत्वाद् गुणे कृते; C. om. कृते. M. H. °ङ्गत्वादाद् गुणे.

पररूपार्थम्। साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात्खट्वाशब्दस्य समुदायेन योगाद्गुणस्यान्तरङ्गत्वमिति सम्प्रसारणाच्च (६. १. १०८) इति सूत्रे भाष्ये स्पष्टम्। एहीत्यनुकरणस्य शिवादिशब्दसंबन्धे तु नास्य प्रवृत्तिर्ज्ञापकपरसम्प्रसारणाच्चेतिसूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमि-

---

तदपेक्षया कृताकृतप्रसङ्गित्वेन नित्यत्वाद् गुणः प्राप्तः। तदपेक्षया एकपदे प्रयोगीयोच्चारणक्रमेण अन्तरङ्गत्वात्सवर्णदीर्घः प्राप्तः। किं च पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण ततः शब्दान्तरेण इति सिद्धान्तेन प्रक्रियोच्चारणक्रमेण अन्तरङ्गत्वाद् गुणः प्राप्तः। एवं च द्वयोरप्यन्तरङ्गत्वात्परत्वात्सवर्णदीर्घ इत्युक्तिः। अत्र सवर्णदीर्घे कृते खट्वा ऊढा इति स्थिते गुणे रूपसिद्धिः इति वृद्धिबाधनार्थं कृतं आङ्ग्रहणं व्यर्थं सज्ज्ञापयति समकालिकप्राप्तिकं चेति। ननु ज्ञापितमपि आङ्ग्रहणं न स्वांशे चरितार्थमिति। तथाहि खट्वा आ ऊढा इत्यस्यां दशायामनया परिभाषया प्रयोगीयोच्चारणक्रमेण अन्तरङ्गस्य बलीयस्त्वात्पूर्वं सवर्णदीर्घे खट्वा ऊढा इति स्थिते वृद्ध्यापत्त्या तद्बाधनार्थं कृतमाङ्ग्रहणं पुनर्व्यर्थं सज्ज्ञापयति—अस्यां परिभाषायां समकालिकप्राप्तबहिरङ्गं प्रक्रियोच्चारणक्रमेण अन्तरङ्गनिरूपितमसिद्धम्। प्रक्रियोच्चारणक्रमेण अन्तरङ्गनिरूपितं तत्कालिकबहिरङ्गमसिद्धं न तु प्रयोगीयोच्चारणक्रमेणान्तरङ्गदृष्ट्या बहिरङ्गस्यासिद्धत्वम्। ओमाङोश्च इत्याङ्ग्रहणस्वारस्यात्। एवं च अस्या परिभाषाया यत्समकालिकप्राप्तबहिरस्यासिद्धत्वमुक्तं तत्प्रक्रियोच्चारणान्तरङ्गबहिरङ्गविषयकमेव न तु प्रयोगीयोच्चारणान्तरङ्गविषये इति भावः। तथा च तेन सवर्णदीर्घस्यासिद्धत्वबोधनात्पूर्वं गुणे सति वृद्धिः स्यात्। तद्बाधनार्थमाङ्ग्रहणमिति तच्चारितार्थ्यम्। अन्यत्रफलं शोधनीयम्॥ समानकालिकबहिरङ्गं त्रिविधम्। प्रक्रियोच्चारितक्रमेण, नानापदे प्रयोगीयोच्चारितक्रमेण, एकपदे प्रयोगीयोच्चारितक्रमेण अन्वाख्यायमानामिति। ओमाङोश्चेत्यत्राङ्ग्रहणं किमर्थं तर्हि खट्वा आ ऊढा इत्यत्र वृद्धिबाधनार्थम्। तथा हि—खट्वा आ ऊढा इत्यवस्थायां गुणः संप्राप्तः सवर्णदीर्घश्च प्राप्तः। न च गुणस्यानित्यत्वमिति भ्रमितव्यम्। शब्दान्तरस्य प्राप्तत्वेन तस्य नित्यत्वात्। न च प्रक्रियोच्चारितक्रमेण अन्तरङ्गत्वम्। कुतः। पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेति भाष्यात्। तेन पूर्वमूढ इति जातम्। एवं च आ ऊढ इत्यस्य आदौ संबन्धः। तेन प्रक्रियोच्चारणक्रमेण

---

1 B. P. साधनबोधन°; C. G. H साधकबोधक°.

स्यतिदेशमादाय लब्धाङ्त्व एतदप्रवृत्तेः ॥ यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन । उपसर्गेण तत्संज्ञकशब्देन । साधनेन कारकेण तत्प्रयुक्तकार्येण । अत एवानुभूयत इत्यादौ सकर्मकत्वात्कर्मणि लकारसिद्धिरिति तन्न । क्रियायाः साध्यत्वेन बोधात्साध्यस्य च साधनाकाङ्क्षया तत्संबन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य संबन्धौचित्यात् ।

---

अन्तरङ्गत्वं गुणस्य वर्तते इति वाच्यम् । पूर्वोपस्थितनिमित्तकत्वेन सवर्णदीर्घस्यापि तत्त्वं सुवचम् । एवं पुनरपि सवर्णदीर्घः प्राप्तः इति आड्ग्रहणं व्यर्थं ज्ञापयति— प्रक्रियोच्चारणक्रमेण अन्तरङ्गबहिरङ्गासिद्धत्वविषये इयं परिभाषा प्रवर्तते । पूर्वोपस्थितनिमित्तकत्वेन अन्तरङ्गविषये तु न नास्याः प्राप्तिः, किं तु लौकिकदृष्टान्तेन प्रथमोपस्थितिरेव । यथा स्वशरीराणि ... इति शेखरोक्तो ग्रन्थः । स च शब्दरत्ने स्पष्टीकृतो ज्ञेयः । एवं च गुणे सति वृद्धिर्भवेत् इति तद्बाधनार्थमाड्ग्रहणम् । परन्तु तदपि न युज्यते । कुतः । प्रक्रियोच्चारितस्य समकालविषयत्वात् । समकालप्राप्तिविषये अन्तरङ्गपरिभाषाभावेन न गुणस्य प्राप्तिः । किं तु सवर्णदीर्घस्य । अत पुनर्व्यर्थमाड्ग्रहणं ज्ञापयति— समकालप्राप्तिके अन्तरङ्गपरिभाषा प्रवर्तते इति । गुणस्यान्तरङ्गत्वं प्रतिपादयति— साधनेति साधनं कारकम् । भाष्ये स्पष्टमिति पूर्वं धातुः साधनेन पश्चादुपसर्गेण ततः शब्दान्तरेण इति रीत्या स्पष्टम् । लब्धाङ्त्वे इति । लब्धमाड्त्वं यस्मिन् । भाष्यप्रामाण्येनेति अनित्यत्वे हेतु । किं चाप्रवृत्तेरपि हेतुः । एवं च अनित्यत्वात् प्रकृतिवदनुकरणमिति न्यायो न प्रवर्तते । तथा च आड्त्वाभावात्र सूत्रप्राप्तिः ॥ साध्यत्वेनेति । क्रियते सा क्रिया नाम क्रियमाणा साध्या इत्यर्थः । क्रियते सा क्रिया इत्युक्ते केन क्रियते इत्याकाङ्क्षा विद्यते । सा च साधनाकाङ्क्षा । एव च केनचित् क्रियमाणा सा क्रिया कारकविशिष्टेति तदाह— तत्संबन्धोत्तरमेवेति ॥ साधनं हि क्रियां निर्वर्तयति नाम उत्पादयति । कारकेण क्रिया उत्पाद्यते । अत्रेयं शङ्का—कथं तर्हि पूर्वं धातुरुपसर्गेण युज्यते इति भाष्यम् इति चेदुच्यते । अस्य भाष्यस्याशयस्तु अन्य एव । पूर्वं धातुरुपसर्गेण नाम उपसर्गार्थेन युज्यते पश्चात्साधनबोधकप्रत्ययेन इत्यर्थो लक्षणया स्वीकार्यः इति । न चैवं पूर्वभाष्यस्य नैतत्सारस्यनेन खण्डनं न युज्यते इति चेन्न । पूर्वं धातुरुपसर्गसंज्ञकशब्देन युज्यते इति केषांचिद् भ्रमः स्यात्स मा भूदिति तस्य खण्डनम् । एवं च भाष्यस्य न पूर्वापरविरोध इति । एवं प्राचीनपूर्वपक्षो निर्मूलः इति ज्ञेयम् ॥

---

१ P. mentions the reading साधनाकाङ्क्षत्वात्.

अत एव सुट् कात्पूर्वः ( ६. १. १३५ ) इति सूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्वा नैतत्सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वोक्तयुक्त्यास्यैव युक्तत्वमुक्तं साधनं हि क्रियां निर्वर्तयतीत्यादिना । उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्मणि लकारादिसिद्धिः । पक्षौच्छ्रोतुबाधाय द्योतकोपसर्गसंबन्धः॥ एवं चान्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् संकृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते ततो द्वित्वादि ॥ अत एव प्रणिदापयतीत्यादौ णत्वं यदागमाः (परि० ११) इति न्यायेन समाहितं भाष्ये ॥ अत एव प्रत्येति प्रत्यय इत्यादिसिद्धिः ।

---

किं च पूर्वं धातुः साधनेन युज्यत इति योऽर्थ उक्तः तस्यैव युक्तत्वमुक्तं भाष्ये । साधनं हि क्रियां निर्वर्तयति नाम उत्पादयति, उपसर्गस्तां विशिनष्टि नाम विशिष्टां करोति । एवं च निर्वर्तकस्य साधनभूतस्य उपसर्गयोग इति स्फुटमनेन भाष्येण । नन्वेवमनुभूयते इत्याद्युदाहरणेषु कर्मणि लकारो न स्यात् । पूर्वमुपसर्गयोगाभावेन साधनबोधकस्य प्रत्ययस्योत्पत्तौ अकर्मकत्वाद् भावे प्रत्ययः स्यात्, इष्यते तु कर्मणि इति पूर्वं साधनेन युज्यते इति पक्षे दोष इति चेन्न । पूर्वमुपसर्गार्थेन योगः पश्चात्साधनप्रत्ययोत्पत्तिः ततः उपसर्गसंज्ञकेन शब्देन संबन्धः । एवं च पूर्वमुपसर्गार्थेन संबन्धादनुभूयते सुखमिति कर्मणि लकारसिद्धिः ॥ एवं च सुट्कात्पूर्वः अडभ्यासव्यवायेऽपि इति वार्तिकद्वयं भाष्ये प्रत्याख्यातम् । तत्प्रत्याख्यानप्रकारस्तु यथा–पूर्वं धातोरुपसर्गार्थेन योगादुपसर्गार्थनिमित्तकः सुडतिशयेनान्तरङ्गः । एवं च तस्यैव पूर्वमुत्पत्तौ संचस्कार इत्याद्यर्थं तत्सूत्रद्वयं न कर्तव्यमिति भावः । नन्वत्र अर्थसापेक्षत्वेनान्तरङ्गत्वं कथं स्वीकृतमिति चेत्— यत्र घटकतया वा अपरनिमित्तकत्वेन वा अन्तरङ्गं दृश्यते तत्र शब्दरूपाण्येव निमित्तानि गृह्यन्ते । अर्थस्य घटकत्वपरत्वासंभवात् । किं तु शब्दानामेव परत्वम् । कालकृतान्तरङ्गे तु ( समानकालिके ) शब्दरूपाणि वा अर्थरूपाणि वा निमित्तानि कथमपि ग्राह्याणि । कालकृतेऽपि प्रयोगीयोच्चारणक्रमेण अन्तरङ्गं अर्थवत्त्वं न संभवति । असुभुवत् इत्यादावभावात् । अत एव पूर्वं धातुः साधनेन युज्यते इति सिद्धान्तेन तिप्रत्यये कर्तव्ये णिच्पुकौ अवश्यं कर्तव्यौ । पश्चात्तिप्रत्यये कृते प्र नि इति द्वयोरुपसर्गयोः संबन्धः । ततश्च यदागमन्यायेन पकारस्य दा इत्यनेन ग्रहणं कृत्वा णत्वं क्रियते । यदि पूर्वं धातुरुपसर्गेण युज्यते इति पक्षः स्यात्तर्हि दा इत्यवस्थायामुपसर्गयोः संबन्धे कृते तदानीं पुगभावात्प्रयासं विनैव

---

१ P. पूर्वं हि ; B. C. G. H. and Bhāṣya om. हि.

२ C. G. H. P. and Bhāṣya साधनं हि ; B. om. हि.

३ P. त्यादिना भाष्ये ।

४ G. H. श्रोतृदोषाय.

अन्यथान्तरङ्गत्वात्सवर्णदीर्घे रूपासिद्धिः ॥ यदुपसर्गनिमित्तकं कार्यमुपसर्गाश्रितं विशिष्टोपसर्गनिमित्तत्वात्तदन्तरङ्गम् । यत्तु न तथा तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम् । अत एव न धातु० ( १. १. ४ ) इति सूत्रे प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्य उक्तम् ॥ किंच पूर्वमुपसर्गयोगे धातूपसर्गयोः समास ऐकस्वर्यापत्तिरित्युपपदमतिङ् ( २. २. १९ ) इति सूत्रे भाष्ये स्पष्टम् ॥ भावार्थप्रत्ययस्यापि पूर्वमेवोत्पत्तिः । अत एव णेरध्ययने० ( ७. २.

---

णत्वं स्यात् । ननु पूर्वत्रासिद्धम् इति विद्यमानत्वाण्णिजादिकार्याणां विद्यमानत्वेन कथं पूर्वमसिद्धं णत्वं स्यात् इति चेन्न । पूर्वत्रासिद्धमिति हि फलसत्त्वे प्रवर्तते । अत्र फल नास्ति । पूर्व योगे अनन्तर वा णत्वं दुर्वारमिति । अथवा योग्यतासत्त्वे एव तत्सूत्रं प्रवर्तते । यथा ऊर्णुञ् आच्छादने इति धातुना णत्वं क्रियते । अत्र ऊर्णुञ् इत्यवस्थायां त्रिपादीस्थकार्यप्रवृत्तियोग्यता नास्ति अतो णत्वं भवति । अत्र यदृच्छया द्विरुच्चारणं तस्यैवोत्तरखण्डस्य साधुत्वम् । अतो नुशब्दस्य द्वित्वमुच्यते । प्रणिदापयतीत्यत्र योग्यता कथं नास्तीति चेदुच्यते—प्रनि इत्युपसर्गसमुदायस्य दावाच्याक्रियायामेवान्वय इष्ट. । णिजन्तार्थेन्वये तु नेष्टमेव । एव च विशिष्टा या दावाच्यक्रिया तस्यां यदा प्रेरणान्वयस्तदा प्रेषणाया अविद्यमानत्वेन तद्द्योतको णिच् न प्राप्नोति । एवं णत्वप्रवृत्तिकाले णिचो न योग्यता । अतो न तत्र पूर्वत्रासिद्धमित्यस्य प्राप्तिः । प्रेद्ध इति । श्वात्वशलोपनिमित्ते आर्धधातुके परे यत्किंचिन्निमित्ते गुणवृद्धी न स्त इति पक्षे प्रेद्ध इत्युदाहरणे प्रत्ययात्पूर्वमेवोपसर्गयोगे प्रथमतो गुणः स्यात् । भाष्ये तु अन्तरङ्गपरिभाषया गुणस्य बहिरङ्गत्वमुक्तम् । एवं भाष्यकाराणामपि पूर्वं धातुरुपसर्गेण युज्यते इति पक्षः असमतः ॥ प्रत्यय इति तु पूर्वमुपसर्गयोगेपि सिद्धम् । तथा हि—पदसंस्कारपक्षे प्रति–इ–अ इत्यस्यामवस्थायां वार्णपरिभाषया प्रथमतो गुणे प्राप्य इति । तदसत् । तस्याः समकालयुगपत्प्राप्तिविषयकत्वेन अत्र च पूर्वं धातुरुपसर्गेण इति स्वीकारात् प्रथमत उपसर्गनिमित्तककार्यप्राप्तिः, पश्चात्साधनप्रयुक्तस्येति समकालप्राप्तिकत्वाभावेन परिभाषाया अप्रवृत्तेः ॥ भावार्थप्रत्ययस्येति । प्रस्थीयते संभूयते इत्यादयः सन्ति सोपसर्गा भावे ॥

---

१ C. G. रूपासिद्धि , B. H. रूपासिद्धेः.

२ C. G H. °र्गनिमित्तक, B. °र्गनिमित्त.

३ C. G. H. °निमित्तत्वात्तदन्तरङ्गम्, B. om. तद्

२६ ) इति निर्देशः संगच्छते । इदं च सामान्यापेक्षं ज्ञापकं भावतिङोऽपि पूर्वमुत्पत्तेः । अन्यथा तत्र समासापत्तिः । तिङि त्वतिङिति निषेधान्न दोषो यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम् ॥

यत्तु विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं, विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात् । यथा रुदादिभ्यः सार्वधातुके ( ७. २. ७६ ) इत्यत्र रुदादित्वं सार्वधातुकत्वं च । तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यासुडन्तरङ्गः । एतेन यदनुदात्तङित. ( १. ३. १२ ) इति सूत्रे कैयटेनोक्तं लमात्रापेक्षयान्तरङ्गास्तिबादयो लकारविशेषापेक्षत्वाद्बहिरङ्गाः स्यादय इति तत्परास्तम् । विशेषापेक्षत्वे ऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात् । परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति तन्न । विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात् । भाष्य एवंविधान्तरङ्गबहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च ॥ यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य

---

विशेषधर्मस्येति । यद्यपि निर्विशेषं न सामान्यं तथा निःसामान्यं न विशेषः इति न्यायाद्विशेषधर्मे उक्ते सामान्यधर्मस्यापेक्षा विद्यते तथा सामान्यधर्मे सत्यपि विशेषधर्मा विद्यन्ते इति उभयत्र द्वयोरपि अपेक्षा इति प्राप्तं तथापि यत्र विशेषधर्मापेक्षं कार्यं तत्र सामान्यधर्मस्य प्रयत्नपूर्वकज्ञानं विना विशेषधर्मस्य ज्ञानमेव न भवति इति तत्र द्वयोरपेक्षा । यथा ब्राह्मणमानयेत्युक्ते प्राणित्वमनुष्यत्वज्ञानं आवश्यकमेव । यत्र केवलसामान्यापेक्षं कार्यं तत्र विशेषधर्मज्ञानं विनापि सामान्यधर्मज्ञानं भवति इति न तत्र विशेषधर्मापेक्षा इत्यर्थः । विशेषापेक्षस्य बहिरङ्गत्वं सामान्यापेक्षस्यान्तरङ्गत्वाविति भाष्योक्तमिति कोपि वदेत् तद् भ्रान्तिमूलकमिति दर्शनार्थं तद् भाष्यमेव सिद्धान्तिपूर्वपक्ष्येकदेशि-इत्यादिभेदेनानुवदति—यत्तु इत्यादिना प्रत्येकसामर्थ्यादित्यन्तेन । न । तथा हि—पञ्चशब्दान्मतुप् कर्तुमशक्यः । नालमन्यद् व्यपेक्षितुं नाम यदेकेन संबद्धं तदन्यद् अन्यत्र विशेषेण ईक्षितुं नाम

१ C. G. H. सामान्यापेक्षकं.

२ B. P. पूर्वमुत्पत्तेः ; C. G. H. पूर्वमुत्पत्तिः.

३ B. बहिरङ्गाः स्यादय.

४. C. G. इति परास्तम्.

५ B. विशेष्यस्य.

६ C. G. H. क्वाप्यनुल्लेखाच्च ; B. क्वाप्यनुल्लेखनाच्च.

सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमाशङ्क्य प्रत्येकमसामर्थ्यात्समुदायादप्रातिपदिकत्वात्समासात्समासेनोक्तत्वादिति सिद्धान्तिनोक्ते नैतत्सारमुक्ते ऽपि हि प्रत्ययार्थ उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्ष्युक्तिः । द्विगोर्लुगनपत्ये ( ४. १. ८८ ) इति लुग्विधानात्तद्धितार्थद्विगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः । ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशाद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद्बाध इत्याशयेन नैष द्विगुः कस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते ऽनवकाशमजानानोऽपवादत्वाद्विगुः प्राप्नोतीति पूर्वपक्षी । अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद्बाधकः प्राप्नोतीति कैयटः । ततः सिद्धान्त्ये-

संबन्द्धुं नालं न समर्थम् इत्यधकवचनात् । प्रकृते च पञ्चेति गोशब्देन संबद्धम् । अतः मतुपा न संबध्यते । समुदायादिति । वाक्यस्य प्रातिपदिकाभावात् । समासादिति । अयं भावः । तद्धितार्थोत्तरपदसमाहारे चेत्यस्य तद्धितार्थे विषये इत्यर्थः सिद्धान्ते क्रियते । परंतु अत्र तद्धितार्थे समासो भवति इत्यर्थं गृहीत्वेदमुक्तम् । एवं च मतुबर्थस्य समासेनोक्तत्वान्न पुनः मतुप् । पाञ्चनापितिरिति । पञ्चानां नापितानामपत्यम् । अत इञ् । अत्र समासेन अपत्यार्थे उक्तेपि अपत्यप्रत्ययो भवति । प्रत्ययार्थे उक्तेपि प्रत्ययो भवति इति विषये प्रमाणमाह—द्विगोर्लुगनपत्ये इत्यनेन न हि द्विगोर्विहितस्य तद्धितप्रत्ययस्य लुग्विधीयते । यदि द्विगुसमासेन अर्थस्योक्तत्वात्तद्धितो न भवेत्तर्हि तद्विधानं व्यर्थं स्यात् । अतः उक्तेर्थेपि प्रत्ययो भवति इति । तेन पाञ्चनापितिः प्राप्नोतीति कैयटः । अयं च पूर्वपक्षी उन्मार्गगामी विद्यते । द्विगोरवकाशं मनसि अकृत्वा अपवादशङ्कायाः करणात् । अतः अनेन सह सिद्धान्ती नैव ब्रवीति । यथा लोके उत्पथगामिना सह गुरुो न ब्रवीति किंतु यादृशो यक्षस्तादृशो बलिरिति उत्तरं ददाति तथा अत्रापि पूर्वपक्षिसदृशः सिद्धान्ती एकदेशी

१ C. G. मतुप्प्राप्तिमाशङ्क्य, B. H. मतुप्प्राप्तिमित्याशङ्क्य.
२ C. G. H. सिद्धान्तिनोक्ते, B. सिद्धान्तिनोक्त.
३ P. पूर्वपक्ष्युक्तिः, B. C. G. H. पूर्वपक्ष्युक्तिमध्ये.
४ P. परत्वाद्बाधः, B. C. G. H. om. परत्वात्.
५ C. H. इत्याशयेन ; B. G. इत्याशयकेन.
६ C. G. H. अनवकाशम°, B. तदनवकाशम°.
७ B. H. and Kaiyata संख्यायास्तद्धितार्थे, C. G. संख्यायास्तद्धितार्थे.
८ P. कैयट इति, B. C. G. H. om. इति.

कदेश्याह । अन्तरङ्गत्वाद्बहुव्रीहिः । कान्तरङ्गता । अन्यपदार्थे बहुव्रीहिर्विशिष्टे ऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धिते ऽस्तिग्रहणं क्रियत इति । अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति । नैषा सिद्धान्त्युक्तिरेतावताप्यपवादत्वाहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात् । किं चोक्तरीत्या परत्वेनैव बाधसिद्धेः । किं चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वं केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम् । अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुरिति नोक्तं भाष्ये । न चार्थकृतबहिरङ्गत्वेस्यानाश्रयणादिदमयुक्तम् । एकदेश्युक्तित्वेनादोषात् । अत एवास्तिग्रहण नोपाध्यर्थं किंत्वस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति

---

उत्तरमाह–अन्तरङ्गत्वादिति । पूर्वपक्षिणा द्विगोरवकाशः न मनसि कृतः । अनेन अन्तरङ्गस्यापवादबाधकत्वं न स्वीकृतम् । विशिष्टे अन्यपदार्थे । अस्तिरूपविशेषणविशिष्टे । तदाह—तस्मिन्निति । द्विगोर्निमित्तभूते तस्मिन् तद्धिते नाम तदस्यास्त्यस्मिन्निति तद्विधायकसूत्रे अस्तिग्रहणं क्रियते इति । नैषा इति । अन्तरङ्गत्वाद् बहुव्रीहिरित्यादिरूपा । अपवादत्वाहानेः । अपवादस्य अन्तरङ्गबाधकत्वात् । तत्र दृष्टान्तमाह—अच्सामान्येति । अचि परतः यण् विधीयते । स सवर्णो विधीयते । अतः स बाधकः । वस्तुतोपवादत्वं नास्ति । अत आह—किंचेति । ननु अन्यपदार्थे बहुव्रीहि. विशिष्टे अन्यपदार्थे द्विगु. तस्मिंश्च अस्य तद्धिते अस्ति क्रियते इति भाष्येण अधिकोस्त्यर्थ इति कैयटेनोक्तमिति अल्पापेक्षत्वेनान्तरङ्गत्वं सिध्यत्येकदेशिमतेन न तु सिद्धान्तिमतेन । ननु सामान्यापेक्षमन्तरङ्गं विशेषापेक्षं बहिरङ्गमिति सिध्यति--अत आह--किंचात्राधिकापेक्षत्वेनेति । अल्पापेक्षमन्तरङ्गं बह्वपेक्षं बहिरङ्गमिति बह्वपेक्षत्वेनास्त्यर्थबहिरङ्ग भाष्यारूढमित्यर्थः । विशेषापेक्षत्वेनेति । सामान्यापेक्षमन्तरङ्ग विशेषापेक्ष बहिरङ्गमिति अन्तरङ्गबहिरङ्गभावो भाष्यस्य स्वरसतो न सिध्यति । भाष्ये हि तद्धिते अस्तिग्रहण क्रियते इत्युक्तम् । तेन हि द्विगोः अस्त्यर्थः अधिकोपेक्षितः इति सिध्यति । कैयटोपि तथैव । एवं चैतद्भाष्येण प्राचीनमते बाधे सामान्यविशेषभावेन अन्तरङ्गबहिरङ्गभावो न सिध्यति । अन्तरङ्गबहिरङ्गत्वमपि तस्य नास्त्येवेत्याह--अस्तिग्रहणं नोपाध्यर्थमित्यादिना । तद्धितप्रत्ययविधाने अस्तिग्रहणं नावश्यकम् । यथा सास्य देवता, तस्यापत्यम्, तस्येदम् । अस्त्यर्थश्चात्र भवत्येव यथा मत्वर्थोपि

---

१ B °द्विशेषापेक्षार्थद्विगु°.

२ C. °स्यस्यानाश्रय°; B. G. H. °त्वानाश्रय°.

प्रतिपाद्य सिद्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य इति वचनेनैतत्सिद्ध-मित्युक्तम् ॥ अत एव तदोः स सौ [ ७. २. १०६ ] इति सूत्रेऽनन्त्ययोरिति चरितार्थम् । अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्यात्वेऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव ॥ पादः पत् [ ६. ४. १३० ] इति सूत्रे भाष्य-कैयटयोरप्येतदन्तरङ्गत्वाभाव एव सूचित इति सुधियो विभावयन्तु ॥

---

स्यादिति अस्तिग्रहणं न मतुपो निमित्तम् । ननु तर्हि अस्तिग्रहणं किमर्थमिति चेत्—अस्तिमान् धनवान् इति रूपसिद्ध्यर्थम् । तत्र हि अस्तीति विभक्तिप्रति-रूपकमव्ययम् । तस्य कर्तृनिष्ठसत्ता इत्यर्थः । भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि इति नियमात् । तत्र च कर्ता विवक्षितं धनमेव । एवं चास्तिशब्दान्मतुपि धननिष्ठसत्तावानित्यर्थः स्यात् । अस्माकं 'सत्ताविशिष्टधनवान्' एवमस्त्यर्थो विवक्षितः । स च सामान्यमतुप्प्रत्ययेन न सिध्येत इति तादृशेऽर्थे मतुब् यथा स्यादित्येतदर्थं अस्तिग्रहणं क्रियते इति । एवं च मत्वर्थस्य नास्त्यर्थापेक्षा इति अर्थापेक्षत्वरूपबहिरङ्गत्वमपि द्विगोर्नास्ति इति अन्तरङ्गत्वाद्बहुव्रीहिरित्युक्तमिति एकदेशिमतं प्रतिपाद्य मत्वर्थे इति वचने द्विगोर्निषेधात् पञ्चगुः इत्यत्र न मतुप् इत्युक्तम् । नन्वत्र वचनं किमर्थम् । पूर्वमेव परत्वाद् बहुव्रीहिरित्युक्तं पश्चाच्च अपवादशङ्का तु भ्रान्तिमूला अतः सिद्धान्ते परत्वात्सिद्ध एव बहुव्रीहिरिति चेन्न । विभाषा इति महाविभाषया समासप्रकरणस्य वैवक्षिकत्वात्पक्षे द्विगुः प्राप्नोति सोऽपि अस्माद्वचनान्नेति प्रतिपादयितुं तस्य वचनस्यावश्यकत्वात् । ननु नवीनमते महाविभाषा नाम एकार्थीभावस्यैव विकल्पः । एवं च यदैकार्थीभावो न गृह्यते तदा द्विगुर्नैव स्यादिति चेन्न । पञ्चगुरित्यत्र द्वावेकार्थीभावौ अन्यपदार्थ-सहितः अन्यपदार्थरहितश्च । तौ च यथा । पञ्चगोविशिष्ट इति, पञ्चत्व-विशिष्टा गाव इति च । यदा अन्यपदार्थसहित एकार्थीभावो गृहीतस्तदा तत्र बहुव्रीहेरन्तर्गतो द्विगुरपि स्यात् । यथा पञ्चगवधन इत्यत्र एकेनैव एकार्थीभावेन बहुव्रीहेरन्तर्गतो द्विगुः क्रियते तद्वदत्रापि स्यात् । एवं चैकार्थीभावस्य कृत-विवक्षाधीनत्वेऽपि अन्तर्गतो द्विगुः स्यात्सोऽपि मा भूदित्येतदर्थं मत्वर्थे इति वचन-मावश्यकम् । ननु बाधापवादरीत्या परत्वाद् बहुव्रीहिरिति यत् प्रतिपादितं तत्र द्विगुरिष्टो न वा इति चेदिष्ट एव । यत्र पञ्चगवधनः इत्यादित्रिपदबहुव्रीहिः तत्रैवासाविष्टः न तु द्विपदबहुव्रीहावपि । एवं च पञ्चगुरित्यस्य द्विगोरभावान्न मतुबुत्पत्तिरिति ॥

---

1 B. H. and Bhāṣya वक्तव्य; C. G. वाच्य.

2 B. इत्यनन्त्यस्य सत्वे.

नन्वेवमस्तुवदित्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेत्। न। तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्त्वात्। अन्तःकार्यत्वं च पूर्वोपस्थितनिमित्तकत्वमङ्गशब्दस्य निमित्तपरत्वात्। इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति ततः सुहृदां ततः संबन्धिनाम्। अर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितस्तत्क्रमेणैव[१] च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति पट्व्येत्यादावन्तरङ्गत्वात्पूर्वं पूर्वयणादेशः परयणादेशस्य बहिरङ्गतयासिद्धत्वादित्यनेनाचः[२] परस्मिन् [ १. १. ५७ ] इति सूत्रे भाष्ये स्पष्टम्॥ तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव यथा पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने न तु जातस्य बहिरङ्गस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकं प्रागुक्तलोकन्यायेन तथैव लाभादिति वाह ऊठ् [ ६. ४. १३२ ]-सूत्रे कैयटे स्पष्टम्।

नन्वेवं पूर्वप्रकारद्वयेन अन्तरङ्गत्वं प्रतिपादितं घटकतया अल्पनिमित्तत्वेन च। अमुस्तुवत् इत्यत्र न तदेकमपि संभवति। न तावदल्पनिमित्तकत्वेन संभवति। उवङादेशस्य चङ् प्रत्ययो निमित्तं गुणस्य च तिङ् निमित्तम्। न च लघूपधस्य अङ्गस्य गुणादेशे कथं तिङ् प्रत्यय एव निमित्तमिति वाच्यम्। तस्य लघूपधस्याङ्गस्य न गुणे निमित्तत्वम्। सप्तम्यन्तशब्देन गुणस्य उक्तस्यैव निमित्तत्वात्। अङ्गस्य च सप्तम्यन्तशब्देन उपात्तत्वाभावात्। न च घटकतया अन्तरङ्गत्वं संभवति यतः स्तु अत् इति समुदाये उ अ इति उवङादेशनिमित्तं उ अद् इति गुणनिमित्तसमुदाये अन्तर्भूतमिति वाच्यम्। सप्तम्यन्तशब्दोपात्तनिमित्तग्रहणादेव, तिङ्प्रत्ययभिन्नसमुदायस्य गुणनिमित्तत्वाभावात्तदन्तर्भूतः उवङादेशनिमित्तसमुदायोऽस्तीति वक्तुमशक्यत्वादुवङादेशविषयर्थमपरमेवान्तरङ्गत्वं वक्तुमिदमवतरणम्— अन्तःकार्यत्वं चेति। तस्यार्थः। अन्तः नाम पूर्वं यत्कार्यं तदन्त कार्यं पूर्वोपस्थितकार्यनिमित्तकत्वमिति। अत्र च प्रकारद्वयम्— पूर्वोपस्थितनिमित्तकत्वं प्रक्रियोच्चारणक्रमेण च। तत्र प्रक्रियोच्चारणक्रमेणान्तरङ्गत्वविषये प्रमाणमाड्ग्रहणं वर्तते इति तस्य शास्त्रे प्रवृत्तिः। अन्यत्तु लौकिकव्यवहारात्सिद्धं न तु शास्त्रीयम्। एवं च न तद्विषये अन्तरङ्गादिपरिभाषाप्रवृत्तिरिति। न तु जातस्येति। इदमन्तरङ्गं न जातस्य बहिरङ्गस्य असिद्धत्वबोधकं

१ P. तत्क्रमेणैव च, B. C. G. H. om. च. G. क्रमेणैव तत्तद्बोधक.
२ H. दित्यचः. P. °दित्यनेनाच°, B. C. G. दित्यादिनाचः.

अत एव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितो भाष्यकृता ॥ क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ॥ एतत्त्वेवंरीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति तच्चिन्त्यम् । स्रजिष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या

---

किं तु पूर्वं प्रवृत्तिः कार्या इत्येव बोधयति । लौकिकदृष्टान्तात् । दृष्टान्तस्तु 'मनुष्योयं प्रातरुत्थाय' इत्यादिर्बोध्यः । तेन असुस्युवत् इति सिद्धिः । अत एव वाय्वोरिति । वाय्वोरित्यादिकस्य भाष्यकारैः स्थानिवद्भावेन सिद्धिरुक्ता अतस्तेषां जातबहिरङ्गस्य नियामकत्वं नैव संमतम् । ननु बहुषु उत्तरेषु सत्सु सर्वाणि तत्र देयानि इति न नियमः । एवं च कथं भाष्यस्य तादृशोभिप्रायो गृह्यते इति चेदुच्यते—भाष्ये अचः परस्मिन्निति स्थानिवद्भावेन सिद्धिर्दर्शिता । वस्तुतस्तु न पदान्तेति स्थानिवद्भावनिषेधः प्राप्नोति । परंतु स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् इति तस्य संकोचः कृतः । अतः निषेधस्य संकोचात्सिद्धिरिति वक्तव्यम् । परं त्वत्र दीक्षितैः स्वरदीर्घ॰ इत्यत्र स्वरग्रहणमेवावश्यकमित्यादिना शब्दकौस्तुभे दीर्घयलोपग्रहणं प्रत्याख्यातम् । तत्र च तैः वाय्वोरित्यादीनामन्तःस्थितनिमित्तकत्वाद्वलिलोपस्यान्तरङ्गत्वेन सिद्धिरुक्ता । यद्येतद् भाष्यकाराणां संमतं स्यात्तर्हि स्थानिवद्भावेन सा न संगच्छेत । न पदान्त इत्यनेन स्थानिवद्भावाभावात् । अतोत्र जातस्य बहिरङ्गस्य सिद्धतानियामकत्वेन भाष्यकाराणामसंमतिरेवेत्युक्तमिदम् । क्रमेणान्वाख्याने इति । पङ्क्त्यामित्यत्र पदस्य विभज्यान्वाख्याने योन्तरङ्गबहिरङ्गभावः स तूक्त एव । क्रमेणान्वाख्याने कथं तदाह—उक्तोदाहरणे इत्यादिना । अत्र प्रक्रियाक्रमेणान्तरङ्गत्वात् पूर्वोक्ताङ्ग्रहणज्ञापकादन्तरङ्गपरिभाषागता । कथमेतदुपपद्यते तदाह । अन्तरङ्गत्वं पूर्वप्रवृत्तिकत्वम् । बहिरङ्गत्वं निमित्ताभावात्—टाप्प्रत्ययरूपनिमित्ताभावात्—अप्राप्तिरूपं बोध्यमिति । एतत्त्वेवंरीत्येति । दीक्षितैः कात्र्यं कलत्र्यं शाल्यं आचक्षाणः कात्र् कलत् शाल् इत्यादिग्रन्थे 'पूर्वं पूर्वं अन्तरङ्गं परं परं' इत्युक्तं तच्चिन्त्यमित्यर्थः । तत्र प्रमाणमाह— स्रजिष्ठ इत्यादाविति । अस्मायामेधास्रजो विनिरिति विन् । ततः आतिशायने इति इष्ठन् । ततः स्रज् विन्

---

-१ P. reads वारितोऽचः परस्मिन्नित्यत्र भाष्यकृता ।

२ C. G. H. पूर्वप्रवृत्तिकत्वमप्यन्तरङ्ग; B. पूर्वप्रवृत्तिनिमित्तकत्वमपि अन्तर॰.

३ B. निमित्तत्वाभा°.

४ C. om. लुकि......विन्मतोः.

५ B. °प्रवृत्त्यर्थं जाति॰.

जातिपक्षाश्रयणेन वारणप्रयासस्य प्रकृत्यैकाच् ( ६. ४. १६३ ) इति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्तेः । त्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासिद्धत्वेनानायासतस्तद्वारणात् । भाष्य ईदृशरीत्या बहिरङ्गासिद्धत्वस्य क्वाप्यनाश्रयणाच्च । परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च ॥

इयं चोत्तरपदेऽधिकारस्यबहिरङ्गस्य नासिद्धत्वबोधिकेतीच एकाचोऽम् [ ६. ३. ६८ ] इति सूत्रे भाष्ये पूर्वपक्ष्युक्तिरिति सा नादर्तव्या । परतप इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः ॥ नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तिर्यमावश्यकमित्याहुः ॥ आभीयेऽन्त

इष्ठ इत्यत्र टेरिति टिलोपः प्राप्तः । विन्मतोर्लुक् च प्राप्तः । तत्र येन नाप्राप्ते इति लुकि कृते ततोपि टिलोपः प्राप्तः । तद्बाधनार्थं प्रकृत्यैकाच् इति सूत्रमारभ्यते । भाष्यकारैस्तत्र जातिपक्षाश्रयणेन नाम लुग्विषये टिलोपे जाते बाधेन नाम यत्र लुक् कृतस्तत्र टिलोपो न कार्यः इत्यर्थेन वारणं कृतम् । तस्य पूर्वस्थानिकस्याप्यन्तरङ्गत्वे निष्फलत्वात् । यतश्च तादृशः प्रयासो दृश्यते ततस्तेषां तदसंमतमेव कल्प्यते । तथा शब्देन तस्यार्थस्य लाभोपीत्याह । परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्चेति । एवं च पूर्वस्थानिकस्यान्तरङ्गत्वमित्यपास्तम् ॥ आभीयेऽन्तरङ्गे इति । यथा पूर्वत्रासिद्धमित्यधिकारे परिभाषाऽप्रवृत्तिः तथा आभीयाधिकारेपि परस्परासिद्धत्वादन्तरङ्गबहिरङ्गभावस्याभावात्र परिभाषाप्रवृत्तिः इत्यस्य ग्रन्थस्य पपुषः इत्युदाहरणमिति केचन वदन्ति । तथाहि । पपौ इत्यर्थे पपुषः इति पाधातोः क्वसुप्रत्यये पपा वस् इत्यत्र संप्रसारणे आतो लोपः प्राप्तः । परंतु अन्तरङ्गे आतो लोपे कर्तव्ये प्रकृतिप्रत्ययसापेक्षत्वेन बहिरङ्गस्यासिद्धत्वमिति अन्तरङ्गपरिभाषया संप्रसारणस्यासिद्धत्वादातो लोपो न स्यादतः परिभाषा । आतोलोपपरिभाषयोरेव आभीयासिद्धत्वमुच्यते । परिभाषा हि वाहऊठ्सूत्रे ज्ञापिता । एवं च तद्देशस्थत्वात्परिभाषाया आभीयता । ततः अन्तरङ्गशास्त्रस्य यन्निमित्तं तदेव अन्तरङ्गपरिभाषाया निमित्तम् । एवं च समानाश्रयायामन्तरङ्गपरिभाषायां प्रवर्तयितव्यायां समानाश्रयस्य आतो लोप इत्यस्यासिद्धत्वमित्याभीयासिद्धत्वात् परिभाषादृष्ट्याऽऽतो लोपस्याभावादन्तरङ्गपरिभाषाऽप्रवृत्त्या संप्रसारणस्य सिद्धत्वाल्लोपे कृते पपुषः

१ C. G. H. P. बहिरङ्गासिद्ध°; B. बहिरङ्गस्यासिद्ध°.
२ C. G. H. पदाधिकारस्थबहि°; B. °पदाधिकारस्य बहि°.
३ G. G. H. °रिति सा नादर्तव्या; B. om. सा.

रङ्ग आभीयस्य बहिरङ्गस्य समानाश्रयस्य[1] नानेनासिद्धत्वमसिद्धत्वादित्यसिद्धवत्सूत्रे

---

इति रूपं सिध्यति। अयमेव आभीयेन्तरङ्गे इत्यादिशेखरस्याशयः इति तन्न। तत्र हि आभीयबहिरङ्गस्यानेनासिद्धत्वं न इत्युच्यते। पपुषः इत्यत्र तु अन्तरङ्ग-शास्त्रपरिभाषयोर्मध्ये असिद्धत्वं प्रतिपादितम्। एवं च एतादृशः अन्य एव तस्याशयः इति अयुक्तम्। अपि तु तस्यायमभिप्रायः। समकालप्राप्ते समाना-श्रये च आभीये कार्ये तयोरन्तरङ्गबहिरङ्गाभावात् परिभाषाया अप्रवृत्तिरिति। तथाहि आभीयकार्यं चतुर्विधम्--जातं समानाश्रयं, जातं व्याश्रयं, समकालप्राप्तं समानाश्रयं, समकालप्राप्तं व्याश्रयं चेति। तत्र जातसमानाश्रयस्योदाहरणम्--आस्ताम्। अत्र अस् भुवि इत्यस्माल्लङ् तस्य तामादिषु कृतेषु अस् ताम् इत्यत्र श्नसोरल्लोपः इत्यकारलोपे तस्याभीयासिद्धत्वात् आडजादीनामित्याडागमो भवति। अत्र अन्तरङ्गपरिभाषाप्रवृत्तावपि न दोषः। जातव्याश्रयस्योदाहरणं तु पपुषः। अस्यासिद्धिस्तु पूर्वमुक्ता। समकालप्राप्तसमानाश्रयस्योदाहरणं जज्ञे। अत्र जनी प्रादुर्भावे इत्यस्माल्लिट् त एशादिषु कृतेषु जन् ए इत्यत्र द्वित्वे कृते गमहनजनखन० इत्युपधालोपः प्राप्तः, अत एकहल्० इत्यनेनैत्वाभ्यासलोपौ च प्राप्तौ। कः कर्तव्यः इत्याकाङ्क्षायां परत्वादेत्वाभ्यासलोपौ प्राप्नुतः। ननु परस्परयोरसिद्धत्वा-द्विरोधाभावेन विप्रतिषेधसूत्रस्य कथं प्रवृत्तिरिति चेद् घुमास्थागापा० इति सूत्रे हलिग्रहणाज् ज्ञापकादत्र विरोधाभावः। तथा हि--नन्वत्र हलिग्रहणं किमर्थम्। अजादेर्व्यावृत्त्यर्थम्। मास्तु अन्यथापि तत्सिद्धेः। तत्र हि आतो लोपस्य प्राप्त्या अजादौ ईत्वाभावाद् गोदः इत्यादीनां सिद्धौ हलग्रहणं व्यर्थम्। गोद इत्यादौ द्वयोरपि प्राप्तयोः परत्वाद् घुमास्था० इतीत्वमेव स्यात्। अतः हलिग्रहणमा-वश्यकम् इति चेन्न। तत्र असिद्धवदत्राभादिति परस्परासिद्धत्वाद् परत्वाभावात् आतो लोपः स्यात् इति हलिग्रहणं व्यर्थं सज्ज्ञापयति अत्रासिद्धत्वेपि विप्रति-षेधोस्ति इति। एवं च परत्वादीत्वं स्यादिति हलिग्रहणमावश्यकम्। अन्यत्रफलं सातः सातवान् इत्यत्रात्वं सिद्धम्। अत एव धिनोतेरनुनासिकलोपादत्वं विप्रति-षेधेनेति वार्तिकं संगच्छते। एवं चास्माज्ज्ञापकाद्विप्रतिषेधसंभवेन परत्वादेत्वाभ्या-सलोपौ प्राप्नुतः। परंतु तदपेक्षया नित्यत्वादुपधालोपः। एवमपि एत्वाभ्यासलोप-योर्निमित्तभूतः किल्लिट् तु प्रथममेवोपस्थित इति पूर्वोपस्थितनिमित्तत्वादन्तरङ्गत्वे-

---

1 C. om. समानाश्रयस्य.

भाष्ये स्पष्टम् ॥ एवं [1]सिचि वृद्धेर्येननाप्राप्तिन्यायेनान्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीतीको गुण [१. १. ३] इति सूत्रे भाष्ये स्पष्टम् ॥ ५० ॥

---

नैत्वाभ्यासलोपौ स्याताम्। तथा च जह्न इत्यस्यासिद्धत्वापत्तिः। परंतु आभीयेन्तरङ्गे कर्तव्ये आभीयस्य बहिरङ्गस्य अनयासिद्धत्वं नास्ति तयोः परस्परमसिद्धत्वात्। ननु पूर्वमेव ज्ञापकादत्राविरोध उक्तः इदानीं त्वेतादिति कथमिति चेज्ज्ञापकेन *असिद्धत्वेपि विरोधो न वर्तते इत्येवोक्त न त्वसिद्धत्वाभावोपि।* एवं चासिद्धत्वादन्तरङ्गबहिरङ्गत्वाभावेन असिद्धपरिभाषाया अप्रवृत्त्या नोपधालोपस्यासिद्धत्वम्। इत्येवमेवास्य शेखरस्याशयः इति। एवमेव केचन अस्याः परिभाषायाः न सिच्यन्तरङ्गत्वमस्ति इति संकोचं मन्यन्ते। तथा हि। ननु ह्म्यन्तेतिसूत्रे *श्विग्रहणं किमर्थम्। अश्वयीत् इत्यस्यासिद्धिस्त्वन्यथैव भवति। तत्र हि श्वि इ ई त्* इत्यत्रान्तरङ्गत्वात् गुणायादेशयोः सतोर्यान्तत्वेनैव निषेधः स्यात् इति श्विग्रहणं व्यर्थं ज्ञापयति–न सिच्यन्तरङ्गमिति। ततः प्रथमत एव वृद्धिः स्यात्। अतः तद्बाधनार्थं श्विग्रहणमावश्यकम्। अन्यत्रफलमनेनायीत्। अत्र हि णीञ् प्रापणे इत्यस्मादभ्यासगुणे अनेनी-इस् ईत् इत्यत्र वृद्धिः प्राप्ता गुणश्च प्राप्तः। अत्र अन्तरङ्गत्वात्पूर्वं गुणे ह्म्यन्त इति निषेधः स्यात्। परं त्वत्र ज्ञापनेनान्तरङ्गत्वाभावाद् वृद्धिर्भवति इति। ज्ञापनात्तु केचन संकोचं मन्यन्ते। परतु नैतद्पूर्ववचनं किं तु येननाप्राप्तिन्यायेनैव सिद्धम्। तथाहि नाप्राप्ते गुणे आरभ्यमाणा वृद्धिस्तद्बाधिका इति। एवं च न्यायसिद्धमेव तद्वचनमिति। एवं नायं संकोचः इति शम् ॥ ५० ॥

इति श्रीपदवाक्यप्रमाणपारावार–महामहोपाध्याय–अभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितायां परिभाषेन्दुशेखरटिप्पण्यां द्वितीयप्रकरणे अन्तरङ्गपरिभाषानिरूपण समाप्तिमगात्।

---

१ B. सिचि वृद्धो येन०.

नन्वेवमक्षद्यूरित्यादौ बहिरङ्गस्यौठोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह ।

## नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

अत्र षत्वतुकोः [ ६. १. ८६ ] इति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् । अन्यथाधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहितायां नित्यत्वाल्ल्यबुत्पत्तिपर्यन्तमप्यसंहिततयावस्थानासंभवेनैकादेशे ल्यपि तुगपक्षया पदद्वयसंबन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतयासिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव । पदद्वयसंबन्धिवर्णद्वयापेक्षं बहिरङ्गमिति प्रेन्द्र इत्यादौ गुणो बहिरङ्ग इति मन्येन न धातुलोपे [ १. १. ४ ] इति सूत्रे संयोगान्तस्य लोपः [८.२.२३] इति सूत्रे च भाष्ये स्पष्टम् ॥ यत्तु षत्वग्रहणमपि ज्ञापकमन्यथा कोऽसिच-

यत्तु षत्वग्रहणमपि ज्ञापकमिति। तद्धि कोसिचत् इत्यत्र षत्वं मा भूदित्येतदर्थं कृतम् । परंतु तन्न कर्तव्यम् । एकपदसापेक्षत्वेनान्तरङ्गे षत्वे कर्तव्ये पदद्वयसंबन्धिवर्णद्वयसापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वम् । एवं चैकादेशस्यासिद्धत्वेन षत्वं नैव स्यादिति षत्वग्रहणं व्यर्थमिति चेन्न । तत्र एङः पदान्तादति इत्येकादेशस्य पदद्वयसापेक्षत्वेन अत्र षत्वप्रवृत्तौ य इण् ओकार आवश्यकः स पदद्वयनिर्वृत्तः । एवं च, इणः ओकारस्य पूर्वपदसंबन्धित्वेन षत्वस्यापि पदद्वयसापेक्षत्वादन्तरङ्गबहिरङ्गत्वाभावादसिद्धत्वाभावेन षत्वं स्यात्तन्मा भूदित्येतदर्थमत्र षत्वग्रहणमावश्यकम् । एवं च, चारितार्थ्यसत्त्वान्न दोषः ॥ नन्वेवमपि पूर्वरूपेणाकारस्यापहारेपि एकदेशविकृतन्यायेन 'सिचत्' इत्यस्य पदत्वादेव सात्पदाद्योरिति निषेधः संभवति इति षत्वग्रहणं व्यर्थमेवेति ज्ञापयितुं शक्यते इति चेन्न । अन्तादिवच्चेत्यनेन एकादेशस्य परादिवत्त्वेन सादिपदत्वाभावात् । एवं च षत्वं स्यात्तन्मा भूदिति षत्वग्रहणमावश्यकम् ॥ ननु अन्तादिवच्चेति सूत्रं शास्त्रीयकार्ये एवागच्छति । अत्र परादिवद्भावे सात्पदाद्योरिति न स्यात् इति तु नेदं शास्त्रीयमित्यत्र अन्तादिवद्भावाप्रवृत्तेः निषेधः सुखेन स्यात् इति चेन्न । अभावाभावः प्रतियोगिस्वरूपः इतिवत् षत्वाभावाभावः षत्वम् । एवं च तस्य शास्त्रीयत्वात् अन्तादिवच्चेत्यस्य प्रवृत्तिः । एवं च सात्पदाद्योरिति निषेधः स्यात् । अतः षत्वग्रहणं कर्तव्यमिति चारितार्थ्यान्न ज्ञापकता ॥ ननु अभावाभावः इत्यादि न्यायशास्त्रेस्तु किं तेनात्र । तथा च 'अन्तादिवच्च' इत्यस्याप्रवृत्त्या सात्पदाद्योरित्यनेनैव सिद्धे षत्वग्रहणं व्यर्थं सज्ज्ञापकं संभवति । तथान्तादिवद्भावेपि ओसिचत्

१ B. °पेक्षस्यैकादेशस्य बहि° P. reads °पेक्षैकादेशस्य बहि°

दित्यादौ पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वाप्रवृत्तौ किं तेनेति तन्न । इणः पूर्वपदसंबन्धित्वेन षत्वस्यापि पदद्वयसंबन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात् । एकादेशस्य पराद्विवत्त्वेनौसिचदित्यस्य पदत्वेन पदादित्वाभावान्न सात्पदाद्योः [ ८. ३. १११ ] इत्यनेन निषेधः । त्रैपादिकेऽन्तरङ्गे कार्यकालपक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ॥ परिभाषार्थस्त्वचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्य जातस्य बहि-

---

इत्यस्य पदत्वेन इणः पूर्वपदसंबन्धित्वाभावात् अन्तरङ्गत्वेन एकादेशस्यासिद्धत्वात् षत्वनिषेधः स्यादेवेति कोसिचत् इति षत्वग्रहणस्य नैव फलम् ॥ ननु अत्र एकादेशस्य परादिवद्भावेन ओसिचदित्यस्य पदत्वेन सात्पदाद्योरिति निषेधाप्रवृत्तिः इत्युक्तम् । परंतु अयुक्तमेव तत् । सात्पदाद्योरिति निषेधोऽत्र प्रवर्तते इति वदतो ह्ययमाशयः— एकादेशस्य पूर्वान्तवद्भावेन सिचत् इत्यस्यैव पदत्वात् षत्वनिषेधः क्रियते इति । एवं च पूर्वान्तवद्भावेन शङ्का उत्तरं तु परादिवद्भावेन इत्यसंगतमिदम् इति चेदुच्यते । शङ्का पूर्वान्तवद्भावेनेत्युक्तम् । कोसिचत् इति वस्तुस्थितिं दृष्ट्वैव निषेधप्रवृत्तिः । किमर्थं हि तत्र अन्तवद्भाव आनेयः इत्येवं वस्तुगतिं दृष्ट्वा प्राप्तं निषेधं प्रतिवक्तुं परादिवद्भावो गृह्यत इति सर्वं सुसंगतमेव । अन्यथा पाक्षिकं ज्ञापकं स्यादिति दोष इति । तथा टीकाकारोक्तं भामूर्ध्वं इत्यपि नास्य फलम् । असिद्धपरिभाषया तस्य सिद्धेः । एवं च षत्वग्रहणं ज्ञापकं संभवति इत्यभिप्रेत्याह—त्रैपादिकेन्तरङ्गे इति । एवं च परिभाषाया एवाप्रवृत्तेः असिद्धत्वाभावात् षत्वनिषेधो न स्यादिति षत्वग्रहणमावश्यकम् । परिभाषाया अर्थमाह—अचोन्यानन्तर्ये इत्यादि । अत्र अचः इति षष्ठी । तस्याश्च अन्यानन्तर्यपदे अन्वयः । तच्च अजानन्तर्यं चतुर्विधम् । आनन्तर्यबोधिके द्वे विभक्ती पञ्चमी सप्तमी च । तत्र अज्बोधकपञ्चम्यन्तात्परो हल् । हल्बोधकपञ्चम्यन्तात्परः अच् । अज्बोधकसप्तम्यन्ते परे हल् । हल्बोधकसप्तम्यन्ते परे अच् इति चतुर्विधमत्राजानन्तर्यम् । परंतु शेखरकाराणां अन्यनिरूपितं आञ्जिष्टं इति सप्तमीपञ्चमीभ्यां द्विविधं यदानन्तर्यं तदेव संमतम् । अचोन्यानन्तर्ये इत्युक्तत्वात् ।

---

१ C. G. पराद्विवत्त्वेनौ°, B. H. परादित्वेनौ°.

२ P. reads पदत्वेन तस्य पदादि°

३ C. G. H. निषेधः; B. षत्वनिषेधः.

४ C. G. H. °न्तर्यनिमित्तके ; B. °न्तर्यनिमित्ते.

रङ्गस्य बहिष्ट्वप्रकृतिर्न । बहिष्पदेन बहिरङ्गम्[1]। तस्य भावो बहिरङ्गत्वम् । तत्प्रयुक्तासिद्धत्वस्य न प्रकृतिः । न प्राप्तिरिति । असिद्धं बहिरङ्गमित्युक्त्वा नाजानन्तर्ये इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्यान्तरङ्ग इत्यस्यानुवृत्तिसूचनात् ॥ तेन पचावेदमित्यादौ न दोषः । अन्तरङ्गस्याचश्चानेककार्यस्यैत्वस्यान्यानन्तर्यनिमित्तकत्वाभावात् ॥ जातस्य बहिरङ्गस्येत्युक्त्यायजे इन्द्रं धियन्नीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एवेण्ङीनामाद्गुणः [2]सवर्णदीर्घत्वाच्छचडन्त[3]स्यान्तरङ्गलक्षणत्वादित्यादि संगच्छते । अत एवोमाङोश्च [ ६. १. ९५ ] [4]इत्याङ्ग्रहणं चरितार्थम् । तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तर[5]ङ्गत्वादाद्गुणे वृद्धिबाधनार्थम् ॥ न चाक्षद्यूरित्यत्र याणि कृत ऊठोऽसिद्धत्वादाके लोपापत्तिरिति वाच्यम् । अचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये कृते च तस्मिन्यदन्तरङ्गं प्राप्नोति

---

यथा सवाभ्यां वामौ, ङमो ह्रस्वादचि० इत्यादि च । बाहिर्भावो बाहिष्ट्वमित्यर्थः । अन्तादिवद्भावस्य प्रसङ्गात्किंचिदुच्यते । अत्र हि योयं धर्मः अन्तादिवच्चेत्यनेनैकादेशविशिष्टे संपादनार्हः स तदेकदेशे एकदेशविकृतन्यायेन नायाति इति व्यवस्थोक्ता । तेन गणेश इति रूपं सिध्यति । अत्र हि एकादेशे कृते एकदेशविकृतन्यायेन गण् इत्यस्य पदत्वात् ङमुट् स्यात् । अतः अन्तादिवद्भावेन एकादेशस्य पूर्वान्तत्वात् ङमन्तपदत्वेन निषेधः । परन्तु यदि शास्त्रीयकार्यं एवान्तादिवद्भावः तर्हि गणेश इत्यत्र ङमुट् स्यात् । तन्निषेधस्याशास्त्रीयत्वात् । अतः योयं धर्मः एकादेशविशिष्टे इत्यादि अवश्यमेव ग्राह्यम् । अथवा पूर्वोत्तरनिमित्तकार्यात्० इति परिभाषास्थशेखरानुरोधात् 'एकादेशस्थले ङमुट् न भवति' इति कल्प्यत । अयं निषेधो जात एव अचोन्यानन्तर्यनिमित्तके इति अजानन्तर्यनिमित्तके इत्युक्त एव । किंनिरूपितं तदिति शङ्कायां प्रत्यासत्त्या अजानन्तर्यनिमित्तके इत्यर्थो निष्पद्यते । सा प्रत्यासत्तिरत्र न ग्राह्या इति सूचयन्नेवाह— अचोन्यानन्तर्ये इति । एवं चात्र याणि कर्तव्ये ऊठोऽसिद्धत्वाभावबोधनाय

---

१ P. mentions the reading तस्य भावो बहिष्ट्वं बहिरङ्गत्वम्.

२ C. सवर्णत्वाच्छ°.

३ B. °स्यान्तरङ्गत्वं स°.

४ C. G. H. इत्याङ्ग्रहण ; B. इत्यत्राङ्ग्रहणं.

५ C. G. H. °रङ्गत्वादाद्गुणे, B. °रङ्गत्वाद्गुणे.

तत्र[1] च कर्तव्ये नासिद्धत्वमित्येतदर्थात्[2][3] । असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं तेनैव सिद्धेः ॥ अत[4] एव नलोपः सुप् [ ८. २. २ ] इति सूत्रे कृति तुग्ग्रहणं चरितार्थम् । अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्या-न्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन[5] सिद्धेस्तद्वैयर्थ्यं स्पष्ट-मेव । मम तु तुक्यजानन्तर्यसत्त्वान्न दोषः ॥ न चैवं सति[6] ह्रस्वस्य पिति ( ६. १. ७१ ) इति सूत्रस्थभाष्यविरोधः । तत्र हि ग्रामणिपुत्र इत्यत्रेको ह्रस्वोऽङ्यः ( ६. ३. ६१ ) इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गा-सिद्धत्वेन समाहितम् । नाजानन्तर्य इत्यस्य सत्त्वे तत्र तदप्राप्तेरसंगतिः स्प-ष्टैवेति वाच्यम् । तेन भाष्येणास्या अनावश्यकत्वबोधनात् । एतज्ज्ञापकेना-न्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात् ॥ अत एवाचः परस्मिन् ( १. १. ५७ ) इति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्य तया-सिद्धत्वात्पूर्वयणादेशः साधितः । अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता । अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेऽस्या बहूनि प्रयोजनानि सन्ति

---

नलोप इति । अत एव नलोपः सुबिति सूत्रे इति । नाजानन्तर्ये इति परिभाषा-ग्रहणादेवेत्यर्थः । दीक्षितादिप्राचीनैः यदक्षद्यूरित्यादौ वलिलोपोऽसिद्धपरिभाषाऽ-नित्यत्वेन साधितः तन्मते असिद्धपरिभाषाऽनित्यत्वेन अक्षद्यू इत्यादीनां सिद्धौ नाजानन्तर्ये इति परिभाषा मास्तु इत्यर्थः कृतः । परन्तु यदि नाजानन्तर्ये इति परिभाषा न गृह्यते तदा वृत्रहभ्यामित्यादौ प्राप्तस्तुगागमः असिद्धपरि-भाषयैव वारयितुं शक्यते इति नलोपासिद्धत्वप्रतिपादनार्थं कृतं कृतितुग्ग्रहणं व्यर्थं स्यात् । मम तु नाजानन्तर्ये इति परिभाषास्वीकर्तुर्मते न दोषः इत्येव परेषां मतमुक्त्वा स्वमतं प्रदर्शयितुमुपक्रमते--न चैवं सति ह्रस्वस्य पितीत्यादिना । ह्रस्वस्य बहिरङ्गत्वं तु उत्तरपदनिमित्तकत्वेन । असंगतिः स्पष्टैवेतीति । तुग्विधायके सूत्रे अजानन्तर्यसत्त्वेन नाजानन्तर्य इत्यनेन असिद्धत्वनिषेधः स्यात् ॥

---

१ B. तत्र कर्तव्ये.
२ C. नासिद्धमिति.
३ P. °मित्येतदर्थात्, B. C. G. H. °मिति तदर्थात्.
४ B. अत एव च नलोपः.
५ P. नलोपस्यासिद्धत्वेन, B. H. नलोपासिद्धत्वेन सिद्धेस्त°; C. G. नलोपा-सिद्धेस्त°.
६ C. om. सति.

तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं दोषेष्वित्युक्तं संप्रसारणाच्च [ ६. १. १०८ ] इति सूत्रे भाष्ये प्रतिविधानं च परिभाषाविषये ऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वान्तरङ्गत्वाद्धल्ङ्यादिलोपे नुमादयः स्युरत आह ।

अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते ॥ ५२ ॥

अत्र च प्रत्ययोत्तरपदयोश्च [ ७. २. ९८ ] इति सूत्रं ज्ञापकम् । त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन त्वमावेकवचने [ ७. २. ९७ ] इत्यनेन सिद्ध इदं व्यर्थं सदेतज्ज्ञापकम् । ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति चेत् । एवं तर्ह्यत्र मपर्यन्तग्रहणानुवृत्तिस्त-ज्ज्ञापिकेति भाष्यंहृतः ॥ युष्मदादिभ्य आचारक्विपु न संपूर्णसूत्रस्य ज्ञापकता-

---

ननु तव पुत्रस्त्वत्पुत्र इति । अत्र प्रत्ययोत्तरपदयोश्च इति चरितार्थत्वाच्च ज्ञापकमिति चेन्न । अन्यदेव भाष्यकृदुक्तं ज्ञापकमुच्यते । तथाहि— अत्र मपर्य-न्तानुवृत्तिर्मास्तु । उत्सर्गसमानदेशा अपवादाः इति परिभाषया तवममौ० इति यत्रोत्सर्गस्तत्रैवास्य प्रवृत्तिः स्यादिति मपर्यन्तस्यैव कार्यसंभवे अनुवृत्तिर्व्यर्था ज्ञापयति—अन्तरङ्गानपि...... । यदि चेदानीमनुवृत्तिर्न स्यात्तर्हि ङसो लुक्त्वेन तवममौ ङसि इत्यस्याप्राप्तेः प्रत्ययोत्तरपदयोश्चेत्यनेन सर्वस्यैवादेशः स्यात् । अतोऽत्रानुवृत्तिः कार्येति स्वाश्रिमच्चारितार्थ्यम् । अन्यत्र फलं गोमत्प्रियः । उत्सर्ग-समान० इति न्यायस्य ज्ञापकं तु तस्मिन्नणि च युष्माकास्माकौ इति । अस्या-न्यत्रफलं तु दधि इति । अत्र अस् हि इत्यवस्थायां घ्वसोरेद्धावित्येत्वं आदेरेव भवति । अन्यथा अलोऽन्त्यस्येत्यनेनान्त्यस्य स्यादिति । अत्र केचनेवं वदन्तु.—

---

१ B. ऽनित्यत्वमेवाश्रय°.

२ C. G. H. P. °न्ताद्वस्याद्दल्° ; B. °न्तात्वेन हल्°.

३ B. न्येन नुमादयः.

४ P. G. निमित्तकत्वेन.

५ H. सतज्ज्ञापकम्. B. C. सज्ज्ञापकम् ; P. mentions the latter reading.

६ C. G. H. P. तदंत्रयमपर्यन्तग्रहणानु ; B तदंत्र मपर्यन्तानु ; P. mentions the reading मप for यम.

७ H. भाष्यकृत्.

परभाष्यप्रामाण्याद्धस्वनद्यापः [ ७. १. ५४ ] इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च । एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकणिचोऽप्यनभिधानं बोध्यम् । एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् ॥ ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था । न चोत्सर्गसमानदेशा अपवादा इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसंमतेन मपर्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यं तस्य श्नमकजादौ व्यभिचारादिति चेत् । न । श्नमि मित्त्वेन बह्वचि पुरस्ताद्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात् ॥ अत एव तस्मिन्नणि च [ ४. ३. २ ] इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम् । अन्यथाकञादेशमेव विदध्यात् । अकञि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिः । अतस्तद्विधानमिदमेव

---

एवं तर्हि यदि प्रत्ययोत्तरपदयोश्चेति ज्ञापकं नैव संभवति तर्हि प्रथममेव तस्योपन्यासः किमर्थमकारि इति चेन्न । भाष्यकारैः प्रथमं तस्यैवोपन्यस्तत्वात् तथाग्रे उत्तरपदग्रहणं ज्ञापकमिति वदतां दीक्षितानां खण्डनं कर्तव्यमिति प्रथमतस्तस्योपन्यासः इति । ननु भाष्यकारैरेव प्रथमसूत्रे मपर्यन्तानुवृत्तिः कृता अतस्तद्वैयर्थ्येनैव कथं ज्ञाप्यते इति चेन्न । सूत्रकारस्यापि तत्रानुवृत्तेरिष्टत्वेन ज्ञापकं बोध्यम् । अन्यथा आकञादेशमेवेति । तस्मिन्नणि चाकञ् इति वक्तव्ये युष्माकास्माकादेशविधानं व्यर्थं ज्ञापयति । उत्सर्गसमानदेशा अपवादाः इति । इदानीं युष्माकास्माकादेशविधानं न क्रियेत तर्हि तदपवादस्तवकममकादेशोपि अन्त्यस्यैव स्यात् । स मा भूत् सर्वस्यैव स्यात्तदादेशविधानमिति स्वास्मिश्चारितार्थ्यं दीयते ॥ *अलोन्त्यपरिभाषा वाक्यार्थे जाते तदेकवाक्यत्वेन प्रवर्तते,* इयं उत्सर्गापवादज्ञाने सत्येव प्रवर्तते, तज्ज्ञानं च वाक्यार्थाभावे एकवाक्यताभावेपि भवति इति इयमेव पूर्वं प्रवर्तत इति बोध्यम् ॥ अत एव इत्युपक्रान्तं पूर्वस्य पोपकत्वेन लिख्यते । अत्र

---

१ B. एवमेवैकार्थाभ्यां प्रातिपदिकप्रकृतिकणिचो. H. एवमेवैकार्थकाभ्यां युष्मदस्मद्भ्यां प्रातिपदिकप्रकृति°.

२ C. G. H. P. एतेन तत्रादे° ; B. एतेनात्रादे°.

३ B. °समानदेशापवादा.

४ C. °वत्सूत्रस्थभाष्य° ; B. G. H. om स्थ.

५ C. श्नम्बह्वजकजादौ.

६ C. युष्मकाद्यादेश°.

च तज्ज्ञापकम् ॥ यद्यपि विरोधे बाधकत्वमिति वार्तिकमते ऽयं न्यायो भाष्यकारस्तु विनापि विरोधं सत्यपि संभवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमस्तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः । एतद्भाष्यमपि तत्स्वीकारे मानम् ॥ एवं च मपर्यन्तानुवृत्तिस्स्वाकृतमित्यादौ मपर्यन्तस्यादेशविधानार्था । तत्र चान्तरङ्गत्वात्त्वमौ

---

तु तस्यैव ज्ञापकत्वमुच्यते 'इदमेव च तज्ज्ञापकम्' इत्यनेन इति परस्परं विरुध्यतेऽयं ग्रन्थः इति चेन्न । उत्सर्गसमानदेशा इति न्यायो हि लौकिकः । अतस्तद्ग्रहणेन मपर्यन्तानुवृत्तेर्ज्ञापकता योजिता । तथाऽस्य शास्त्रेपि ग्रहणात् तस्मिन्नणि इति चरितार्थम् । ननु शास्त्रेऽस्य ग्रहणेपि प्रत्यक्षेणानुमितं बाध्यत इति अनेकाल्त्वात्त्वकममकौ सर्वादेशावेव स्यातामिति त्वस्मिन्चारितार्थ्यं नायाति । उत्सर्गसमान० इति परिभाषया उत्सर्गसमानदेशस्यादेशः प्राप्तः । स आनुमानिकप्रमाणेन । तथा प्रत्यक्ष-श्रौत-प्रमाणेन अलोन्त्यस्य प्राप्तः । तर्हि अनयोर्मध्ये केन भाव्यमित्याकाङ्क्षायां अनुमानस्य प्रत्यक्षेण बाध उचितः इति अलोन्त्यपरिभाषायाः प्राबल्येन उत्सर्गसमानदेशस्यादेशसिद्ध्यर्थं क्रियमाणं युष्माकास्माकादेशविधानं न चरितार्थमिति चेन्न । अनेकाल्शित् इति परिभाषा हि लक्ष्यसंस्कारकमहावाक्यार्थानन्तरमेवोपतिष्ठते । एतज्ज्ञापकं तु अवान्तरवाक्यार्थानन्तरं उत्सर्गज्ञाने एव प्रवर्तते । एवं च आकङादेशविधाने तस्योत्सर्गत्वात्त्वकममकौ अन्त्यस्य विधेयौ इति ज्ञाने तत्र अनेकाल् इत्यस्याप्राप्तिरेव । विरोधे बाधकत्वमिति । असंभव एव बाधकत्वमित्युक्तं । यत्रैकस्य प्रवृत्तौ अन्यस्याप्रसक्तिः तत्रैव बाधकत्वम् । एवं च उत्सर्गस्य प्रवृत्तौ अपवादस्याप्रवृत्तेः समानदेशत्वं वाच्यमेव इति वार्तिककृन्मतेनैव उत्सर्गसमानदेशा अपवादा इति न्यायः समुद्भूतः । परंतु भाष्यकृन्मते सत्यपि संभवे बाधनं भवति इति समानदेशत्वाभावेपि अपवादत्वं वक्तुं युक्तम् । एवं च तन्मते उत्सर्गापवादयोः समानदेशत्वाभावेन इदं ज्ञापकं कथमित्याशङ्क्य आदेशविधानज्ञापितत्वात् स्वीक्रियते इत्यर्थः । तथा च न दोषः । एवं च मपर्यन्तस्येति ज्ञापकं देयमिति सिद्धम् । अस्तस्तदेवोपन्यस्यते—एवं च मपर्यन्तानुवृत्तिरित्यादिना । लुगपेक्षया लुको बलवत्त्वे प्रकृतपरिभाषया

---

१ C. G. °सूत्रकैयट°.

२ G. विधानाज्ज्ञापित.

३ B. om. एवं च.

४ C. G. H. P. °विधानार्था ; B. °विधानार्थम्.

(७ २ ९७) इत्येव सिद्धे व्यर्था सैतज्ज्ञापिका । ज्ञापिते त्वस्मिन्नेतद्विषये त्वादीनामप्राप्त्या तदपवादत्वाभावेन मपर्यन्तस्यैवादेशार्थं सा चरितार्थेति तदाशय ॥ यत्तु हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्यन्तासम्भवेन तदनुवृत्ति र्व्यर्था सती ज्ञापिकेत्युक्त तन्न । अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्ते ॥ वस्तुत इद ज्ञापक वार्त्तिककरीत्यैव भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहु ॥ इय सुपो धातु ( २. ४. ७१ ) इति लुग्विषयैवेति केचित् । एङ्ह्रस्वात्सम्बुद्धे ( ६. १. ६९ ) न यासयो. ( ७ ३. ४५ ) इति सूत्रस्थाकरप्रामाण्येन लुग्मात्रविषया । आद्ये हे त्रपु इत्यादावनेन न्यायेन लोप बाधित्वा लुग्भवतीति भाष्य उक्तम् । अन्ये ऽन्तरङ्गांश्च विधीन्सर्वो ऽपि लुग्बाधते न सुब्लुगेव । अत एव सनीस्रस इत्यादौ नलोपो न भवति । पञ्चभि खट्वाभि

---

लुक प्राबल्य बोध्यते । अत्यङ्ग इत्यत्र तु आति सु अङ्ग शस् अण् इत्यवस्थायां द्वावपि लुकावेव । द्वयोरप्यनेन न्यायेन प्राबल्य स्यात् । द्वया परस्परापेक्षया प्राबल्यादकस्यापि प्रवृत्तिर्न स्यात् । एव लुग्भिन्नकार्यादेव लुको बलवत्त्व मिति तस्या आशङ्काया समाधान कर्तुं युक्तम् । एव सति सुब्लुक एवा नेन बलवत्त्व बोध्यत इति मौढ्या इति भाव । तथा चास्या 'अन्तरङ्ग निमित्तविनाशे एवेयम्' इति सकोच स्वीक्रियते । तेन सर्वस्तोम इत्यत्र आद्युदात्त प्रकृत्या भवति । तथाहि--सर्व सु स्तोम सु इत्यत्र बहुव्रीहि सज्ञायां कृतायां सर्वशब्दस्य उञ्छादौ पाठात् 'उञ्छादीनां च' इत्यने नान्तोदात्त प्राप्त । 'सर्वस्य सुपि' इत्यननाद्युदात्तश्च प्राप्त । पश्चात् 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्यनन पूर्वपदप्रकृतिभाव प्राप्नोति । अत्र प्रथम तानेन न्यायेन सुपो लुकि सर्वस्येत्यस्याप्राप्त्या उञ्छादीनां चेत्यनेनान्तोदात्त स्यात् । पश्चाच्च स एवावशिष्यते । परतु अन्तरङ्गनिमित्तविनाशे एव इति सकोचात् प्रथमतो लुक् न भवति । कथ निमित्तविनाशाभाव इति चेदुच्यत । सौव-

---

१ C G H सा तज्ज्ञापिका

२ C G H सती ज्ञापिके°, B. सती तज्ज्ञापिके°

३ C G इति सूत्रस्थाकर°, B H इत्यादिसूत्रस्थाकर°.

४ B लुग्भविष्यतीति

क्रीतः पञ्चखट्व इत्यादावेकादेशात्प्रागेव टापो लुक् । अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयट उक्तम् ॥ एतद्विरोधाच्चत्तद्राजस्य ( २-४. ६२ ) इति सूत्रे कैयटेनोक्तमङ्गानतिक्रान्तो ऽत्यङ्ग इत्यत्र सुपो लुकि बहुवचनपरत्वाभावात्तद्राजस्येति लुग्न स्यादिति शङ्कापरभाष्यव्याख्यावसरे ऽन्तरङ्गानपीति न्यायेनायं लुक् सुब्लुको बाधकः स्यादित्याशङ्क्य सुब्लुक एवानेन बलवत्त्वं बोध्यत इति तत्प्रौढयेति द्रष्टव्यम् । लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तदाशङ्कासमाधानं वक्तुं युक्तम् ॥ अनेन न्यायेनान्तरङ्गनिमित्तनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इत्यन्यत्र विस्तरः ॥ ५२ ॥

---

रीणां तदन्तस्य । न च तत्र जाते लुकि प्रत्ययलक्षणेन सर्वस्य सुपि इति स्वरो भवेत् इत्यदोष एवेति वाच्यम् । परिभाषार्थे सम्यग्ज्ञाते सति तस्य वक्तुमशक्यत्वात् । परिभाषार्थलुग्विषये सति अन्तरङ्गकार्याभाव एव तद्विषये सति अन्तरङ्गकार्याणि नैव प्रवृत्तानि । अतः लुकि कृते दोषस्तदवस्थः । अतः संकोचः । सप्तमीत्वामिति । 'मीह्रीभृहुवाम्' इत्यनेन ज्ञापितत्वात् 'सर्वस्य सुपि' इत्यस्य सुबन्तसर्वशब्दस्य आदिरुदात्तः स्यादित्यर्थः । तथा च पूर्वं लुकि कृतेपि प्रत्ययलक्षणेन सुबन्तत्वात् आद्युदात्तः स्यात् । न च 'न लुमताङ्गस्य' इति निषेधात्कथं प्रत्ययलक्षणमिति वाच्यम् । अत्र विशिष्ट एव कार्यित्वात् 'लुमप्रत्यय' इत्यादिसंकोचेन चात्राप्राप्तेः । एवं च पूर्वं लुकि अपि आद्युदात्तः स्यादिति अन्तरङ्गनिमित्त विनाशाभावाच्च लुकः प्राबल्यम् । एवं च प्रथमतो लुकोभावात् 'सर्वस्य सुपि' इत्याद्युदात्ते 'बहुव्रीहौ प्रकृत्या' इति स एवावशिष्यते । अस्मिन् संकोचे प्रमाणं तु भाष्यमेव । अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इति शम् ॥ ५२ ॥

---

१ C. एतद्विरोधात्तद्राज° ; B. G. H. तद्विरोधाच्चत्तद्राज°.

२ B. बलत्वं.

३ B. इति प्रौढयेति C. G. H. तत्प्रौढयेति.

४ H. P. °दिति तदाशङ्का° ; C. °दिति शङ्का° ; thus also originally in B. G.

नन्वेवं[1] सौमेन्द्रे ऽन्तरङ्गत्वादाद्गुणे[2] पूर्वपदात्परेन्द्रशब्दाभावेन नेन्द्रस्य परस्य ( ७. ३. २२ ) इति वृद्धिनिषेधो व्यर्थः । अन्तादिवद्भावस्तूभयत[3] आश्रयणे निषिद्धः । किंच वृद्धिरप्यत्र न प्राप्नोत्यन्तादिवत्त्वोभयाभावे ऽपि पूर्वान्तवत्त्वे[4]नैकादेशविशिष्टे पूर्वपदत्वेन[5] न्द्रशब्दस्यैकदेशविकृतन्यायेनोभयत[6] आश्रयणे नान्तादिवदित्यास्याभावेन तदाश्रयेण[7] वोत्तरपदत्वे ऽपि[8] तस्यानच्कत्वादेकस्यैकादेशेन परस्य नित्येने[9] यस्य ( ६. ४. १४८ ) इति लोपेनापहारात् । न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्संभव इति वाच्यम् ।

सौमेन्द्र इत्यत्र अणूप्रत्ययोत्पत्तेः प्रागेव पूर्वोपस्थितनिमित्तत्वादन्तरङ्गत्वेन गुणः प्राप्नोति तस्मिंश्च कृते इन्द्रशब्दपरकत्वाभावाच्चेन्द्रस्येति वृद्धिनिषेधो न युज्यत इति व्यर्थ एव। तथा च वृद्धेः प्राप्तिं मत्वा दोषो दत्तः। परंतु वृद्धेः प्राप्तिरेवात्र नास्तीत्याह—न्द्रशब्दस्येति। यस्येति लोपात्प्रागेवेयमुक्तिः। यस्येति लोपे तु अर्धाधिकलोपादेकदेशविकृत० इत्यस्याप्राप्तेः। एकदेशविकृतन्यायेनेत्यस्य उत्तरपदत्वे इत्यत्रान्वयः। उभयत आश्रयणे इत्यस्याभावेनेति। प्राचीनैः उभयत इति वाचनिकमित्युक्तम् । नवीनैस्तु नैतद्वाचनिकमपि तु युक्तिसिद्धमेवेति । यतः एकादेशविशिष्टस्थले अन्तत्वादित्वव्यवहारोपि तस्मात्परोयमिति वक्तुमशक्यमेव। एवं च व्यपवर्गाभावात् अन्तत्वादित्वयोराश्रयणेपि न तत्प्रयुक्तकार्यप्रवृत्तिः। एतन्मूलक एवायं शब्दः उभयत......इति इत्युक्तम्॥ परंतु कथमपि तद्वचनस्याभावात् तदाश्रयणे पूर्वपदोत्तरपदत्वादिव्यवहाराद् वृद्धिः प्राप्नोति इति चेन्न। तस्यानच्कत्वात्। एवं च वृद्धिरेव न प्राप्नोतीत्युक्तम्। अत्र कश्चिच्छङ्कते—अस्त्यत्र वृद्धिप्रसङ्ग इति। परंतु तदपि नेत्याह—न चेत्यादिना। पूर्वान्तवत्त्वेन सिद्धावपि परादिवद्भावेन एन्द्र इत्यस्योत्तरपदत्वाद् वृद्धिः प्राप्नोति । ननु

१ G. H. P. सौमेन्द्रे ; B. C. सामेन्द्रे.

२ C. G. H. °द्गुणे पूर्व° ; B. °द्गुणे कृते पूर्व°.

३ B. °भयताश्रयणे.

४ C. पूर्वान्तत्वेनैका°.

५ G. H. P. °पदत्वेन न्द्रशब्द° ; B. °पदत्वेन द्रशब्द° ; C. °पदत्वेनेन्द्रशब्द° ; P. mentions the reading न्द्रशब्द°.

६ B. °भयताश्रयणे.

७ P. तदाश्रयेण वो° ; C. तदाश्रयणेन चो° ; B. H. °वदिति निषेधाभावेन तदाश्रयेण चो°. G. तदाश्रयणेन वो°.

८ B. om. ऽपि.

९ B. नित्यत्वेन यस्य.

उत्तरपदाद्यच्स्थानिकत्वाद्वृद्धेस्तदभावेनाप्राप्तेस्ताद्रूप्यानतिदेशात् । अन्यथा खट्वाभिरित्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे[1] भिस ऐसापत्तिरिति भाष्ये स्पष्टम् । अत एव पूर्वेषुकामशम इत्यादावन्तरङ्गत्वादाद्गुणे[2] वृद्धिर्न स्यादित्याशङ्कितम् । तदेकदेशमात्रस्य विकाराभावाच्च ॥ तदुक्तं भाष्य इन्द्रे द्वावचावेको यस्येति लोपेनापहृतो ऽपर एकादेशेन ततो ऽनच्क इन्द्रः[3] संपन्नस्तत्र कः प्रसङ्गो वृद्धेरिति ॥ महदादिभिरिन्द्रस्य[4] द्वन्द्व इन्द्रस्यैव पूर्वनिपातो ऽत आह ।

पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गो ऽप्येकादेशो न ॥ ५२ ॥

अत्र[5] च नेन्द्रस्य ( ७. ३. २२ ) इति निषेध एव ज्ञापक[6] इत्यन्तादिवच्च

तस्योत्तरपदत्वेपि सोम इत्यस्य पूर्वपदत्वं कथम् । न च एकदेश० इति न्यायेनेति वाच्यम् । योय धर्म एकादेशविशिष्टे० इति सिद्धान्तात् । अयं सकोचः किमर्थं स्वीक्रियते इति चेद् 'गणेश' इत्याद्यर्थं स आवश्यक इति । 'एन्द्र' इत्यस्योत्तरपदत्वे अर्थात् सोम् इत्यस्य पूर्वपदत्वम् । एवं च एकदेशविकृत० इति न्यायं विना केवलपरादिवद्भावेन वृद्धेः प्राप्तिरस्तीति चेन्न । एन्द्र इत्यस्योत्तरपदत्वेपि तथात्वस्य स्वतःसिद्धत्वेपि देवतावाचकोत्तरपदाद्यच्स्थानिकत्वस्य विवक्षितत्वात् । तथा चात्र देवतावाचकत्वस्य अद्यार्द्धीयत्वादन्तादिवत्त्वादिनाऽऽनयनासंभवात् । एवं च एन्द्र. इत्यत्र देवतावाचकोत्तरपदत्वाभावेन वृद्धेरप्राप्तेः तत्संभव इति न वाच्यमित्यर्थः । कुतोऽप्राप्तिरत आह—ताद्रूप्येति । तद्रूपस्य भावः ताद्रूप्यम् । वर्णमात्रवृत्तिधर्म इत्यर्थ. । तस्यानतिदेशात् । अत एवेति । पूर्वेषुकामशम इत्यत्र सोमेन्द्र इति वदन्तरङ्गत्वादाद्गुणे अन्तादिवद्भावैकादेशादेरभावाद् वृद्धिर्न स्यादित्यस्य भाष्यकाराणां सम्मतत्वात् । तथा सोमेन्द्र इत्यत्र नायं गुणः एकदेशमात्रस्य विकाराभावात् । कथं वा एकदेशमात्रस्य विकाराभावस्तदाह– तदुक्तं भाष्य इति । एवं च एकादेशविशिष्टस्थले वृद्धेरप्राप्तावपि हलन्तादिन्द्रशब्दे परे तत्संभव इत्यपि न । 'अजाद्यदन्तम्' इत्यनेन इन्द्रस्यैव पूर्वनिपातत्वात् । एव च सर्वथा निषेधस्य व्यर्थत्वादाह—पूर्वोत्तरनिमित्तकार्यादिति ॥ ५३ ॥ ५४ ॥

१ B. पूर्वान्तत्वेनाद°.
२ C. G. H. °त्वादाद्गुणे ; B. °त्वादद्गुणे कृते.
३ C. G. and Bhāṣya इन्द्रः सपन्नः ; B. H. इन्द्रशब्दः सपन्नः.
४ B. °दिभिरिन्द्रशब्दस्य.
५ B. G. H. P. तत्र च ; C. G. om. च.
६ C. G. H. °पक इत्यन्तादिवच्च ; B. H. °पकमित्यन्तादिवच्च.

( ६. १. ८५ ) विप्रतिषेधे परम् ( १. ४. २ ) इति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वाद्धित्वादिषु कृतेषु ल्यप्स्यादत आह ।

**अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते ॥ ५४ ॥**

अदो जग्धिः ( २. ४. ३६ ) इति सूत्रे क्तितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमित्यदो जग्धिरित्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥

नन्वेवमपीयायेत्यादौ द्वित्वे कृते ऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह ।

**वार्णादाङ्गं बलीयो भवति ॥ ५५ ॥**

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः ॥ अभ्यासस्यासवर्णे ( ६. ४. ७८ ) इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम् ।

---

नन्वेवमपीयायेत्यादाविति । पूर्वोक्तेषु अन्तरङ्गबाधकेषु सत्स्वपि इयाय इत्यत्र इण् गतौ इत्यस्मात् लिट्-तिप्-णलादिषु कृतेषु द्वित्वे च इ+इ+अ इत्यत्र पूर्वोपस्थितनिमित्तकत्वेनान्तरङ्गत्वात् प्रथमतः सवर्णदीर्घे ततो वृद्ध्यादिषु सत्स्वपि इयाय इति नैव सिध्यति । अत आह—वार्णादाङ्गं बलीयो भवतीति । वर्णेषु भवं वार्णम् । अङ्गे भवमाङ्गम् । 'वार्णकार्यापेक्षयाऽऽङ्गकार्यस्य प्राबल्यम्' इति तदर्थः । तेन चात्र सवर्णदीर्घं बाधित्वा प्रथमतो वृद्धौ इयङि च इयाय इति सिध्यति । किमत्र प्रमाणं तदाह—'अभ्यासस्यासवर्णे' इति इयङ्विधायकसूत्रस्थमसवर्णग्रहणमिति । तथा हि । अत्र प्राचीनमते नवीनमते च महान् विशेषः । प्राचीनास्तु केवलमसवर्णग्रहणमेव ज्ञापकमिति ब्रुवन्ति । नवीनास्तु सम्पूर्णमेव सूत्रं ज्ञापकमिति ब्रुवन्ति । तत्र प्रथमतः 'इति प्राञ्चः' इत्यन्तेन प्राचीनमतमुपन्यस्य पश्चात् नवीनमतमुपन्यस्यते । प्राचीनमते 'अभ्यासस्य' इत्येतस्य चारितार्थ्यं भवति इयाय इत्यादौ । तथा हि—'इ इ अ' इत्यत्र चक्रकापत्तिः ।

---

१ B H P. प्रस्थाये याद्यवन्तर०, C. G प्रस्थायेत्यत्रान्तर०.

२ B ०दीत्वादिषु

३ C. G स्यादत आह, B H स्यादित्यत आह

४ H P नन्वेवमपा०; B C G. नन्वेवमि०.

तेद्दीपतुरित्यादावियङादिव्यावृत्त्यर्थम् । एतत्परिभाषाभावे त्वीपतुरित्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तदर्थम् । इयङुवङौ ह्यभ्याससंबन्धनिमित्तकत्वाद्बहि-

प्रथमतः 'अचो ञ्णिति' इति वृद्धिः प्राप्ता । तदपेक्षया चान्तरङ्गत्वादियङ् प्राप्नोति । परंतु केवलवर्णद्वयसापेक्षत्वेनान्तरङ्गत्वादियङः पूर्वं सवर्णदीर्घः प्राप्नोति । तस्मिन् कर्तव्ये 'अन्तरङ्गनिमित्तविनाशकबहिरङ्गशास्त्रप्रवृत्तिसंभावनायां अन्तरङ्गं न प्रवर्तते' अथवा 'अन्तरङ्गशास्त्रीयनिमित्तविनाशकबहिरङ्गशास्त्रप्रवृत्तिसंभावनायां जातमन्तरङ्गं निवर्तते' इत्यर्थिकया 'अकृतव्यूहाः पाणिनीयाः' इति परिभाषया सवर्णदीर्घापेक्षया वृद्धिः प्राप्नोति । तदपेक्षया चान्तरङ्गत्वादियङ् । इति चक्रकापत्तिः । नवीनमते अकृतव्यूहपरिभाषाऽभावाच्च चक्रकापत्तिः । किंतु सवर्णदीर्घ एव । प्राचीनमते प्राप्ता चक्रकापत्तिः वृद्धीयङोः समबलत्वेन वार्यते । सवर्णदीर्घं बाधित्वान्तरङ्गत्वाद् वृद्धिः प्राप्ता इयङ् च । तत्रेयङः अभ्याससंज्ञा अङ्गसंज्ञा चावश्यकी । वृद्धेस्तु अङ्गसंज्ञा परनिमित्तत्वे च । एवं च वृद्धीयङोः समबलत्वात् परत्वाद् वृद्धौ तत इयङि च 'इयाय' इति सिध्यति । तथा 'इयेष' इत्यत्र 'इ इष् अ' इति स्थितो सवर्णदीर्घेयङ्गुणेषु प्राप्तेषु अकृतव्यूहपरिभाषया गुणे इयङि च भवति तत्सिद्धिरिति 'अभ्यासस्य' इति चारितार्थम् । ननु 'इ इष् अ' इत्यत्र द्वित्वात्पूर्वमेव गुणः प्राप्तः । तस्य 'द्विर्वचनेऽचि' इत्यनेन निषेधे अपहारे वा द्वित्वे 'इष् इष् अ' इत्यत्र गुणः प्राप्तः । हलादिशेषे कृते पश्चात्सवर्णदीर्घः प्राप्नोति । एवं च प्रथमतो गुण एव स्यात् । तस्य प्रक्रियोच्चारणक्रमेणान्तरङ्गत्वात् । परंतु सवर्णदीर्घस्य घटकतयान्तरङ्गत्वम् । यत्र चानेकविधमन्तरङ्गत्वं तत्र घटकतयान्तरङ्गत्वस्य प्राबल्यम् । एवं चान्तरङ्गत्वात्सवर्णदीर्घः प्राप्नोति इति नवीनाः । प्राचीनमते अकृतव्यूहपरिभाषया तन्निषेधः इति गुण एव भवति । 'असवर्णे' इति च 'ईयतुः' इत्यादेः सिद्धेरर्थम् । तथा हि । ईयतुः इत्यत्र तु 'इ इ अतुस्' इत्यत्र 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घं बाधित्वा 'अभ्यासस्य' इतीयङ् प्राप्तः । तं च बाधित्वा 'इणो यण्' इति यण् प्राप्तः । तं बाधित्वा 'दीर्घ इणः किति' इत्यनेन दीर्घः प्राप्तः । तथा च सवर्णदीर्घः, अभ्यासस्येति इयङ्, इणो यण्, दीर्घ इण इति दीर्घः इति चत्वारि कार्याणि प्राप्तानि । तत्र दीर्घ इण इति दीर्घो नाप्राप्तानां

१ C. H. तद्दीपतुरित्यादावियङ्व्यावृ° ; B. P. तद्दीपतुरित्यादावियङादिव्यावृ° ; G. तद्दीयतुरित्यादावियङ्व्या°.

२ C. H. त्वीपतुरित्यादाव° ; B. दीरवन्तरङ्गेण. G. त्वीयतु°.

रङ्गौ। न[1] चेयङादिरपवादो येननाप्राप्तिन्यायेनेयर्तीत्यादिसकललक्ष्यप्राप्तयणपवाद-त्वस्यैव निर्णयादिति प्राञ्चः ॥

परे त्वेतत्परिभाषाभावे ऽभ्यासस्येति सूत्रमेव व्यर्थम्। न चेयेयायेत्यादौ

---

सवर्णदीर्घादीनां त्रयाणां बाधक। तत्रापि सवर्णदीर्घे कृते दीर्घत्वप्राप्तिरस्ति। परंतु सा फलोपहिता दृष्टप्रयोजनवती नेति सवर्णदीर्घस्य अनवकाशत्वाद् बाधः। इयङ्-यणोस्तु फलोपहितप्राप्तिरस्ति इति तक्रकौण्डिन्यन्यायाद् बाध इति। एवं च प्रथमतः दीर्घं इणः कितीति दीर्घे यण् कर्तव्यः। परंतु सकृद्गतिन्यायात्स न स्यात्। तथापि पुनःप्रसङ्गविज्ञानात् स सिध्यतीति 'ईयतुः' इत्यस्य सिद्धिर्भवति। ननु इ इ अतुस् इत्यत्र सवर्णदीर्घः प्राप्तः। एवं सति यणेव कथं क्रियते इति चेन्न। परत्वात् स भवति। ननु यणः तक्रकौण्डिन्यन्यायेन बाधात् पुनः कथं प्रवृत्तिरिति चेत् 'मिदां त्रयाणां गुणः श्लौ' इत्यत्र त्रयादेशे कृते नुटो निर्देशेन तक्रकौण्डिन्यन्यायविषयेषु पुनःप्रसङ्गस्य बोधितत्वात्। एवं च असवर्णग्रहणं विनैव 'ईयतुः' इति सिद्धम्। न चैवमपि 'ईयतुः' 'ऊखतुः' इत्यादि न सिध्यति। तत्र इष् अतुस् इत्यत्र द्वित्वे हलादिशेषे च इ इष् अतुस् इत्यत्र सवर्णदीर्घेयङोः प्राप्तयोः अकृतव्यूहपरिभाषया इयङः प्रवृत्तिरिति वाच्यम्। परिभाषाऽनित्यत्वाश्रयणेनादोषात्। एवं च प्रथमतः अन्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः। ननु अत्र सवर्णदीर्घस्य वर्णद्वयसापेक्षत्वादन्तरङ्गत्वं कथमिति चेत्संज्ञानिरपेक्षत्वात्। इयङुवङौ हि अभ्याससंज्ञासापेक्षत्वेन बहिरङ्गौ॥ ननु संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणं पूर्वमुक्तमिति चेन्न। नेदं शेखरमतम्। आपि तु प्राचीनमतम्। तन्मते अस्त्येव तदिति न दोषः। एवं च अकृतव्यूहपरिभाषया इयङः प्रवृत्तिरिति वाच्यम्। परिभाषाऽनित्यत्वाश्रयणेनादोषात्। एवं च अकृतव्यूहपरिभाषाया अनित्यत्वात् 'ईयतुः' इत्यादीनां सिद्धौ असवर्णग्रहणमेवास्याः परिभाषाया ज्ञापकमिति प्राञ्चः। इयङादेरपवादत्वमपि न इत्याह—न चेयङादिरिति।

एवं प्राचीनमतमुपन्यस्य स्वमतमुपन्यस्यते—परे त्वित्यादिना। तन्मते संपूर्णसूत्रमेव ज्ञापकम्। 'इयाय' इत्यादौ अकृतव्यूहपरिभाषाया अभावादन्तरङ्गत्वात्प्रथमत एव सवर्णदीर्घप्रवृत्ते इयर्ति इत्यत्र ऋ गतिप्रापणयोः इत्यस्माच्छ्लुविकरणाल्लट्प्रत्यये तिबादेशे ऋ ऋ ति इत्यत्र अर्तिपिपर्त्योश्चेतीत्वे इयङर्थं तदावश्यकतास्तीत्येतदपि न। तावत एव प्रयोजनसंभवे 'उः' इत्येव सूत्रं कुर्यात्।

---

१ P. न चेयङादिरप°, B. G न चेयङुप°, G. H चेयङपवाद.

२ B °पवादस्यैव

चरितार्थम् । तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचने ऽचि [ १. १. ५९ ] इति रूपातिदेशेना[1]पहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्तेः ॥ न चेयर्तीत्यादौ तच्च[2]रितार्थम् । तावन्मात्र[3]प्रयोजनकत्वे उरित्येव ब्रूयात् । य्वोरित्यनुवर्तते । इणो यण् [ ६. ४. ८१ ] इति साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम् । अर्तेरिवर्णस्ये[4]यङित्यर्थः । अभ्यासस्यार्तावित्यभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम् । न च एऐओऔशब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकं तथा ओणृधातोर्णुलन्तादिच्छाक्यजन्तात्सन्युवोणवीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम् । [5]षष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात् । अन्त्ये द्वितीयद्विर्वचनस्यैव सत्त्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात् । एवं च संपूर्णसूत्रस्य ज्ञापकता

---

न च ऋशब्दस्यापि स्यादिति वाच्यम् । इणो यणिति सूत्रसाहचर्यात् सूत्रसाहचर्यस्याग्रहे वा व्याख्यानाद्धातोरेव ग्रहणं भविष्यति इति न तत् प्रयोजनम् । गुणवृद्ध्यादेरभावात् । अभ्यासस्य ह्रस्वत्वेनेकारस्तस्येयङर्थः । अथवा नामधातोः सनादिषु कृतेषु ' यथेष्टं नामधातुषु ' इति अजादेरपि आद्यचःस्य द्वित्वे इयङर्थमावश्यकमिति चेन्न । तादृशानामनभिधानात् । तथा उवोणवीयिषति इत्यत्र प्रथमैकाचो द्वित्वासंभवात् इयङाद्यप्राप्ते. तत्र ' यथेष्टं नामधातुषु ' इति सिद्धरूप एवेति सिद्धान्तमूलक- ' अजादेर्द्वितीयस्य ' इत्यस्य प्रवृत्तेः । एवं च इयाय इत्यादौ अन्तरङ्गत्वात्प्रथमतः सवर्णदीर्घे अभ्यासस्य० इत्यस्याप्राप्त्या संपूर्णमेव सूत्रं व्यर्थमिति संपूर्णसूत्रस्यैव ज्ञापकता युक्ता । अत्र सिद्धान्ते ' न च ए ऐ ओ औ शब्देभ्यः ' इति शङ्का प्राचीनमतेन । नवीनमतेनोत्तरमिति ॥ केचिदत्र अलिटि इति पदच्छेदेन नवीनस्यैवेयं शङ्केति वदन्ति । तन्न । स्वारस्यभङ्गापत्तेः । तथा सति सनादावित्येव ब्रूयात् । अत्रापि केचन इयेथ इति चारितार्थ्यमिति वदन्ति तदपि द्विर्वचनेऽचि इत्यस्य तद्भावभावितामात्रेण प्रवृत्त्या थलि परतोऽपि गुणनिषेधाद्द्वित्वे अन्तरङ्गत्वात्सवर्णदीर्घ एव प्राप्नोति इति न संभ-

---

१ B इति सूत्रातिदेशेना°.

२ CGHP. °दौ तच्चरितार्थम् ; B. om. तत्.

३ B. °प्रयोजक°.

४ B C. अर्तेर्ऋवर्णस्य ; PGH. read अर्तेरिवर्णस्य.

५ B. षष्ठप्रथमाह्निकस्थ°.

युक्ता ॥ यद्यपि भाष्ये यदयमभ्यासस्यासवर्णे इत्यसवर्णग्रहणं करोतीति ग्रन्थेना-सवर्णग्रहणस्यैव ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपरोऽभ्यासो भवतीति तदुपपादनग्रन्थेन संपूर्णसूत्रस्यैव ज्ञापकता लभ्यते । अग्रेऽपि नैतदस्ति ज्ञापकमत्यर्थमेतत्स्यादित्यनेन सूत्रसार्थक्यमेव दर्शितमसवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्यावर्त्यप्रदर्शनेन तत्सार्थक्यमेव दर्शितं स्यात् ॥

---

वतीति बोध्यम् । एवं प्राचीनं नवीनं च मतमुपन्यस्य तत्र नवीनमतस्यैव भाष्यानुकूलतां दर्शयति—यद्यपि भाष्ये तथापि न ह्यन्तरेणेति । गुणवृद्ध्योः प्रवृत्त्यभावे असवर्णपरत्वमभ्यासस्य नैव युज्यते नाम इयायत्यादौ गुणवृद्धी विनाऽसवर्णपरत्वं वर्तते वा न वा । तर्हि नैव । तथा च ते गुणवृद्धी सवर्णदीर्घात्प्राग्भवितुमर्हतो वा न वा । तर्हि नैव । एवं च प्रथमतो गुणवृद्ध्योः प्रवृत्त्यभावात् असवर्णपरत्वाभावेनाप्राप्तेः संपूर्णसूत्रमेव व्यर्थमिति । एवमनेन भाष्येण संपूर्णसूत्रस्यैव ज्ञापकत्वं लभ्यते । तथा असवर्णग्रहणस्य प्रमुखं फलं तु सवर्णे परतः न भवति इत्येव । एवं च असवर्णग्रहणस्यैव ज्ञापकत्वे 'न हि सवर्णदीर्घे कृतेऽसवर्णपरोऽभ्यासो भवति इत्युक्तं स्यात् । ननु प्रथमतो यदयं असवर्णग्रहणं करोति' इति शब्दतः असवर्णग्रहणस्यैव ज्ञापकतेति चेन्न । उपक्रमापेक्षया उपसंहारो बलीयानिति न्यायात् । तथा च यद्यपि उपक्रमादसवर्णग्रहणस्यैव ज्ञापकता लभ्यते तथापि युक्तिप्रयुक्त्यन्ते संपूर्णसूत्रस्यैव ज्ञापकता युक्ता । ननु 'अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः०' इत्यादिवाक्यबोधित—असंजातविरोधन्यायेन न ह्यन्तरेणेत्यत्र विरोधात्तत्रैवार्थविपर्ययः स्यात् । न तु मूले । एवं च अनेन न्यायेनासवर्णग्रहणस्यैव ज्ञापकत्वं स्यादिति चेन्न । तस्य न्यायस्याग्रहणात् । ग्रहणे च अग्रिमग्रन्थ एव विरोधी । ननु उपसंहारेऽपि असवर्णग्रहणस्यैव ज्ञापकतावगता । तथाहि । प्रथमतः असवर्णग्रहणं ज्ञापकमित्युक्तम् । ततः इणो यण् इत्यपि संभवति इत्युक्त्वा पश्चाच्च तदपि न संभवति इत्युक्त्वा असवर्णमेव तर्हि ज्ञापकमस्तु इत्युक्तम् । एवं चोपसंहारेऽपि असवर्णग्रहणस्यैव ज्ञापकता इति चेन्न । अत्यर्थमेतत्स्यादिति यदुक्तं तस्य किमप्युत्तरमदत्त्वैव तुष्यतु दुर्जन इति न्यायेन इणो यण् इति ज्ञापकान्तरमुपन्यस्तम् । तत्राप्यसंभवं दृष्ट्वा पूर्वोक्तमेव ज्ञापकं युक्तमित्युक्तम् । अत्र असवर्णे इ यस्य असवर्णघटितमित्यर्थं । एवं च उपसंहारानुरोधात्संपूर्णसूत्रस्यैव ज्ञापकता युक्ता । तथा यत् इयर्ति इति सूत्रस्य सार्थक्यं दर्शितं तदपि नैकमुदाहरणमिति

---

१ B C °वृद्ध्यसवर्ण°, but Bhasya on VI 1 12 'वृद्धी असवर्ण°

न चाकृतपरिभाषयेयेत्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति संभावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूत्रपाठ्यादिति कथं संपूर्णसूत्रस्य ज्ञापकतेति वाच्यम्। तस्या असत्त्वात्। सत्त्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकबहिरङ्गनिने. प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च। न चान्तरङ्गत्वाद्दीर्घे ऽधीयायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासेयादिवर्णत्वाच्च णल्यसवर्ण इयङ्[3]विधानेन सूत्रं चरितार्थं न चाचि श्नु

---

भाष्येणैव तस्यायुक्तत्वमुचितम्। एवं स्वस्यैव भाष्यानुकूलतां प्रदर्श्य प्राचीनमतं खण्डयितुमुपक्रमते—न चेत्यादिना। अकृतव्यूहपरिभाषा साक्षात् परंपरया वा न निमित्तविनाशे आगच्छति। यथा सेदुष इत्यत्र संप्रसारणे कृते साक्षादेव इटः निमित्तं वस्वादित्वं नश्यति, इयायेत्यादौ तु परंपरया। न हि सवर्णदीर्घ एव स्वस्य निमित्तं व्यपोहति न तु वृद्धिरिति चेन्न। प्रधानमल्लनिबर्हणन्यायेन इकाररूपनिमित्तस्य विनाशकोऽयं सवर्णदीर्घस्तद्विनाशिका वृद्धिः इकारस्य विनाशिकैवेति परंपरया निमित्तविनाशः। इयेष इत्यादौ तु संभावनया। संभावना नाम मिथ्याकल्पनासिद्धिः। एवं संभावनायाः सत्त्वेन अकृतव्यूहपरिभाषया प्रथमतो गुणे इयङश्चारितार्थ्यं वर्तते इति चेन्न। परिभाषाया असत्त्वात्। अथ वा तुष्यतु दुर्जनन्यायेन परिभाषा गृहीता चेत्सा अत्र नायात्येव संकोचात्। ननु संकोचः किं परिभाषाऽप्रवृत्त्यर्थमेव गृह्यते इति चेन्न। तस्य 'केशाः' इत्याद्यर्थमावश्यकत्वात्। तत्र हि कश्च अश्च ईशश्च इत्येतेषां समाहारे 'क अ ईश' इत्यवस्थायामसति संकोचे अनया परिभाषया सवर्णदीर्घं बाधित्वा गुण एव स्यात्। अतोऽयं संकोच आवश्यकः। तथा चात्र 'अकृतव्यूह॰' इत्यस्याभावे प्रथमतः सवर्णदीर्घ एवेति संपूर्णसूत्रमेव व्यर्थम्। न चेति। अचि श्नु इत्यनेनापि तत्र इयङ् प्रवृत्तेः इति न वाच्यम्। तत्र ई अ इत्यवस्थायामियङ् वृद्धिरिणो यण् च प्राप्ताः। तत्र यणं इयङं च बाधित्वा परत्वाद् वृद्धिः प्राप्नोति। अतस्तद्बाधनार्थं तस्यावश्यकत्वात्। एवं च चारितार्थ्यं वर्तते इति चेन्न। प्रत्यासत्त्या अभ्यासपदेन उत्तरखण्डावयवोत्तरखण्डमचाभि-असवर्णेऽचीयङ्विधानात्। ननु अत्र अभ्यासस्य षष्ठ्यन्तत्वं भवतः असवर्णेऽपि इत्यर्थे आकाङ्क्षा नैव प्राप्नोति। तथा च

---

१ G P. चान्तरङ्ग॰; B.C H. follow Bbāṣya. चान्तरङ्गत्वा॰
२ B. पूर्वान्तवत्त्वेन॰
३ C. ॰हल्त्वादियङ्॰.

[ ६. ४. ७७ ] इत्यनेन सिद्धिर्वृद्धिबाधनार्थत्वादिति वाच्यम् । प्रत्यासत्त्यासवर्णपदेनाभ्यासोत्तरखण्डसंबन्ध्यसवर्णाच एव ग्रहणाच्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याचेत्याहु ॥

मा चेय धर्मिग्राहकमानादाङ्गवार्णयो समानकार्यिकत्व एव । यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति तन्न ज्ञापिते ऽपीयायेयेषेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च ॥ स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेश ॥ न चैवमपीयायेत्यादावियङ् दुर्लभस्तत्र कर्तव्ये वृद्ध्यादे स्थानिवत्त्वेनासवर्ण इति प्रतिषेधादिति वाच्यम् ।

कथमत्र प्रत्यासत्ति । प्रत्यासत्त्यभावाच्च सूत्रस्य चारितार्थ्यं वर्तते इति चेन्न । पूर्वं तद् वृद्धिबाधनार्थमित्युक्तम् । एव च सूत्रवैयर्थ्यं गृहीत्वाऽपरबाधापेक्षया ज्ञापनस्यैवौचित्याद् । चारितार्थ्याभावाज्ज्ञापनमेव । एव च ज्ञापितेय परिभाषा 'आङ्गवार्णयो समानकार्यित्व एव इति सकोच स्वीक्रियते । अस्य फल तु गाते इति । तत्र गा अ आते इत्यत्र पूर्वं सवर्णदीर्घ परत्र आतो ङित इति इयादेशे च प्राप्ते अनया परिभाषया आङ्गत्वादियादेशे गाते इति रूपासिद्धिः । अतोनेन सकोचन तस्या अप्रवृत्ते प्रथमतोन्तरङ्गत्वात्सवर्णदीर्घो भवति इति तत्सिद्धिः ॥

एव स्वकीय सकोचमुक्त्वा परमप्राचीनमते 'समाननिमित्तत्वरूपसमानाश्रयत्व एव' इति यः सकोचस्त निरस्यति—तन्न इत्यादिना । तथा सकोचे हि इयाय इत्यत्र सवर्णदीर्घवृद्ध्या प्राप्तयो समाननिमित्तत्वाभावात् अस्यास्तत्राप्राप्त्या प्रथमत. सवर्णदीर्घे 'अभ्यासस्य' इत्यस्येव वैयर्थ्यापत्त । ननु तर्हि समाननिमित्तत्व एवैषा इति वदता 'स्योन ' इति यत्फल तस्य कथ सिद्धि इति चेदुच्यते—अस्याश्छ्वोरिति सतुग्निर्देशेन अनित्यत्वस्य ज्ञापितत्वात्। अप्रवृत्तौ अन्तरङ्गत्वाद् गुणापेक्षया यणादेश एव भवतीति तत्सिद्धिरिति च एतादृशज्ञापने संकोचेपि 'इयाय' इत्यस्यासिद्धिरेव । णल्निमित्तकगुणवृद्धी तावद्भवत इकारात्पूर्वस्य इयङि कर्तव्ये । एव च सवर्णत्वबुद्ध्या इयङ् नैव स्यात् । एव चासिद्धि । तदाह—स्थानिवत्त्वेनासवर्ण इति प्रतिषेधादिति । ननु असवर्ण इति प्रतिषेध कथमिति चेत् प्राचीनै. 'सवर्णे परता न भवति'

१ CP °चित्याचेत्याहु, BCH om इत्याहु
२ CP °कार्यिकत्व एव, BGH, कार्यि व एव
३ B तन्न ज्ञापते इयेय°
४ BGP °रौ यास्या अनि°, C °रीत्यास्यान° H रीत्या अस्या

सूत्रारम्भसामर्थ्यादेव स्थानिवत्त्वाप्रवृत्तेः । तच्च सामान्यापेक्षमभ्यासकार्ये तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति । अत एवारतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य ढ्लोपे (६. ३. १११) इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । अरिरियादित्यत्र तु स्थानिवत्त्वे-

---

इति तस्यार्थ उक्त इति तन्मते प्रतिपद्यत्वं स्पष्टमेव । ननु नवीनमते कथं प्रतिषेधः यतः पर्युदासेन बोधितस्याशास्त्रीयत्वात् इति चेन्न । पर्युदासलभ्यस्याशास्त्रीयस्यापि शास्त्रीयत्वात् । एवं च असवर्णे परतः भवति । अर्थात् सवर्णे न भवति इति स्पष्टमेव । एवं च प्रतिषेधः । एवं चात्रासिद्धिं दृष्ट्वा समाधयति—सूत्रारम्भसामर्थ्यादिति । एवं चानेन सूत्रेण ज्ञापने वार्णादाङ्गमिति स्थानिवत्त्वाप्रवृत्तिरिति च । अत्र प्राचीनास्तु—न पदान्त० इति निषेधात्सिद्धिरिति वदन्ति । ते तु सवर्णे विधिः सवर्णविधिः तस्मिन्कर्तव्ये स्थानिवत् इत्युक्त्वा सवर्णे परतः यो विधिः असवर्णप्रतिषेधरूपः तस्मिन्कर्तव्ये न स्थानिवत् । एवं च स्थानिवद्भावनिषेधात् इयाय इत्यस्य सिद्धिं कुर्वन्ति तदनुचितम् । तथा सति यलोपस्वरादिभिः सहविवक्षाया अभावाद् द्वन्द्वाभाव्या सौत्रद्वन्द्वापत्तेः । तथा प्रसज्यप्रतिषेधस्यापि गौरवग्रस्तत्वाच्च । एवं सूत्रसामर्थ्यादेव तत्सिद्धिरुचिता इति । एवं चास्माज्ज्ञापकाद् द्वे ज्ञापने—वार्णादाङ्गं स्थानिवद्भावाप्रवृत्तिरिति च । तच्च ज्ञापनं सामान्यापेक्षं नाम अभ्यासस्येयेतद्विषयकमेव इति न, अपि तु यत्र कुत्रापि अभ्यासकार्ये कर्तव्ये उत्तरखण्डादेशस्य अभ्यासकार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं न इत्येतादृशमेव ज्ञाप्यते । तेन आरति इत्यत्र ढ्लोप इति दीर्घसिद्धिः । अत्र हि ऋ गतिप्रापणयोः इत्यस्मात् सूचिसूत्रि० इत्यनेन यङि यङ्लुकि प्रत्ययलक्षणेन द्वित्वे उरदत्वे ऋतश्चेति रुगागमे धातुत्वात् लट् श्वि अदादित्वे कृतेषु यणि च अर् र ति इत्यत्र रोरीति लोपे ढ्लोपे इति दीर्घे च आरति इति रूपं सिध्यति । अत्र यणादेशस्य स्थानिवत्त्वे रेफपरत्वाभावाद् दीर्घो न स्यात् । परं त्वत्रत्यज्ञापकानुसारेण अभ्यासकार्यं प्रति अत्र स्थानिवत्त्वं न इति दीर्घं सुखेन सिध्यति । एवं च दीर्घो दुर्लभ इत्यपास्तम् ॥ ननु अयं सङ्कोचः युष्मन्मते न स्यात् । अन्येषां तु आरति इत्यत्र दीर्घो दुर्लभ एवेति चेदत्याह—दीर्घविधौ तन्निषेधादिति । न पदान्त इति सूत्रेण दीर्घे कर्तव्ये स्थानिवत्त्वाभावान्न दोषः

---

१ B ०भ्यासस्य कार्ये तदुत्तर ख°.

२ CG. °दित्यत्र तु स्थानि°; B H om तु

नेयङ् भवत्येव तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् ॥ इय

---

इति। ननु अयुक्तमिदं न पदान्त इति सूत्रे स्वरदीर्घयलोपेषु इति वार्तिकोक्त्वात् अत्र स्थानिवद्भावप्राप्ते इति चेन्न। तत्र यलोपदीर्घयोः प्रत्याख्यातत्वात्। ननु तर्हि तस्य फलं यत् कियौ गियौ विव्यतु इति अस्य कथं सिद्धिः इति चेत्तत्र हि अज् धातोर्लिटि तस्–अतुसादिषु कृतेषु अजेर्व्यघञपोः इत्यनेन व्यादेशे द्वित्वे च यणि च विव्य् अतुस् इत्यत्र उपधायां च इत्यनेन दीर्घः प्राप्त। स च यणादेशस्य स्थानिवद्भावेन बाध्यते। तत्रापि न पदान्त इति निषेधः स्यादेव। अतः स्वरदीर्घ इत्यत्र दीर्घग्रहणं न स्यात्तर्हि विव्यतुरित्यत्र दीर्घस्य दुर्वारत्वेन रूपासिद्धिः इति चेन्न। प्राचीनमते अन्तरङ्गपरिभाषया वारयितुं शक्यत्वात्। तन्मते हि परनेकाच इति यण् व्वि वि अतु इत्यपेक्षत्वाद् बहिरङ्गत्वम्। उपधायां च इत्यस्य तु केवलं वि व य इत्येवापेक्षितम्। एवं च अन्तरङ्गपरिभाषया यणोऽसिद्धत्वाद् दीर्घाभावः सिध्यति। नवीनमते तु उत्तरखण्डस्यैव धातुत्वाद् दीर्घाप्राप्त विव्यतु इति सिध्यति। एवं च स्वरदीर्घेत्यत्र दीर्घग्रहणप्रत्याख्यानेऽपि न दोषः। एवं च सङ्कोचाभावात् सर्वथा न पदान्त इत्यनेन दीर्घविधौ स्थानिवद्भावनिषेधस्य सत्त्वात्। एवं च आरति इत्यत्र दीर्घः सिध्यति इत्याशयेनाह––दीर्घविधौ तन्निषेधाच्चेति। ननु भाष्ये न पदान्तेत्यत्र दीर्घग्रहणं प्रत्याख्यातम्। सर्वत्र पूर्वत्रासिद्धमित्यनेन सिद्धेः। तथा च कथमत्र दीर्घे कर्तव्ये स्थानिवद्भावनिषेध इति चेत् तत्प्रत्याख्यानं पूर्वत्रासिद्धमित्यवष्टभ्य कृतम्। अतस्तद्भिन्नविषये न प्रत्याख्यानम्। अत एव अहिडि अहीडि इ यत्र चिण्णमुलोरिति दीर्घः सिध्यति इति वक्तव्यम्। अथवा सिद्धान्ते स्यादेव चेत् प्रत्याख्यानं तदा दीर्घविधौ तन्निषेधाच्च इति शेखरग्रन्थो यथाश्रुतसूत्ररीत्या उपपादनीयः। एवं च नवीनमते अभ्यासकार्ये तदुत्तर० इति सङ्कोचेन वा पूर्वोक्तरीत्या आरति इत्यस्य सिद्धिर्भवत्येव। तथाऽत्र सङ्कोचे तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं न इत्युक्तत्वात् 'अरिरियात्' इति स्थानिवद्भावस्य फलं सिध्यति। तथा हि। अत्र ऋधातोः यङ्लुगन्तात् आशीर्लिङादिषु कृतेषु रीगागमे च 'रिङ्शय०' इत्यनेन रिङादेशे च तस्य स्थानिवत्त्वादसवर्णाच्परत्वेन इयङ् सिध्यति। नन्वत्र प्रथमतो रिङ् कथं क्रियते। यदि स प्रथमतः स्यात्तदर्थेन स्थानिवत्त्वमत्र सम्भवेदिति चेत् परत्वादत्र रिङ्। ननु तस्य परत्वेपि इयङ अन्तरङ्गत्वं प्रयोगीयोच्चारणक्रमेण पूर्वोपस्थितनिमित्तकत्वात् इति चेदेवमपि तत्र असिद्धपरिभाषाऽप्रवृत्त्या रिङ्नित्यत्वेन उभयोस्तु

चाङ्गसंबन्धिन्याङ्ग एवेति स्वरितो वा ( ८. २. ६ ) इति सूत्रे भाष्ये।

---

त्यत्वात् परत्वादेव व्यवस्था। एवं च पूर्वमेव रिङ् भवति। ननु इयङः प्रक्रियोच्चारणक्रमेणापि अन्तरङ्गत्वमायाति। तत्र च ओमाङोश्चेति ज्ञापकात् परिभाषा प्रवर्तत एव, तथा प्रथमतो रिङ् न स्यादिति चेन्न। प्रक्रियाक्रमदर्शने हि उभयोः समकालप्राप्तिकत्वात् परत्वादेव व्यवस्थोचिता। कथं वा उभयोर्युगपत्प्राप्तिकत्वमिति चेदुच्यते। तथा हि—ऋधातोर्यङि यङ्लुकि प्रत्ययलक्षणत्वाद् द्वित्वं धातुत्वं च प्राप्तम्। तयोश्चाविरोधादेकदैव द्वित्वं धातुत्वं च स्यात्। ततः अभ्याससंज्ञा लिङ्प्रत्ययश्च भवति तयोरविरोधात्। ततः पूर्वत्र उरदत्वं ऋतश्चेति रीक् प्राप्त.। तथा परत्र लिबादेशो यासुट्। ननु यासुटः परस्मैपदनिमित्तत्वम्। तथा च तत्प्रवृत्ते· प्राक् कथं यासुटः प्रवृत्तिरिति चेदुच्यते। उत्सर्गसमानदेशा अपवादा· इति न्यायात्। अस्य च सीयुटोऽपवादत्वात् सीयुटः केवललिङ्परत एव प्रवृत्ते.। ननु तर्हि यासुट परस्मैपदेषु इत्यत्र परस्मैपदेषु इति परस्मैपदानां निमित्तत्वं बोध्यते तथा च कथं लिङ्परत एव प्रवृत्तिः इति चेत्, परस्मैपदेषु कर्तव्येषु इति तदर्थो बोध्यः। 'उत्सर्गसमानदेशा अपवादाः' इत्यस्य औत्सर्गिकत्वात् पूर्वत्र रीक् परत्र यासुट्। तथा च ऋ रीं ऋ यासुट लिङ् इत्यवस्थायां पूर्वत्र इयङ् परत्र रिङ् च प्राप्त। कः कर्तव्यस्तर्हि पूर्वरीत्या समबलत्वात् युगपत्प्राप्तत्वाच्च विप्रतिषेधे परं कार्यमित्यनेन परत्वाद् रिङेव भवति। एवं च असवर्णाच्परत्वाभावात् इयङ् न स्यादिति स्थानिवद्भावस्योदाहरणमेतत्। तत्र च यदि पूर्वोक्तसंकोचे तत्कार्यप्रतिबन्ध· इति न स्यात्तर्हि अत्र स्थानिवद्भावो न स्यात्। इदानीं तु अस्य स्थानिवत्त्वस्य अभ्यासकार्यसाधकत्वात् पूर्वत्र संकोचाप्रवृत्त्या स्थानिवद्भावो भवत्येवेति अरिरियात् इत्यस्य सिद्धिः। एवं च संकोचः साधक एव न तु बाधक इत्यस्याः प्रवृत्तेः संकोचमाह—इयमङ्गसंबन्धिनीति। अङ्गसबन्धिनीयं परिभाषा आङ्गे नाम अङ्गाधिकारविहिते कार्य एव प्रवर्तते इति स्वरिते वानुदात्ते इति सूत्रभाष्याल्लभ्यते। कथमिति चेदुच्यते। तथा हि भाष्ये— कुमार्यै इदामित्यत्र उदात्तापादेशो यथा स्यादित्येतदर्थमेकादेशस्वरो न्तरङ्गः सिद्धो वाच्य· इति वार्तिकं प्रणीतम्। परंतु तन्न करणीयम्। अकृतेऽपि तस्मिन्नेकादेशस्वरस्य सिद्धत्वात्। तत्र कुमारशब्दः 'कमेः किदुच्चोपधायाः' इत्यौणादिकसूत्रेण सिध्यति। तत्र 'कसिमृजिभ्यां चित्' इत्यस्मात् 'चित्' इत्यनुवृत्त्या चित· इत्यनेनान्तोदात्तः। तस्माद्वयसि प्रथमे इति ङीप्। स च अनुदात्तो

नत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्त ॥ इय चानित्या च्छ्रौ ( ६.४.१९ ) इति सतुग्निर्देशात् । अ यथाङ्गत्वात्पूर्वं तुक शादेशे तुको ऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तर ॥ ५५ ॥

---

सुप्पित्तौ इत्यनुदात्त । तत यस्येति चन्यनेन इकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोप' इत्यनेन ईकार उदात्त । तस्मात् ङेप्रत्ययो भवति । स च अनुदात्तौ सुप्पितौ इत्यनेनानुदात्त । ततो यणाडागमयो प्राप्तयो परत्वादाडागम प्राप्नोति। तदपेक्षयापि अन्तरङ्गत्वाद् यण् प्राप्नोति। परन्तु अनया वार्णादाङ्गमिति परिभाषया आङ्गत्वादाद् प्राप्नाति । स च आगमा अनुदात्ता इत्युत्सर्गादनुदात्त । ततश्च आटश्चेत्यनेन वृद्धि । सा चानुदात्तैव । ततो यण् । ततश्च उदात्तस्थान यो यण् हल्पूर्वस्तस्मात्परा या नदी सार्दिविभक्तिश्चोदात्ता इत्यर्थकन 'उदात्तयणो हल्पूर्वात्' इत्यनेन उदात्तो भवति तस्य च सपादसप्ताध्यायीस्थत्वादन्तोदात्त पद सिद्धमेवेति एकादेशस्वरोन्तरङ्ग इति वार्तिक व्यर्थ स्यात् । तत्सगतिस्तु इत्थम्--कुमारी ए इत्यत्र यणाडागमयो प्राप्तयोरन्तरङ्गत्वाद्यण् प्राप्नोति । ननु आटोपवादत्वमिति चेन्न । असभव एव बाधकत्वमिति पूर्वमेवोक्तत्वात् । एव चान्तरङ्गत्वात्पूर्वं यण् तत उदात्तयण इत्यनेन ङे उदात्तो भवति अन्तरङ्गत्वात् । तत आट् । स च अनुदात्त । तत एकादेश उदात्तनोदात्त इत्यनेनोदात्तत्व भवति । तथापि तस्य त्रिपादीस्थत्वेनासिद्धत्वादायादेश उदात्तो न स्यात् । अत उक्तम्-एकादेशस्वरोन्तरङ्गमित्यादि । परतु एव वार्तिकसगतावपि वार्णादाङ्गपरिभाषया अत्र विरोधो भवति । अतस्तत्र सकोचमाह--अङ्गसबन्धिन्याङ्ग एवेति। आट आङ्गत्वेपि अङ्गसबन्धित्वाभावात् । ननु एवमपि रमे इत्यत्र रमा औ इत्यवस्थाया शीभाववृद्ध्यो प्राप्तयारन्तरङ्गत्वाद् वृद्धि स्यात् ततश्च रूपासिद्धिरिति चेन्न । औङ आप इति सूत्रसामर्थ्याद् वृद्धिं बाधित्वापि शीभाव एव भवति । नन्वेवमपि ज्ञाने इत्यत्र दोष । न च नपुसकाच्चेति सामर्थ्यान्न दोष इति वाच्यम् । तस्य जगती इत्यत्र चारितार्थ्यात् इति चेत्--मास्त्ववाय सकोच भाष्यकारैरुक्तोपि । लोकैरुक्त विचारणीयम् । अत्र समानकार्यत्वे एव उभयोरादेशत्व एव इत्यादय सकोचा इति केचन वदन्ति । एतन्मते सर्वत्रानित्यत्वेनैव व्यवस्था । अनित्यत्व कथ तदाह-च्छ्रोरिति सतुड्निर्देशाद। अन्यत्रफल गुच्छती स्यादीति । शम् ॥ ५५ ॥

---

१ C. अयथान्तरङ्गत्वापूर्व

नन्वेवं सेदुष इत्यादौ क्वसोरन्तरङ्गत्वादिटि ततः संप्रसारणे[1]ऽपीटः श्रवणापत्तिरिति चेत् । अत्र केचित् ।

अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

न[2] कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः । भावि-

नन्वेवं सेदुष इत्यादौ इति । षद्लृ विशरण० इत्यस्माल्लिट् प्रत्ययः । तस्य भाषायां सदवसेत्यनेन क्वसुः । ततो द्वित्वे अभ्याससंज्ञायां हलादिशेषे च अत एकहल्० इत्यनेन एत्वाभ्यासलोपयोः सेद् वस् इत्यत्र आर्धधातुक० इत्यनेन इडागमः प्राप्तः । न च एकाच उपदेश इति निषेधः इति वाच्यम् । तथा सत्यपि कृसृभृ० इति नियमेन 'वस्वेकाजाद्०' इति नियमेन च प्राप्तेः । एवं इडागमे पश्चात् प्रातिपदिकसंज्ञायां वसोः संप्रसारणम् इत्यनेन संप्रसारणे 'सेद् इ उस्' इत्यवस्थायामपि इटः श्रवणं स्यादिति दोषः । अत आह—अकृतव्यूहा इति । नन्विदमवतरणं प्राचीनरीत्या उत नवीनरीत्या । तर्हि द्वयोरपि मते नेदं संभवति । यथा प्राचीनमतेऽत्र सेद् इ उस् इत्यवस्थायां यण् कर्तव्यः । तत्रान्तरङ्गपरिभाषया संप्रसारणस्यासिद्धत्वात्स न स्यात् । परंतु नाजानन्तर्य इति परिभाषया संप्रसारणस्यासिद्धत्वाभावाद् यण् भवति । ततो वलि लोपः क्रियते । असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषया संप्रसारणस्यासिद्धत्वेन वलूपरकत्वात् । एवं च 'सेदुषः' इति रूपं सिध्यति । ननु ज्वरत्वर० इत्यत्र श्विविग्रहणाज् ज्ञापकाद्वले लोपेरिति निर्देशाच्च वलिलोपे अन्तरङ्गपरिभाषा न प्रवर्तते इत्युक्तम् । एवं सति अत्र कथं परिभाषाप्रवृत्तिः इति चेल्लोपाभावेपि इटः श्रवणापत्तिर्नैवेत्यवतरणं न संगच्छते ॥ तथा नवीनमते नैव संगच्छते । तथा हि । सेद् इ उस् इत्यत्रान्तरङ्गत्वाद् यण् दृष्ट्वा संप्रसारणस्यासिद्धत्वाद्यण् न स्यात् । तन्मते 'नाजानन्तर्ये इति निषेधात्' इति चेन्न । अन्तरङ्गपरिभाषाया अनित्यत्वादप्राप्त्या यण् भवति । ततश्च असिद्धपरिभाषया संप्रसारणस्यासिद्धत्वाद्वलि लोपे सेदुषः इति सिध्यति । नन्वनित्यत्वं सर्वत्र दोषपरिहारायैव गृह्यते । तथा चात्र कथं दोषवत्त्वमिति चेत् सेदुषः इति रूपसिद्ध्यर्थमेवात्र ग्रहणमिति न दोषः । एवं सेदुषः इति रूपं सिध्यति । तथा च नैव दोष इति अवतरणं न संगच्छते इति चेदुच्यते—एकस्मिँल्लक्ष्ये एकस्या एव परिभाषायाः प्रवृत्तिनिवृत्ती क्रियेते इति युक्तिविरुद्धमेतत् । अतोऽत्र यदि प्रवृत्तिरिष्टा तर्हि सर्वत्र प्रवृत्तिरस्तु । निवृत्तिश्चेत्सैवास्तु । तथा च प्रथमतः प्रवृत्ति-

1 B. om. अपि.

2 C. न कृत ऊहो विशिष्टनिश्चयः. G. न कृतः व्यूहो विशिष्टं निश्चयः.

निमित्तविनाश इत्यध्याहार. बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सभाविते ऽन्तरङ्ग नेति यावत् ॥ अत्र च ज्ञापक समर्थाना प्रथमात् ( ४. १. ८२ )

श्वेयणेव न स्यात् इति इट' श्रवणापत्तिरित्यवतरण युज्यते । प्रथमतोऽनित्यत्वाज्जाजानन्तर्य इति निषेधाद्वा अप्रवृत्तिरिति चेद् यण् भवेत् इट श्रवणापत्ति इति न संगच्छेत । अतस्तत्र आदेशद्वारा इट श्रवणापत्तिरिति योज्यम् । एव च कथचिदवतरणं युज्यते । ननु किमत्र प्रमाणमिति चेद् ज्वरत्वर० इत्यत्र श्रिवि ग्रहणमेव । तत्रापि च्छ्वोरित्यूठि कृते यणि कर्तव्ये परिभाषाऽग्रहेण वलिलोपे कर्तव्ये परिभाषाग्रहेण च सिद्धि । अतस्तत्सामर्थ्यादिदमुच्यते—एकत्र लक्ष्ये यदि प्रवृत्तिस्तर्हि प्रवृत्तिरेव । निवृत्तिश्चेन्निवृत्तिरेव । न तु द्वे अपि । एवं च सेदुष इति रूप न सिध्यति इति दृष्ट्वा केचिद् दीक्षितादय. प्राचीना आहु । अत्र केचित्पदेन स्वस्यासमति. सूच्यते ।

बहिरङ्गेणान्तरङ्गस्येति । अन्तरङ्गशास्त्रीयनिमित्तविनाशकबहिरङ्गशास्त्रप्रवृत्तिसंभावनायामन्तरङ्ग न प्रवर्तते इति यावत् । परिभाषाया प्रमाणमाह-अत्र च ज्ञापकमित्यादिना । समर्थाना प्रथमाद्वेत्यत्र समर्थग्रहणं कृतसधिकार्यत्वमित्यर्थकम् । कुत एतादृशोर्थ इति चेत्समर्थानामिति पदादेव । तथाहि । समर्थ पदविधि इत्यस्मादेव सूत्राद् 'अन्वययोग्य' इत्यर्थकस्य समर्थग्रहणस्यानुवृत्त्यैव सिद्धे इद समर्थग्रहण व्यर्थं स्यादतोत्र पाणिनेरेतादृशोऽभिप्रायो वक्तव्य । यथा लोके अय मनुष्य इद कार्यं कर्तुं समर्थ इत्यर्थ इत्युक्ते समर्थपदस्य शक्त इत्यर्थस्तथात्रापि समर्थशब्द. शक्तपर्यायः । तत्र 'पदमर्थप्रदानायैव शक्त तस्मात्प्रत्यय कर्तव्य ' इत्यर्थो यथा स्यादित्येतदर्थं समर्थानामिति पदग्रहणम् । शब्दार्थप्रतिपादनशक्तत्व तु कृतसधिकार्यस्यैव । यत सामान्यजनाना सिद्धपदादेवार्थबोधा भवति न तु अकृतसंधे' । एव समर्थपदात् कृतसधिकार्यत्व इत्यर्थलाभ । तेन सौत्थिति इत्यत्र सवर्णदीर्घे कृते एव इञ्प्रवृत्त्या 'सौत्थितिः' इति रूप सिध्यति । नन्वेवमपि 'समर्थाना' इति पद व्यर्थम् । तथाहि । सु उत्थित इति समासे सहिताया नित्यत्वात् प्रथमत सवर्णदीर्घ प्राप्त । पश्चादपत्यार्थस्य विवक्षाया इञ् प्रत्यय प्राप्नोति । एव च अन्तरङ्गत्वात्सवर्णदीर्घे कृते एव प्रत्ययः स्यादिति सौत्थितिरित्यस्य सिद्धि' स्यादेवेति समर्थानाग्रहण व्यर्थं ज्ञापयति 'अकृतव्यूहा ०' इति । यदि चेदानीं समर्थानाग्रहण न स्यात्तर्हि सवर्णदीर्घस्य यो

१ C बहिरङ्गेणान्तरङ्गविनाशे
२ C.G.H P. अत्र च ज्ञापकं; B. om च.

इति सूत्रे समर्थानामिति । तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम् । अन्यथान्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तदर्थता स्पष्टैव । तत्र हि भावि-[1]

---

द्वौ उकारौ निमित्तभूतौ तयोर्वृद्ध्या विनाशसत्त्वेन अनया प्रथमतः सवर्णदीर्घाभावात् 'सावुत्थितिः' इति स्यात् । नन्वत्र निमित्तविनाशोऽस्ति न वा इति प्रश्ने अस्यास्तत्राप्रवृत्त्या यथा इको यणचि इत्यत्र निमित्तदर्शनकाले अस्याः प्रवृत्तिस्तथैव निमित्तविनाशो भवति न वा इति द्रष्टव्यम् । स विनाशस्त्रिधा–साक्षात्, परंपरया, संभावनया च । तत्र साक्षान्निमित्तविनाशस्योदाहरणं सेदुषः । परंपरया निमित्तविनाशस्य तदेवोदाहरणं सौत्थितिरेव । तथाहि । अत्र निमित्तभूतौ उकारौ तयोर्विनाशं वृद्धिः करोति इति निमित्तविनाशो वक्तव्यः । परन्तु तन्न संभवति । उकारयोः सवर्णदीर्घेण नाशितत्वात् । एवं च कथं निमित्तविनाशः इति चेत् परंपरया स्वविनाशकस्य यो विनाशकः स स्वविनाशकः इति वृद्धेर्विनाशकत्वं निमित्तस्य । ननु वृद्ध्या सवर्णदीर्घविनाशेऽपि तस्या उकारयोश्च संबन्ध एव नास्तीति चेत् प्रधानमल्लनिबर्हणन्यायेन संबन्धात् । एवं च परंपरयात्र निमित्तविनाशसत्त्वेन अकृतव्यूहपरिभाषाप्रवृत्त्या पूर्वं सवर्णदीर्घो न स्यात् । अतः समर्थग्रहणमावश्यकम् । न चैवं समर्थग्रहणे कृतेऽपि संधिकार्याणि कर्तव्यान्येवेत्यर्थाभावात् सवर्णदीर्घात्प्रागपि प्रत्ययाः स्युः । कृतसंधिकार्यात् प्रत्यया भवन्ति इत्यर्थेऽपि यदि संभवन्ति तर्हि कर्तव्याः । अत्र तु असिद्धपरिभाषया तस्य निषिद्धत्वात् अकृतसंधिकार्यादपि प्रत्ययः स्यादेवेति चेन्न । समर्थग्रहणसामर्थ्यात् 'संधिकार्याणि कर्तव्यान्येव' इत्याधिकस्यार्थस्य लाभात् । एवं च सौत्थितिरिति रूपसिद्ध्यर्थं समर्थग्रहणमावश्यकमिति स्वारस्यावारितार्थम् । अन्यत्रफलं सेदुषः । अत्र प्रथमतः प्राप्तोऽपि इट् न क्रियते । कृतोऽपि वा निवर्तते । एवं चानया तस्य सिद्धिर्भवति इति ज्ञापकमुपन्यस्यते–तद्धि सूत्थितादिभ्य इत्यादिना । ननु समर्थग्रहणे कृतेऽपि अकृतव्यूहा ० इति परिभाषा कुतो नागच्छति इति चेत्–'यन्निमित्तं दृष्ट्वा किंचित् कार्यं प्राप्नोति तन्निमित्तं कदाचिदपि प्रवर्तितुमावश्यकम्' इति नियमात् । अत एव 'अस्य यङ्लुग्नास्ति लुकापहारे विषयत्वाभावेन वीभावस्याप्रवृत्तेः' इति दीक्षितोक्तिः संगच्छते । तथाहि । अज् धातोः आर्धधातुकविवक्षायां 'वी' इति आदेशे कृते यङ् प्रत्ययः कर्तव्यः । तस्य यङो लुक् भवति न वेति प्रश्नः । तर्हि न भवति । कुत इति चेद्विषयत्वाभावेन वीभावस्या-

---

1 B.G.H.P. तत्र हि भावि°; B om. हि

न्यादिवृद्धया सवर्णाच्त्वविनाश. स्पष्ट एव ॥ न चात्रैकादेशप्रवृत्तिसमये वृद्धय-प्राप्त्यैकादेशे कृत आदेशे वृद्धे प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम।

---

प्रवृत्त । आर्धधातुकस्य विषये हि ब्यादेश उक्त । लुक् लोप इत्यादीनामर्थस्तु शब्दानित्यत्वादनुपस्थितिरित्येव न लुक्त्वात्पश्चादपहार । एव च यङ्लुग्नाम यङो-नुपस्थितिरित्येव । एव चार्धधातुकविषयत्वाभावेन वीभाव एत्र न स्यात् । यन्नि-मित्त आर्धधातुकविषय दृष्ट्वा कार्य वीभाव. प्रवृत्त, तदार्धधातुक लक्ष्ये प्राप्तुमा-वश्यक तस्य प्रवृत्त्या विषयत्वाभावाद् वीभावो न स्यात् इति कौमुदी सगच्छते। तथा चात्र अध्यजीगपत् इति रूप सिध्यति । तथा हि—अधिपूर्वादिण्धातो-र्णिच् । धातुत्वे लुङ तिप् इतश्च च्लिचङादेशेषु ‘ अधि इ अ त् ’ इत्यत्र णौ च संश्चङो इत्यनेन गाङादेशः प्राप्त । द्वित्व च प्राप्तम् । किं कर्तव्यमित्याकाङ्-क्षाया ‘ णिच्यच आदेशो न ’ इत्यनेन गाङादेशो निषिध्यते । ततोऽध्यजीगपत् इति न सिध्येत् । परतु ‘ यत्र अभ्यासोत्तरखण्डस्य० ’ इत्यादिकौमुद्युक्तसकोचात् ‘ अभ्यासोत्तरखण्डे आद्योच् वर्तते न वा ’ इति द्रष्टव्यम् । यथा चात्र पूर्वं गाङा-देशे सति उत्तरखण्डे अकारो लभ्यत इति सकोचाद् गाङादेशनिषेधाण्णिचो द्वित्वे गाङादेशो न स्यात् । अत अत्र यन्निमित्त उत्तरखण्डस्याद्योच् त दृष्ट्वा यत्कार्यं द्वित्वनिषेधरूप प्राप्नोति तन्निमित्त लक्ष्ये आवश्यकमित्युक्तत्वात् अत्र पूर्वं निषेधादुत्तरखण्डस्याद्योच न भवति इति ‘ णिच्यच० ’ इत्यस्याप्रवृत्त्या पूर्वं गाङादेशे ‘अध्यजीगपत्’ इति रूप सिध्यति । तथा ‘ अघृक्षन्त ’ इत्यत्र ‘ गृहू ’ ग्रहणे इत्यस्माल्लुङप्रत्यये झ्यादेशे च्लौ स्वरतिसूतीत्यनेनानिट्कत्वाच शल इगु-पधादित्यनेन क्सि–आदेश । तत झोन्त इत्यन्तादेश प्राप्त । परतु तस्मिन् कृते सति ‘ क्सस्याचि ’ इत्यकारलोप स्यात् । ततोऽनकारान्तत्वात् ‘ आत्मनेपदे-ष्वनत ’ इति ‘ अत ’–आदेश. प्राप्नोति इति । उपसजनिष्यमाणनिमित्त० इति पूर्वमन्तादेशाभावे सस्याकारलोप एव न स्यात् । अत अत आदेशो न प्राप्नोति इति प्रथमतोन्तादेशे ‘ अघृक्षन्त ’ इति रूप सिध्यति । तथात्रापि अकृतव्यूहपरि-भाषाया. यन्निमित्त ङकाररूप यस्य विनाश दृष्ट्वा प्रवृत्तिरागता–तन्निमित्तवि-नाश लक्ष्ये आवश्यक । परतु स नायाति । ‘ सु उत्थित ’ इत्यत्र सवर्णदीर्घाभावे प्रत्ययस्याप्राप्तिरेव । समर्थानामित्युक्तत्वात् । एव चात्र निमित्ताभावात् अकृत-व्यूहपरिभाषाया प्रवृत्तिरेव । समर्थग्रहणे कृते परिभाषा न प्रवर्तते इति समर्थ-ग्रहणमावश्यकम् । अन्यत्रफल सेदुष. । अत्रेडागमो न प्रवर्तने इति ॥

---

१ B चात्रैकादेशे प्रवृत्ति°

२ C om आदेशे

३ B G P H तन्निमित्त°; C निमित्त°

तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः[1] ॥ न च सौत्थितौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम् । समर्थग्रहणेनैतद्विषये तस्या[2] अप्रवृत्तेरपि ज्ञापनात् ॥ यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति तन्न । असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्व[3]जातबहिरङ्गस्य चान्त-

---

न च सौत्थितौ बहिरङ्गतयेति । 'सु उत्थित' इत्यवस्थायां हि अकृतव्यूहपरिभाषा अन्तरङ्गस्य सवर्णदीर्घस्य निमित्तविनाशं दृष्ट्वा सवर्णदीर्घं निषेधति । परंतु अत्र काश्चिच्छङ्कते । असिद्धपरिभाषया अकृतव्यूहपरिभाषां प्रति वृद्धेरसिद्धत्वात्कथमकृतव्यूहपरिभाषायाः वृद्धिकृतनिमित्तविनाशो दृश्यते । तथा च निमित्तविनाशरूपनिमित्तासत्त्वेन अकृतव्यूहपरिभाषा नैवात्र प्रवर्तते । अन्तरङ्गबहिरङ्गभावः कथमिति चेदुच्यते । लिङ्गस्य यानि निमित्तानि तान्येव परिभाषाया अपि इति प्रागुक्तमेव । अत्र तु बहिरङ्गक्रियमाणनिमित्तविनाशं दृष्ट्वा अन्तरङ्गं निरुध्य ततः बहिरङ्गकृतनिमित्तविनाशं अन्तरङ्गशास्त्राय कथयित्वा विरमति इति तद्व्यापारादन्तरङ्गशास्त्रमेव अस्या लिङ्गम् । तच्चात्र सवर्णदीर्घः । एवं च परिभाषाया अपि द्वावुकारावेव निमित्तम् । वृद्धेस्तु उत्तरः प्रत्ययः । एवं च अन्तरङ्गायां अकृतव्यूहपरिभाषायां प्रवर्तयितव्यायां बहिरङ्गाया वृद्धेरसिद्धत्वमिति मुख्यत्वात् अकृतव्यूहपरिभाषादृष्ट्या वृद्धेरसिद्धत्वमेव । तथा च अकृतव्यूहपरिभाषा नैव प्रवर्तते ॥ न च सौत्थितिरित्यस्यार्थः 'सौत्थितौ लक्ष्ये अकृतव्यूहपरिभाषादृष्ट्या वृद्धेर्बहिरङ्गतया असिद्धत्वात्तदन्तरङ्गनिमित्तविनाशो न इति न वाच्यम्' इति । समर्थग्रहणेन 'अकृतपरिभाषाविषये अन्तरङ्गपरिभाषा न प्रवर्तते' इति ज्ञापकात् । अत्र केचिदेवं वदन्ति—समर्थग्रहणेन अन्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यते इति । ततश्च अन्तरङ्गपरिभाषाऽभावात् दृढे सवर्णदीर्घाभावेऽपि प्रत्ययः स्यात् । अतः समर्थग्रहणमावश्यकमिति वक्तव्यम् । तन्न संभवति । सौत्थितौ अन्तरङ्गपरिभाषाया असंबन्धात् । कुतोऽसंबन्ध इति चेत्—असिद्धपरिभाषया समकालप्राप्तस्य पूर्वजातबहिरङ्गस्य चासिद्धत्वं बोध्यते । अत्र तु तादृशं नास्त्येव प्रत्युत अन्तरङ्गं जातं, पश्चात्प्राप्तं च बहिरङ्गम् । अतोऽत्र अन्तरङ्गपरिभाषाया असंबन्धः । ननु असंबन्ध एव येनाह कैयटः 'अन्तरङ्गत्वात् सवर्णदीर्घे रूपासिद्धिः' इति चेदत्र सवर्णदीर्घस्य यदन्तरङ्गत्वं तत् सवर्णदीर्घापेक्षयैव तत्रान्तरङ्गपरिभाषा न प्रवर्तते लौकिकत्वात् इत्युच्यते । एवं चान्तरङ्गपरिभाषा-

---

१ C.G. °ङ्गत्वान्न निमित्त°.

२ B. तस्याऽप्रवृ°.

३ B.C.G. पूर्वं जात°.

रङ्गे कर्तव्येऽसिद्धत्वं बोध्यते न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते मानाभावात्फलाभावाच्चैव च[1] सुस्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासम्भवात् ॥ अन्तरङ्गानपि विधीनित्यादेरप्यस्यामेवान्तर्भावः ॥ एतत्प्रवृत्तौ च निमित्तविनाशसंभावनापि निमित्तम् । अत एव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न । अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः । अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति संभावना ॥ अल्लोपोऽन. ( ६. ४. १३४ ) इति सूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम् । तद्धयान इत्यादौ लोपवारणाय । अन्यथा दीर्घाभावे लोपसंभावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ॥

---

असम्बन्धात् तद्विकल्पज्ञापनेऽपि न कोपि लाभः । ननु अन्तरङ्गपरिभाषायाः जातेऽन्तरङ्गे प्राप्यमानं बहिरङ्गमसिद्धमिति कुतोऽर्थस्तदाह— मानाभावात् फलाभावाच्चेति । ननु 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति परिभाषा अस्यामेवान्तर्भूता इति यदुच्यते तर्हि गोमत् सु प्रिय् सु इत्यत्र अन्तरङ्गशास्त्रीयनिमित्तस्य सुपः बहिरङ्गेण लुका साक्षात् परम्परया वा विनाशाभावेन कथं अकृतव्यूहपरिभाषा प्रवर्तेत । तथा च रूपसिद्धिर्न स्यात् इत्याशयेनाह— एतत्प्रवृत्तौ चेति । अत्र प्रमाणं तु समर्थानांग्रहणमेव । यतः पूर्वोक्तज्ञापनसत्त्वेऽपि अस्याः सेदुषः इति साक्षान्निमित्तविनाशस्थले चारितार्थ्यसंभवेन अत्र तस्याः अप्रवृत्तिरेवेति समर्थग्रहणं व्यर्थं सत् संभावनया निमित्तविनाशेऽपि इयं परिभाषा प्रवर्तत इति ज्ञापयति । अत्रापि परम्पराग्रहणम् । इयं च 'अल्लोपो न' इति सूत्रस्थतपरकरणादनित्या । तथा हि आन इत्यादौ 'अन्' धातोः क्विपि 'अनुनासिक०' इत्यनेन दीर्घे कर्तव्य अकृतव्यूहपरिभाषया अन्तरङ्गशास्त्रं अनुनासिकेति दीर्घं तदीयनिमित्तविनाशकबहिरङ्गशास्त्रस्य 'अल्लोपोऽन' इत्यस्य प्रवृत्तिसत्त्वेन अन्तरङ्गं न स्यात् । एवं च दीर्घाभावात् तद्व्यावृत्त्यर्थं क्रियमाणं तपरकरणं सत् व्यर्थं एतस्याः परिभाषाया अनित्यतां ज्ञापयति । ततः दीर्घे कृतेऽपि लोपः स्यात्स मा भूदित्येतदर्थं तपरकरणमावश्यकम् । अन्यत्रफलं चाखायित्वा । अत्र हि खन् धातोर्यङि द्वित्वे च ये विभाषा इत्यनेनात्वं प्राप्तम् । यस्य हल इत्यनेन पश्चाल्लोपः प्राप्स्यति । तत्रानया परिभाषया आत्वं निषिध्येत ततोऽनिष्टरूपं स्यात् । परं त्वनित्यत्वादत्राप्राप्त्या प्रथमतः आत्वे 'चाखायिता' इति रूपं सिध्यति । अस्ति चात्र संभावना—यदि आत्वं न स्यात्तर्हि लोपः स्यादिति ॥

---

१ P says that some om. च.

२ C. °संभावनयैव तत्परि°.

समर्थानामिति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यतेऽकृतव्यूहाः पाणिनीया इति तेन पपुष इत्यादावन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन्न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति । निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत् । सूत्थितादिञि वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्मा भूदिति समर्थानामिति ॥ लोकन्यायसिद्धश्चायमर्थः । तथा हि लोके निमित्तं द्विविधं दृष्टम् । कार्यस्थितौ नियामकं तदनियामकं च । आद्यं यथा न्यायनयेऽपेक्षाबुद्धिस्तन्नाशे तद्द्वित्वनाशाभ्युपगमात् । वेदान्तनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव । द्वितीयं

---

एवं दीक्षितानां मतमुक्त्वा कैयटमतमाह—समर्थानामिति सूत्रे कैयटस्तु इत्यादिना । वैयर्थ्यं तु पूर्ववदेव । ततश्च ज्ञापनमपि तदेव । परंतु अर्थो भिन्नः । स च यथा—अन्तरङ्गे कृते ततः बहिरङ्गेण अन्तरङ्गशास्त्रीयनिमित्तकविनाशे प्राप्ते जातमन्तरङ्गं निवर्तते इति । कुतोयमर्थस्तदाह—अन्तरङ्गत्वात्पूर्वमिति । ननु अन्तरङ्गनिमित्तविनाशे जाते इत्यर्थे को दोष इति चेत्—स्वस्मिश्चारितार्थ्यं न स्यात् । तथा हि—अत्र प्रथमतः सवर्णदीर्घे 'सूत्थित'– शब्दादिञ्प्रत्यये वृद्धौ कृतायां निमित्तविनाशसत्त्वेपि सवर्णदीर्घस्य निवृत्तिरशक्या । तस्यासत्त्वात् । ततश्च सौत्थितिः सिध्यत्येवेति समर्थग्रहणस्य चारितार्थ्यं न स्यात् । अतः निमित्तविनाशे प्राप्ते इत्यर्थ एवोचितः । वृद्धिप्राप्तावेव सवर्णदीर्घनिवृत्तौ सावुत्थितिः स्यात् । अतः समर्थग्रहणे कृतेपि अकृतव्यूहपरिभाषायाः कुतोऽप्राप्तिरिति प्रश्ने 'यन्निमित्तं दृष्ट्वा कार्यं प्रवृत्तं तन्निमित्तं कदाचिदपि लक्ष्ये प्रवर्तितुमावश्यकम्' इति पूर्वोक्तमेवोत्तरं देयम् । तथा अन्तरङ्गे कृते० इति योऽर्थः स तु लोकन्यायसिद्ध एव । तथाहि—लोके द्विविधं निमित्तमिति । कार्यस्थितौ नियामकं नाम यस्मिन् सत्येव कार्यस्थितिः, यन्नाशे च कार्यनाशः एतादृशम् । तथा तदनियामकं नाम यस्यासत्त्वेपि विनाशेपि कार्यस्थितिर्भवति एतादृशम् । एवं द्विविधं निमित्तं यथा न्यायशास्त्रे 'अयमेकः, अयमेकः' इति याऽपेक्षाबुद्धिः सा द्वित्वादेः कारणम् । तस्याश्च अभावे द्वित्वमपि नश्यतीति एतत् कार्यस्थितौ नियामकं कारणमुक्तं दृश्यते गुणनिरूपणे मुक्तावल्याम् । तथा वेदान्तशास्त्रे प्रसिद्धं

---

१ B. °स्तर्कनिमित्तकारणनाशे.

२ B. नैमित्तकस्या°.

३ B, सूत्थितादिञि अदिवृद्धौ.

४ C.G.H. कार्यस्य स्थितौ.

यथा दण्डादि तन्नाशेऽपि घटनाशादर्शनात् । शा[1]स्त्रे लक्ष्यानुरोधाद् व्यवस्था ॥ मा[2]विनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि संप्रतिपन्नो दृष्टान्तः । समर्थानामित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसंभवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशयं इति बोध्य[3]म् ॥

परे तु सेदुष इत्यादौ पदा[4]वधिके ऽन्वाख्याने सेद् वस् अस् इति स्थित इट्संप्रसारणयोः प्राप्त[5]योः प्रतिपदविधित्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः

---

प्रारब्धकर्म तच्च विक्षेपस्य संसारस्थितेर्नियामकं यतस्तस्योपभोगेन विनाशे तज्जन्यं सुखं नश्यति । एवं तदपि कार्यस्थितौ नियामकम् । द्वितीयं दण्डादि । एवं द्विविधा अपि दृष्टान्ताः । अतः, शास्त्रे लक्ष्यानुरोधाद् व्यवस्थेति । व्यवस्था नाम कदाचित्कारणनाशे कार्यनाशः कदाचित्कारणनाशेपि कार्यस्थितिः । एवं च ' निमित्तापाये नैमित्तिकस्याप्यपायो 'ऽस्ति । एवं कैयटमतमुपन्यस्य दीक्षितरीत्यपेक्षया कैयटरीतिरेव युक्तेत्याह—माविनिमित्तविनाशे इति । संप्रतिपन्नः, युक्तः लोकसंमत इत्यर्थः । ननु दीक्षितैरेव मनोरमायामुक्तं—प्रक्षालनाद्धि इति । तथा च दृष्टान्तो नेति कथमिति चेदुच्यते । इयं परिभाषा कार्यकारणसंबन्धो यत्र तत्र पूर्वोक्तव्यवस्थापिका । प्रक्षालनादिति तु तादृशकार्यकारणभावलाघवप्रदर्शनार्थमुपन्यस्तं तत्रैव संभवति । यद्यपि दीक्षितमते लाघवं तथापि लोकविरुद्धं भवति । न हि लोके एकोपि एतादृशो व्यवहारो दृश्यते । अतस्तन्मते लाघवसत्त्वेपि न तादृशं ज्ञापयितुं युक्तम् । तथा लोकसिद्धार्थज्ञापने कृते चारितार्थ्ये संभवति सति तद्विरुद्धं ज्ञापनमयुक्तं समर्थानामिति ।

एवं कैयटमतमेव श्रेयः इत्युक्त्वा स्वमतमाह—परे तु इत्यादि । पदसमाप्तिपर्यन्तं प्रकृतिप्रत्ययानवस्थाप्य कार्याणि कर्तव्यानि इति पदसंस्कारपक्षे इट्संप्रसारणयोर्युगपत्प्राप्तौ प्रथमतः प्रतिपदविधित्वाद् वसोः संप्रसारणमिति साक्षादुच्चार्य कार्यविधानम् । अन्तरङ्गत्वात्पूर्वं संप्रसारणे इटोऽप्राप्त्या इति कैयटोक्तअनुपूर्वं यत् कैयटमतमित्युक्तं तत्र परिभाषा गृहीता । अत्र न दृश्यते । तथा च

---

१ C.G. शास्त्रेषु लक्ष्या०.

२ B. भाविनाशे. G. भाविनि निमित्त०

३ P. इति बोध्यम्; B.C.G.H. om. बोध्यम्; the latter reading is mentioned by P.

४ C. ०वधिकान्वाख्याने.

५ C.G.H. ०योः प्राप्तौ प्रतिपदविधानाच्च पूर्वं.

प्राप्तिरेव नेति तत्सिद्धिरिति समर्थानामिति सूत्रे कैयटे ऽसिद्धवत्सूत्रे च कैयटे स्पष्टमेतत्। यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं तथापि पूर्वप्रवृत्तौ सावकाशत्वे ऽपि नियामकं भवत्येवेपि तदाशयः। निरूपितं चैतद्दृशः शब्देन्दुशेखरे॥ समर्थानामिति सूत्रस्थसमर्थग्रहणं तु विशुण इत्यादावकृतसंधेः प्रत्ययदर्शनेन सर्वत्र तथाभ्रमवारणाय न्यायसिद्धार्थानुवाद एव॥ ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये। तत्र हि वैक्षमाणिरित्यन्तरङ्गपरिभाषोदाहरणमुक्तम्। किंच विभज्यान्वाख्याने सुँ उत्थित अस् इ इति स्थिते

कैयटस्य तदेव मतमिति कुत इति चेत्–प्रक्रमानुरोधेन पूर्वोक्तकैयट एव सिद्धान्तो न त्वयम्। एवं स्वमतेन सेदुष इत्यस्य सिद्धिं दर्शयित्वा तत्र प्रतिपदविधित्वात्पूर्वं संप्रसारणे इति यदुक्तं तत्र विशेषमाह—यद्यपीति। प्रतिपदविधित्वस्य बाधकत्वं तु तस्यानवकाशत्वे एवेति सिद्धान्तो वर्तते। तथा चात्र संप्रसारणस्यानवकाशत्वं नास्ति। विदुषः इत्यादौ चारितार्थ्यात्। तत्र हि विदेः शतुर्वसुः इति शतुरेव वसुः उक्तः इति इटोऽप्राप्तेः। एवं चारितार्थ्याद् बाधकत्वाभावेन पूर्वं प्रवृत्तेर्नियमो न स्यात्। ततश्च परत्वादेव तत्र इडेव स्यादित्याशयेनाह—तथापि पूर्वेति। प्रतिपदविधेः सावकाशत्वेपि पूर्वप्रवृत्तेर्नियामकत्वमस्त्येव शीघ्रोपस्थितत्वात्। एवं चात्र प्रथमतः संप्रसारणे रूपसिद्धिः। ननु तर्हि समर्थग्रहणं किमर्थम्। प्रथमतः सवर्णदीर्घे सौत्थितिः इत्यस्य सिद्धेः। तत्राह—भ्रमवारणायेति। तत्र अकृतसन्धेरिति वचनात्तादृशादसमर्थात् प्रत्ययेपि सर्वत्र तादृशं कथं स्यात् एवं स भ्रम एव तथापि तद्वारणार्थं समर्थग्रहणम्। वैक्षमाणिरिति। वि–ईक्षमाण इत्यत्र पूर्वं सवर्णदीर्घे वृद्धौ वैक्षमाणिरिति सिध्यत्येव। यदि अकृतव्यूहपरिभाषा स्यात्तर्हि सूत्थितवदत्रापि सवर्णदीर्घो निषिध्येत। एवं सति कथमेतदन्तरङ्गपरिभाषोदाहरणं तत्सूचयन्ति भाष्यकाराः अकृतपरिभाषा नेति। तथा अकृतव्यूहेति परिभाषाया अभावेपि समर्थग्रहणस्य चारितार्थ्यं संभवत्येवेति कैयट एवोक्तम्। तत्र हि पदसंस्कारपक्षे सु उत्थित अस् इ इत्यवस्था। अत्र अस् इति षष्ठ्येक-

१ B G.H. °रिति स्पष्टं समर्था°.

२ B. °त्सूत्रे कैयटे च स्पष्टमेव तत्. G. om. च.

३ B. तत्र वैक्षमाणि°.

४ C. °त्यन्तरङ्गोदाहरण°.

५ C. सु उत्थित अस् इति.

वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव सूत्रे कैयटे स्पष्टम्। अत एवासिद्धवत्सूत्रे वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यं पपुष इत्यादौ वसोः सम्प्रसारणे कृत आतो लोपो यथा स्यादिति भाष्य उक्तम्। पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं सम्प्रसारणं इटो ऽप्राप्तावुसुनिमित्तक एवातो लोप इति तदसङ्गतिः॥ अत एव चौ प्रत्यङ्गस्य प्रतिषेध इति वचनं वार्तिक

---

वचनम्। तस्यापत्यमिति तस्येत्यर्थे तत्। सवर्णदीर्घवृद्ध्योः प्राप्तयोरन्तरङ्गत्वात्प्राप्तमपि सवर्णदीर्घं बाधित्वा वार्णादाङ्गति परिभाषया वृद्धिं प्राप्नोति। तां बाधितु समर्थग्रहणं चरितार्थम्। एवं च चारितार्थ्यान्न ज्ञापकता। एवं च परिभाषा नेति सुनिश्चितमेव। ननु सेदुष सौस्थितिरित्यादौ पदसंस्कारपक्षेण सिद्धिरुक्ता। परंतु यदि क्रमेणान्वाख्यानपक्षो गृह्यते तदा न सिध्येदिति चेन्न। एतादृशस्थले पदसंस्कारपक्ष एवाश्रयणीयः। तत्र भाष्यमपि प्रमाणमित्याह—अत एव असिद्धवत्सूत्रे इति। आभीयासिद्धस्य वसोः सम्प्रसारणं अज्विधौ अज्विधिनिमित्तके कार्ये कर्तव्ये सिद्धं वक्तव्यम्। तत्फलं तु पपुष इत्यत्रातो लोपो भवति इति भाष्ये उक्तं तदभिप्रायमाह—पूर्वोक्तकैयटेति। इट्सम्प्रसारणयोर्युगपत्प्राप्तौ प्रतिपदविधित्वात् प्रथमतः सम्प्रसारणसाधककैयटरीत्येत्यर्थः। ननु दीक्षितकैयटादीनां मतेपि इदं वार्तिकं सुयोजमेव। तथाहि—दीक्षितमते पपा वस् इत्यत्र प्रथमत एव इण्निषेधात्सम्प्रसारणे तस्यासिद्धत्वात् आतो लोपो न स्यात् अतो वार्तिकमावश्यकम्। तथा कैयटमतेपि पपा वस् इत्यत्रेडागमे कृते सम्प्रसारणात्पूर्वमेव इण्निमित्तके आतो लोपे ततः सम्प्रसारणप्राप्तौ इण्निवृत्तिः तथा निमित्तापाये इति लोपस्यापि निवृत्तिः। एवं च सम्प्रसारणे कृते लोपः कर्तव्यः परंतु सम्प्रसारणस्यासिद्धत्वात्स न स्यादतो वार्तिकमावश्यकम्। एवं च दीक्षितकैयटनवीनानां सर्वेषामेव मते वार्तिकं सुयोजम्। एवं सति कथं पदसंस्कारपक्ष एवैतद्युज्यते इति चेत्—एतन्मते परिभाषा नास्ति इति पूर्वोक्तप्रमाणैः सिद्धमेव। एवं सति यदि पपुष इत्यादौ क्रमेणान्वाख्यानपक्षो गृह्यते तदा प्रथमत एवेडागमे आतो लोपः स्यादेव। एवं सति वसोः सम्प्रसारणे कृते आतो लोपो यथा स्यादिति यदुक्तं तत्र सङ्गच्छेतेति पपुष इत्यादौ पदसंस्कारपक्ष एवाश्रयणीयः इति बोधयति। तदाह अन्यथान्तरङ्गत्वादिति। अन्यथा पदसंस्कारपक्षाभावे। अत एव चौ इति। एतत्परिभाषाया अभावात्। तथा हि प्रतीच इत्यत्र नलोपादे पूर्वमेव यण् प्राप्नोति। तस्य चौ प्रति इत्यनेन प्रतिषेधः क्रियते। परंतु एतत्परिभाषासत्त्वे यणो

---

१ B प्राप्तवृद्धेर्वारणाय

२ B. om सूत्रे

कृतार्थ्यं भाष्यकृता च न प्रत्याख्यानम्। प्रत्यङ्गमन्तरङ्गम्। अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव ॥ अत एव च्छ्वोः ( ६. ४. १९ ) इति सूत्रे ऽवश्यमत्र तुगभावार्थो यत्नः कार्यो ऽन्तरङ्गत्वाद्धि तुक् प्राप्नोतीति भाष्य उक्तम्। एतत्सत्त्वे तु तुको ऽप्राप्त्या यत्नावश्यकत्वकथनमसंगतमिति स्पष्टमेव। न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयो ऽवश्यमत्रेत्यक्षरस्वारस्यभङ्गापत्तेः ॥ किंचानयैव प्रत्ययोत्तरपदयोश्च ( ७. २. ९८ ) अदो जग्धिर्ल्यप्ति किति ( २. ४. ३६ ) इत्यनयोश्चारितार्थ्येन तज्ज्ञापकत्वशाङ्कल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत ॥

किंचैषा भाष्ये न दृश्यते। तदुक्तमसिद्धवत्सूत्रे कैयटेन। निमित्तापाये नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृतानाश्रयणादिति ॥ पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसंबन्धे हरिः गच्छतीत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयण वेति दिक् ॥ ५६ ॥

---

निमित्तस्य अकारस्य विनाशो भविष्यतीति वार्तिकं व्यर्थमेव स्यात्। भाष्यकारैस्तु न प्रत्याख्यातमिति परिभाषा नास्त्येव। अत एव च्छ्वोरिति। परिभाषाया अभावादेव। विश्व इत्यादौ सतुक्कस्य शादेशार्थं 'च्छ्वोः' इत्यावश्यकमित्याद्युक्तं निमित्तापाये इत्यनया सिद्धेर्व्यर्थमेव स्यात्। एवं च अनेकैः प्रमाणैः इयं परिभाषा नेति सिद्धम्। परंतु यत्रानयैव सिद्धिः क्रियते तत्र का गतिरित्याह— पदसंस्कारपक्षे इति। एवं च पदसंस्कारपक्षेणैव सर्वत्रसिद्धिः। अन्यत्र तत्पक्षानाश्रयणं वा इति सिद्धम् इति दिक्। इति शम् ॥ ५६ ॥

इत्यन्तरङ्गप्रकरणं समाप्तम् ॥

---

१ B. तुकाभावार्थो.
२ B. न च तदनित्यत्वज्ञापनार्थमेतदिति ; C.G. न च तदनित्यत्वज्ञापनार्थमेव तदिति
३ B. किती अनयो°. A. G. H. °जग्धिर्ल्यप्तीत्यनयो°.
४ B. H. तुकं ल्यप्यान्तरङ्ग°.
५ A. C. G. H. कैयटे.
६ B. G. H. निमित्ताभावे नैमित्तिकस्याप्यभाव इति.
७ A. C. G. विसर्गादौ कृते.

## अन्तरङ्गादप्यपवादो बलीयान् ॥ ५७ ॥

तत्रापवादपदार्थमाह । येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति । प्राप्त इति भावे क्तः । येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यकप्राप्ति-रित्यर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात्[1]। एवं च विशेषशास्त्रोद्देश्य-विशेषधर्मावच्छिन्नवृत्तिसामान्यधर्मावच्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः ।

---

अन्तरङ्गादप्यपवादो बलीयानिति । पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीय इति परिभाषया पूर्वापेक्षया परस्य प्राबल्यं विप्रतिषेधे परं कार्यमिति शास्त्रानुरोधात् । पूर्वपरापेक्षया नित्यस्य प्राबल्ये लौकिकी युक्तिः । यथा लोके कश्चन सेवकः सेवां कर्तुं प्राप्तः अपरोऽपि प्राप्तः, तत्र एको नित्यः अपरे असति सति वा तस्य सत्त्वात् । अपरस्तु न तथा । तत्र को ग्राह्य इति स्वामिनो विचारे संप्राप्ते सति स एवं निश्चिनोति—यो नित्यः स एव संनिधापितव्यः । कुतः । तस्मिन्सत्यपि अस्य सत्त्वात् । तेनैव दृष्टान्तेन अस्मिन् शास्त्रे नित्यस्य प्राबल्यम् । इयं च अनि-त्यापेक्षया नित्यस्य प्राबल्ये युक्तिः । परापेक्षया नित्यस्य प्राबल्यविषये प्रमाणं किमिति चेदुच्यते-नित्यस्य शास्त्रस्य विषये परत्वस्य प्राप्तिरेव न । कुतः । समबल-त्वस्याभावात । अतस्तस्य प्राबल्यम् । अन्तरङ्गस्य प्राबल्ये युक्तिस्तु असिद्धपरि-भाषा । सर्वापेक्षया अपवादस्य प्राबल्ये प्रमाणं तु येन नाप्राप्ते इति न्यायः । निरवकाशो विधिरपवाद इति वा । एवमत्र अन्तरङ्गादप्यपवादो बलीयान् । तत्रापवादपदार्थमाहेति अवतरणम् । परिभाषा तु येन नाप्राप्तेति । तत्र प्राप्त इति भावे क्तः । अत्र कर्तृकर्मणोः कृतीति षष्ठी कुतो न भवति । न लोकेति निषेधात् । न च मनोरमोक्तेन 'भावे क्ते षष्ठी कल्प्या' इति वार्तिकेन षष्ठी स्यादिति वाच्यम् । तस्य वार्तिकस्य शेषे षष्ठीति सूत्रे भाष्ये प्रत्याख्यानात् । तथा च यदा शेषत्वस्य विवक्षा तदा भवत्येव षष्ठी । इदानीं तु नास्ति विवक्षा तेन 'न षष्ठीति' न दोषः । विशेषशास्त्रोद्देश्यस्येति । एवं हि तत्र विग्रहः । विशेषशास्त्रोद्देश्यं च तद्विशेष-धर्मावच्छिन्नं चेति कर्मधारयः । तस्मिन् वृत्तिर्यस्य तादृशो यः सामान्यधर्मः तेनावच्छिन्नमुद्देश्यं यस्य तस्य शास्त्रस्य विशेषशास्त्रेण बाधः इति । उदाहरणं तु अतो गुणे इति । तच्च सूत्रं सवर्णदीर्घस्यापवादः । तत्र विशेषधर्मावच्छिन्नं विशेष-शास्त्रोद्देश्यं किम् । गुणपरक-अपदान्तस्थित-अकारत्वम् । तद्वृत्ति सामान्य-धर्मावच्छिन्नोद्देश्यकं शास्त्रं सवर्णदीर्घः । स हि अग्घटक-अकत्वावच्छिन्नसामान्य-धर्ममुद्दिश्य प्राप्तः । तेन भवन्तीत्यत्र अतो गुणे इत्यनेन सवर्णदीर्घस्य बाधः क्रियते

---

१ A. B. °वश्यकं प्राप्ता°; C. G. H. °वश्यप्राप्ता°.

तदप्राप्तियोग्ये ऽचारितार्थ्यं ह्येतस्य बाधकत्वे बीजम् ॥ किंचानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये तद्बाधबोधनम्। अन्यथानवकाशत्वेनैव बाधे सिद्ध

---

इति। कुत्र बाधः कर्तव्यस्तस्य किं बीजमिति विचारयन् लिखति— तदप्राप्तियोग्येति। इदं बीजं येननाप्राप्तेति न्यायस्य निरवकाशो विधिरपवाद इत्यस्य च समानमेव। द्वितीयं तु येननाप्राप्तन्यायान्तर्गततक्रकौण्डिन्यन्यायस्यैव। तयोरुभयोरभेद एव निरवकाशो विधिरपवाद इति। अनवकाशत्वे सत्येव बाध्यबाधकभाव इति वार्तिककारमतं खण्डयन्नाह—अनेन न्यायेनेति। अस्योदाहरणं सर्वेषाम् इति। अत्र उत्सर्गे नुटि कृते यदागमन्यायेन आमो ग्रहणेन ग्रहणात्सुटः प्राप्तिरस्त्येवेति बाधो भवति। द्वितीयोदाहरणं तु दीर्घाहो निदाघ इति। अत्र ह्रस्वं भवति नलोपापवादत्वात्। तत्र नलोपो निषिध्यते। न ङिसंबुद्ध्योरिति निषेधेन संबुद्धौ नलोपाभावेन तदप्राप्तियोग्ये अचारितार्थ्यरूपबीजाभावेन बाधो न स्यात् इति चेन्न। तत्र निषेधो जात इत्यन्यदेतत्। परंतु उत्सर्गप्राप्तिर्विद्यत एवेति। एवं च बीजं युज्यते इति। यदा तु निषेधसूत्राणां विधिसूत्रैः सहैकवाक्यता तदा प्राप्तिर्नेति कथं तक्रकौण्डिन्यन्यायेन बाधः इति चेदुच्यते। तदानीं तक्रकौण्डिन्यन्यायाभावेन अहन्नित्यावर्य इति कौमुद्युक्तयुक्त्या संतोष्टव्यम्। अत्रोत्सर्गे कृते अपवादस्य यच्चारितार्थ्यमावश्यकं तच्चारितार्थ्यं यत्रकुत्रापि एकस्मिंल्लक्ष्ये विद्यमानं ग्राह्यं न तु सर्वस्मिन्नपि लक्ष्ये चारितार्थ्यमावश्यकम्। अस्योदाहरणं तु रुणद्धीति। अत्र श्नम्-विकरणेन शपो बाधः सिद्धान्ते क्रियते स कर्तुं न शक्यते। कुतः। उत्सर्गे शपि कृते पुनः श्नमः प्राप्तिर्न संभवति। कुतः। कर्त्रर्थसार्वधातुकप्रत्ययपरकत्वाभावात्। एवं च श्नमा कथं बाध्यं बाध्यते इति चेदुच्यते। उत्सर्गे शपि कृते श्नमश्चारितार्थ्यमस्त्येव। रुन्धन्तीत्यत्र शपा सह पररूपे कृते परादिवद्भावेन सार्वधातुकप्रत्ययपरकत्वेन पुनः श्नम् भवेदिति चारितार्थ्यमस्त्येवेति भवति तक्रकौण्डिन्यन्यायेन बाधः। न च पररूपस्य स्थानिवद्भावो भवेत्। तत्र पूर्वटिप्पण्युक्तप्रायसी इतिवत् परनिमित्तकत्वं द्रष्टव्यम्। तथा च कथं पुनः श्नमः प्राप्तिरिति वाच्यम्। एवं तर्हि व्यर्थं श्नम्-करणम्। सामर्थ्याच्छब् न भवतीति वक्तव्यमुत स्थानिवत्त्वं नेति। तत्र स्थानिवद्भावस्य गुणत्वेन तस्यैव सामर्थ्याद् बाध इति भवति पुनः श्नम्। एवं तक्रकौण्डिन्यबाधो

---

१ P. तत्प्रवृत्त्युत्तरमपि चारितार्थ्ये, B. C. G. H. तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि, P. mentions the latter reading.

२ C. G. H. बाध्यबाधनम्.

एतत्कथनस्यैव वैयर्थ्यापत्तेस्तक्रकौण्डिन्यन्यायप्रदर्शनस्यापि वैयर्थ्यापत्तेश्च । यथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः । यथा वादेरपि प्रवृत्त्या चरितार्थेनादेः परस्य ( १. १. ५४ ) इत्यनेनालो ऽन्त्यस्य ( १. १. ५२ ) इत्यस्य बाधः ।। तदुक्तं मिदचो ऽन्त्यात् ( १. १. ४७ ) इति सूत्रे भाष्ये सत्यपि संभवे बाधनं भवतीति । अन्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदानेन दधिदानस्य बाधो न स्यात्तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यसंभवात् ।। अत एवायादयः (३. १. ३१) इति सूत्रे गोपायिष्यतीत्यादावायादीन् बाधित्वा परत्वात्स्यादयः प्राप्नुवन्तीत्याशङ्क्यानवकाशा आयादयः । गोपायतीत्यादावपि शप्स्यादिः प्राप्नोति । न च सति

भवतीति दिक् । यथा प्रथमद्विर्वचनस्येति । ऊर्णुञ् धातुः । प्रथमाद्विर्वचनं प्राप्तम् । अजादेर्द्वितीयस्येति द्वितीयं द्विर्वचनं च प्राप्तम् । तत्र प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनेन बाधः । अतः एतदर्थं अनभ्यासस्येति न कर्तव्यम् । सन्नन्तायङन्ताद्वा द्वित्वे कर्तव्ये तदावश्यकमित्यन्यदेतत् । यथा वाऽऽदेरपीति । अस्योदाहरणं तु द्वीपम् । अत्र द्व्यन्तरुपसर्गेभ्योप ईदिति सूत्रेण प्राप्तमीत्वं आदेः कर्तव्यमुतान्त्यस्य । तत्र तक्रकौण्डिन्यन्यायेन आदेः परस्येत्यनया अलोन्त्यपरिभाषाया बाधात्तत्र उत्सर्गे अन्त्यादेशे कृतेपि आयादेशो भवेदिति वियत एव उत्सर्गानन्तरमपवादस्य चारितार्थ्यमिति भवत्येव बाधः । अत एवेति । सत्यपि संभवे बाधनं भवतीत्यस्य स्वीकारादेव भाष्योक्तं संगच्छते । तथाहि-आयादय इति सूत्रे आर्धधातुके इति परसप्तमी उत विषयसप्तमी इति संदेहः । तत्र यदि परसप्तमीपक्षः स्वीक्रियते तर्हि गोपाया इति रूपं न स्यात् । कुतः । आर्धधातुके परतः आयादयो भवन्तीत्यस्य स्वीकारे पूर्वं क्तिन् प्रत्ययः । ततः आयप्रत्यये कृत गोपातिः इति रूपं स्यात् । इष्यते तु गोपाया इत्याकारकम् । तथा च विषयसप्तमी गृह्यते । स्वीकृतायां च तस्यां पूर्वमायप्रत्यये ततः अप्रत्ययो भवतीति सिद्धं गोपाया इति । परंतु न तदर्थं विषयसप्तमी ग्राह्या । कुत । परसप्तमीपक्षे सिद्धिर्भवति । कुत । न्यासो विपरिणम्यते । तथाहि-गुपूधूपविच्छिपणिपनिभ्य आयो वा । पश्चाच्च कर्मणिङ्

१ C. G. H. एतत्कथनवैयर्थ्यापत्तेः । C. तक्रकौण्डिन्यन्यायवैयर्थ्यापत्तेश्च. G. न्यायप्रदर्शनवैयर्थ्यापत्तेश्च ।

२ B H. यथा चादेरपि प्रवृत्त्या चारितार्थ्येनादेः.

३ C. G. H. ऽन्त्यात्सूत्रे.

४ G. om. अत एवायादयः ... सममेव ।

५ B. om. प्राप्नुवन्ति.

६ B. गोपायतीत्यादौ शप्.

शप्यसति वा न विशेषः। अन्यदिदानीमिदमुच्यते नास्ति विशेष इति। यदुक्तमायादीनां स्यादिभिरव्याप्तो ऽवकाश इति स नास्त्यवकाश इति भाष्य उक्तम्॥ एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्ये ऽपि तदव्याप्तो ऽवकाशो नास्तीति सममेव॥ अत एव विषयभेदे ऽप्यपवादत्वम्। अत एवाचि रादेशेन नुटोऽप्यपवादत्वाद्बाधमाशङ्क्य न तिसृ [६. ४. ४.] इति ज्ञापकेन समाहितं तृज्वत्सूत्रे भाष्ये। तेनं विषयभेदे ऽपवादत्वाभाव एव बोध्यत इति कश्चित्तन्न। विप्रतोर्द्वित्राटिलोपमात्रस्य बाधानापत्तेः॥ यत्तु दयतेर्दिगि [ ७. ४. ९. ] इति सूत्रे

---

इति सूत्रात् परे 'सार्वधातुके नित्यम्' इति न्यासः। ततः आयप्रत्ययस्य निमित्ताभावेन अन्तरङ्गत्वात् पूर्वमायप्रत्यये परसमीपक्षेऽपि सिद्धं गोपायिष्यतीत्यत्र परत्वात्स्यादयो भवेयुः। तथा च दोषः इति चेदनवकाशा आयादयः इत्यायादयः प्राप्ताः। न च गोपायतीत्यत्रावकाशः। तत्र स्यादिरिव शपप्राप्तिरस्त्येव। न च शपि सति असति वा अस्ति विशेष इति चेन्नैवम्। अन्यदिदानीमुच्यते नास्ति विशेष इति। यदुक्तं पूर्वं स्यादिभिरव्याप्तोऽवकाशः इति स नास्त्यवकाशः। एवं तर्हि स्यादीनां बाधनं प्राप्नोति। अत्र कृतेषु स्यादिषु यद्यपि अवकाश आयादीनां तथापि तैरव्याप्तोऽवकाशो नास्तीति सममेव। यथा दापिदानोत्तर चारितार्थ्येऽपि तदव्याप्तोऽवकाशो नास्ति तत्प्रदानस्य तथैव अत्रापि। एवं च सत्यपि संभवे बाधनं भवतीति स्फुटमेव। अत एवेति। अत एवेति नाम सत्यपि संभवे बाधनं भवतीत्यस्य स्वीकारादेव। विषयभेदेऽपि अपवादत्वस्वीकारे न किंचिद् दूषणम्। अत एवाचीति। विषयभेदे अपवादत्वस्वीकारादेव अचि रादेशेन नुटोऽपि अपवादत्वमाशङ्क्य 'न तिसृचतसृ' इति ज्ञापकादपवाद इति समाहितं भाष्ये। यदि च विषयभेदे नापवाद इति तेषामभिप्रेतं स्यात्तर्हि विषयभेदान्नापवाद इत्येव वक्तव्यं स्यात्। यतश्च भगवान् भाष्यकारः ज्ञापकादेवेति ब्रवीति तदेव बोधयति विषयभेदेऽपि अपवादत्वमस्त्येवेति। यत्तु कश्चिद्वदति विषयभेदे अपवादत्वाभावादेव 'न तिसृ०' इति ज्ञापकेनोत्तरं दत्तं भगवता तेनेदमेव बोध्यते 'विषयभेदे नापवादः' इति तन्न। कुतः।

---

१ B. H. om. इदानीम्.

२ B. G. H. तेन निषेधेन विषय°.

३ B. एव नैव बोध्यत.

४ B. °आयप्रत्ययस्य:.

द्वित्वोत्तर द्विर्यादेशस्य चारितार्थ्यं कैयटेनोक्त तत्प्रौढ्या । ध्वनित च तेनापि तस्य तथात्व तदुत्तरग्रन्थेन ।[1] असभव एव बाधकत्व विरोधस्य तद्बीजत्वादिति वार्त्तिकमत तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि ।। तक्रकौण्डिन्यन्यायो ऽपि तदप्राप्तियोग्ये ऽचरितार्थविषयो विधेयविषय एव[2] चेति तद्धितेष्वचामादे.

विन्मतोर्लुका टिलोपमात्रस्य बाध इत्यन्तरङ्गपरिभाषोक्तभाष्यस्य असगत्यापत्त । तत्रापि विषयभेदोऽस्त्येवेति । तेन इदमेव युक्त विषयभेदेपि अपवादत्वमस्त्येव । ध्वनितमिति । ध्वनन प्रौढिवादत्व टीकाया स्फुटम् । असभव एवेति । वार्तिककार असभव एव बाध्यबाधकभाव स्वीकरोति । तदेव युक्तिसिद्धम् । कुत इति चदुच्यते । बाध्यबाधकभाव सर्वथा अयुक्त परतु अगत्या स स्वीक्रियते । यत्र किंचित्प्रमाण वियत तत्र बाधन कार्यम् । अत सूत्रवैयर्थ्यस्य प्राप्तत्वे बाधन युक्तमिति सिद्धौ यौगपद्यासभव एव बाध्यबाधकभाव इति 'सर्वेषाम्' इति रूपसिद्ध्यर्थं वचन करोति न नुट् भवतीत्यर्थप्रतिपादकम् । भाष्यकारास्तु नैव मन्यन्ते । कुत । लौकिकदृष्टान्तानुरोधेन बाध्यबाधकभाव सभवे सत्यपि भवति । किंच असमवे एव यदि तस्य स्वीकारस्तर्हि भूयिष्ठानि वचनानि स्युरिति महद्गौरवम् इति सभवेपि बाध्यबाधकभावो भवतीति सिद्धान्त । तक्रकौण्डिन्येति । तक्रकौण्डिन्यन्यायोपि तदप्राप्तियोग्ये अचारितार्थविषय इति तद्धितेष्वचामादेरिति सूत्रे भाष्ये । अस्योदाहरणम् 'औपगव' इति । अत्र प्राचीना आदिवृद्धिरन्त्योपधावृद्धी बाधते इति स्वीकुर्वन्ति । तेनान्त्यवृद्धिर्न भवतीति । परतु इदमयुक्तम् । कुत । बाध्यबाधकभाव अचारितार्थ्यविषय । आदिवृद्धेश्चारितार्थ्यं वियत सौश्रुत इत्यत्र । सुश्रुत अपत्यमिति विग्रहे नास्त्यत्र अन्त्यवृद्धि नाप्युपधावृद्धि न बाधनम् । तर्हि औपगव इत्यत्र कथ नान्त्यवृद्धिरिति चेदनुशतिकादिगणे 'पुष्करसद्' -शब्दपाठसामर्थ्यात् । स न पाठो वक्तव्य । आदिवृद्धिर्भवेदुपधावृद्धिरपि । एव च पाठो व्यर्थ । तेन ज्ञापनं क्रियते । नात्रोपधावृद्धिर्न वान्त्यवृद्धिरिति । यदि अत्र बाध स्यात्तर्हि पाठसामर्थ्यज्ञापक व्यर्थं स्यात् इति तत्र अचारितार्थ्यविषय-स्तक्रकौण्डिन्यन्याय इति सिद्धम् ॥ विधेयविषय एवेति । अस्य प्रमाण तु नित्य कौटिल्ये गतौ इति सूत्रस्थभाष्यमेव । तथा हि । उत्तरयोर्योगयो विग्रहेण असप्र-त्ययात् नित्यग्रहणानर्थक्यम् । तर्हि कुटिल क्राम्यति इत्यस्य कोर्थस्तर्हि कुटिल

१ B ध्वनित चेद तेनापि तस्य तथात्वमुत्तर°

२ B एवेति

[ ७. २. ११७ ] धातोरेकाचः [३. १. २२] इत्यादिसूत्रेषु भाष्ये स्पष्टम् ॥

पन्थानं गच्छतीति चंक्रम्यते इति गम्यते । क्रियासमभिहारे च नहि तेभ्यो यङा भवितव्यम् । 'भृशं जपति, दहतीत्येव' इति भाष्यम् । अत्र प्राचीना । "उत्तरयोः सूत्रयोर्विग्रहेण असंप्रत्ययात्" (३।१।२२ वा ६) अस्यार्थः । "नित्यं कौटिल्ये गतौ", "लुपसद०" इति सूत्रे नित्यग्रहणं न कर्तव्यम् । तद्धि किमर्थं क्रियते । तर्हि नित्य एव यङ् यथा स्यादिति वाक्यनिवृत्त्यर्थम् । परंतु तन्न कर्तव्यम् । 'विग्रहेण विशेषासम्प्रत्ययात्' नाम वृत्तेर्योऽर्थस्तस्य वाक्येन बोधाभावात् । नहि कुटिल क्रामतीति वाक्येन कुटिल गच्छतीत्यर्थकस्य चंक्रम्यते इत्यस्य अर्थो गम्यते येन वाक्य स्यात् 'कुटिलं क्रामति' इति । अकुटिलं पन्थानं गच्छतीति प्रतीतिः । न तदर्थप्रतिपादकं वाक्यं स्यादिति नित्यग्रहणमनर्थकम् । अबोधकारण तु शब्दशक्तिस्वाभाव्यात् । क्रियासमभिव्याहारे न हि तेभ्यो यङ् भवति इत्यस्य तु अयमर्थः । न च कुटिलगत्यर्थे एव यङ् यथा स्यात् क्रियासमभिहारे मा भूदित्यर्थं तदिति वाच्यम् । "क्रियासमभिव्याहारे नैतेभ्यो यङा भवितव्यम्" इति भाष्येण तद्विषये तक्रकौण्डिन्यन्यायेन कौटिल्यार्थेन क्रियासमभिव्याहारार्थस्य बाधात् । अत्र चैतद् भाष्यमेव मानम् । अत्रेदं बोध्यम्—क्रियासमभिहार-कौटिल्य-इत्येतावर्थौ धात्वो द्योत्यौ, न वाच्यौ । वाच्यत्वे एकस्यैव वाच्यत्वं स्यात् । एवं च एककाले विवक्षाया अभावेन बाधो न स्यात् । द्योत्यार्थे तु एकदा विवक्षा सम्भवति इति बाध्यबाधकभावो युज्यत इति । एव च न तदर्थं कर्तव्यम् । एतेन तक्रकौण्डिन्यन्यायः आविधेयविषयेपीति तन्मतम् । न च पूर्वोक्तः तक्रकौण्डिन्यन्यायबाधो न स्यात् उद्देश्यविषये तस्याभावादिति वाच्यम् । अस्मादेव भाष्यादुद्देश्यविषयेऽपि तक्रकौण्डिन्यन्यायः प्रवर्तत इति फलित भवति । न चेत्रमुद्देश्यविषये तक्रकौण्डिन्यन्यायस्य प्राप्त्या 'पूजितो यः सुरासुरैः' इति प्रयोगो न सिध्येत् । तत्र सिद्धान्ने वर्तमानार्थेन भूतकालस्य बाधो न क्रियते । अतः मूलोक्त सिद्धिः स इदानीं न स्यात् तक्रकौण्डिन्यन्यायेन बाधात् इति चेन्न । नित्यं कौटिल्ये गतौ इति सूत्रस्थानित्यग्रहणात् स न्यायः अनित्यः इति प्राचीनमतम् । नवीनास्तु नैवं मन्यन्ते । ते हि उत्तरयोर्योगयोरित्यत्र योगशब्देन उदाहरणं गृह्णन्ति न तु सूत्रयोर्ग्रहणं कुर्वन्ति । नित्यग्रहणाभावात् । न च उत्तरसूत्रे अनुवृत्त्या लभ्यमिति वाच्यम् । तथापि ग्रहण इदस्वारस्यं नेति युक्तमुदाहरणग्रहणम् । तथा च उत्तरं लक्ष्यद्वय भृश जपति क्रामति चङ्क्रम्यते इति तत्तद्विग्रहेण वृत्तेरर्थानवबोधेन न वाक्यं स्यादित्यनर्थक नित्यग्रहणम् । एतद्भाष्य सूत्रद्वयलक्ष्यपरम् । तदुक्तं क्रियासमभिहारे चेति लुपसदेति सूत्रविषयं

क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वं यथा ङेरामो याडादिबाधकत्वम्। न हि याडादिषु कृतेषु ङेराम् प्राप्नोति निर्दिश्यमानस्य व्यवधानात्। तत्र स्वस्य पूर्वप्रवृत्तिरिष्टैव तेषां बाधः। तत्र बाधके प्रवृत्ते येद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव यथा तत्रैव याडादयः अप्राप्तौ तु न यथा पचेयुरित्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः ॥ ५७ ॥

---

भृशं जपतीत्याद्युदाहरणदानात्। गत्यर्थेभ्यस्तु क्रियासमभिहारे यङ् भवत्येव। जङ्गम इत्यादिप्रसिद्धप्रयोगसत्त्वादिति। क्रियासमभिहारे च नैतेभ्यो यङा भवितव्यमित्यस्यार्थस्तु यथा—चकारेण विशेषासम्प्रत्ययात् नाम भृशं जपतीति वाक्यप्रतिपाद्यक्रियासमभिहारार्थस्य वृत्तेरबोधान्नैतेभ्यो यङ् भवति। गत्यर्थेभ्यस्तु क्रियासमभिहारार्थे यङ् भवत्येव। भृशं गन्ता हि जङ्गमः इति प्रयोगस्य सत्त्वात् इति नित्यग्रहणं न कर्तव्यमित्येव भाष्याशयः। नापूर्वेयं शङ्का। अपवादबाधकयोर्भेदो नास्त्येवेति शङ्कां कृत्वा ततः भेदोऽस्ति गुणो यङ्लुकोरित्यत्र भाष्यादिति ग्रन्थो योज्यः ॥

क्वचिदिति। सर्वथा अनवकाशत्वं परिभाषोदाहृतयुक्त्या ज्ञेयम्। तक्रकौण्डिन्यन्यायस्य विधेयविषये सत्त्वात्। अस्मादेव भाष्यादयमर्थो लभ्यते। यदि अत्र तक्रकौण्डिन्यन्यायेन बाध इष्टः स्यात्तर्हि चकारकरणं न कुर्यात्। किं च जङ्गम इति प्रयोगो न स्यात् इति विधेयविषये एव तस्य स्वीकारः। यत्तूक्तं नित्यग्रहणं तक्रकौण्डिन्यन्यायानित्यत्वे प्रमाणं तेन पूजित इति सिद्धमिति तदपि न। अत्र भूतकालवर्तमानकालप्रत्यययोरेकस्मिन्काले प्राप्त्यभावेन तक्रकौण्डिन्यन्यायस्य न विषयः। न हि भूतकाले वर्तमानत्वं कदापि वक्तुं शक्यम्। तेनोभयोरेकस्मिन् काले प्राप्त्यभावेन येन नाप्राप्त इति न्यायस्य बीजाभावात् स न्यायः अत्र न प्रवर्तत इति। अत्र नवीनानां गुणस्तु तन्मते ग्रहणपदस्वारस्यं चकारकरणस्य सार्थक्यं जङ्गम इति प्रयोगसिद्धिः। क्रियासमभिहारे घत्यत्रोदाहरणद्वयं प्रदत्तं भृशं जपति दशति इत्याकारकम्। यदि क्रियासमभिहारे च इति भाष्यं सूत्रद्वयविषयं स्यात्तर्हि पूर्वसूत्रस्योदाहरणमवश्यं देयमेव। तत्तु न प्रदत्तम्। अतः ते उपलक्षणं गृह्णन्ति। परंतु तदपि न युक्तम्। प्रथमोपस्थितत्वात् पूर्वस्योदाहरणं देयम्। तच्च उत्तरसूत्रस्योपलक्षणमिति युक्तम्। अत्र तु विरुद्धमिति दोषः इति उपलक्षणस्वीकारं कुर्वन्ति न स नवीनानां दोष इति दिक् ॥ ५७ ॥

---

१ C. G °त्सर्गप्रवृत्तिरस्ति तदा भवत्यव H उत्सर्गप्राप्तिरस्ति

तदेतत्पठ्यते ।

**क्वचिदपवादविषये ऽप्युत्सर्गो ऽभिनिविशत इति ॥ ५८ ॥**

अपवादशब्दोऽत्र बाधकपरः ॥ तदुक्तं गुणो यङ्लुकोः [ ७ ४. ८२ ] इत्यत्र भाष्ये । अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते । अजीगणत् । अत्र गणेरीत्वमपवादत्वाद्धलादि शेषं न बाधते । नै गणेरीत्वमपवादत्वाद्धलादि शेषं बाधते । किं तर्हि । अनवकाशत्वादिति ग्रन्थेन । गण्रूपाभ्यासान्त्यणस्येत्वमित्यर्थे हलादि शेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य प्राप्तिरन्त्यहलो ऽभावात् । अभ्यासविकारेषु बाध्यबाधकभावाभावेन च सान्निम् ।

क्वचिदपवादविषयेति परिभाषाया अपवादशब्दो बाधकपर इति गुणो यङ्लुकोरिति सूत्रे भाष्ये डोढौक्यत इत्यस्य प्रसङ्गेनेदमुक्तम्— अभ्यासविकारेषु अपवादा उत्सर्गान्न बाधन्त इति । तत्राय प्रसङ्ग । यदि द्वित्व च कृत ह्रस्व प्राप्त ओकारस्य दीर्घश्च प्राप्त । तत्र दीर्घोऽपवाद । अत दीर्घ एव भवति । न पुनर्ह्रस्व । एव च डोढौक्यत इति अनिष्ट रूप स्यात् । इष्यते तु ह्रस्व कृते ततो गुणे कृते डोढौक्यते इति । अत इय परिभाषा स्वीक्रियत । स्वीकृतायां चास्यां पूर्वं ह्रस्व ततो गुणेन सिद्धिरिति । परन्तु अत्र अय दोष । अजीगणत् इत्यत्र हलादिशेष उत्सर्ग । अत्र अपवाद ईत्वम् इति वक्तव्यम् । परन्तु न तस्य अपवादत्व वक्तु शक्यते । कुत । हलादिशेषे ईत्वस्य प्राप्त्यभावात् । तदप्राप्तिकारण तु गण्रूपाभ्यासान्ताङ्कस्याभावात् इति । अत न अपवादत्व तस्य । किं तर्हि । अनवकाशत्वम् । अत अभ्यासविकारेषु अपवादा उत्सर्गान्न बाधन्त इति स्वीकारे अत्र अपवादाद्बाध्यबाधकभाव स्यात् । अत अभ्यासविकारेषु बाध्यबाधकभावो नेति स्वीक्रियते इति । अनेन भाष्येण अपवादबाधकयोः भेद स्पष्टतया प्रतिपादित । अपवादविषय तु क्वचिदपवाद० इति परिभाषा न प्रवर्तते इति सिद्धमेव । अत अपवादशब्दस्य बाधक इत्यर्थो द्रष्टव्य । युक्त च तत् । न च अभ्यासविकारेषु वैयधिकरण्येनान्वयस्य उक्तत्वेन हलादिशेषे कृते गण्सबन्ध-

१ C ० सर्गो निविशत

२ B. om अत्र

३ B om न गणेरीत्व बाधते H mentions the omission by correction

४ P mentions the reading तदनवकाशत्वमीत्वे.

५ C तु कृते हलो ऽसभवात्, B कृते तु हलो ऽभावात्
H कृते नस्याप्राप्ति

तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः। न च येननाप्राप्तिन्यायेनापवादत्वमप्यस्य सुवचं तस्य चरितार्थविषयताया उक्तत्वात् ॥ इको झल् [ १. २. ९ ] इत्यत्र[1] भाष्ये ऽपि ध्वनितमेतत्। तत्र ह्यज्झन [ ६. ४. १६ ] इति दीर्घेण गुणोत्तरं फलाभावेनानवकाशत्वाद्गुणे बाधिते दीर्घोत्तर गुणः स्याद्दीर्घविधानं तु मिनोतेर्दीर्घे कृते सनि मीमा [ ७. ४. ५४ ] इत्यत्र मीग्रहणेन ग्रहणेऽर्थवत्तत्र पश्चात्प्राप्तगुणबाधनार्थमिको झलिति कित्व-मित्युक्तम्। अन्यथापवादत्वेन बाधे तद्विषय उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासं-गतिरिति स्पष्टमेव[2] ॥ यत्तु काञ्चनीत्यादावनपवादमयड्विषयेऽप्यण्भवति क्वचिदपवा-दविषयेऽपीति न्यायादिति तन्न। अण् कर्मणि च ( ३. ३. १२ ) इति सूत्रस्यभाष्यविरोधात्। तत्र ह्यणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थं गोदायो व्रजतीत्याद्युक्तम्। काञ्चनीत्यादौ काञ्चनेन[3] निर्मितेत्यर्थे शैषिकोऽण् बोध्यः ॥ अत्रेदं बोध्यम्। येन नाप्राप्तेत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थस्तदा स्वविषये[4] स्वेतरद्यद्यत्प्राप्नोति तद्बाध्यं विध्यन्तराप्राप्तविषयाभावात्। इयमेव बाध्यसामान्य-

---

अन्त्यस्य ईत्वमित्यर्थेनापवादत्वं सुवचम्। उत्सर्गे कृते अपवादस्य अचारितार्थ्यात्। इति कथं नापवादत्वमुक्तम् इति चेदुच्यते—बाध्यबाधकभावो नेति। ज्ञापकविषये च उत्सर्गे कृते अपवादस्य चारितार्थ्यं वर्तते न वा इति नापेक्षा, किंतु केवल बाधकत्वबीजमपेक्षितम्। एवं च बाध्यबाधकभावस्य पूर्वं नाम वैयधिकरण्येना-न्वयस्य पूर्वं युक्तत्वेन तद्युक्त अपवादो नेति ज्ञापकेन पूर्वं भवति। न हि वैयधिकरण्येन प्राक् अपवादत्वं वक्तुं शक्यम्। अपवादो न बाधकः इति ज्ञापकं कृत्वा सोपवादो न युज्यते इति वैयधिकरण्येनान्वयो ग्राह्य इति महान् क्लेश इति बाध्यबाधकभावो नेत्युक्तम्। न च येननाप्राप्तन्यायेन अस्यापवादत्वं सुवचमिति वाच्यम्। तस्य चारितार्थ्यविषयताया उक्तत्वेन अदोषादिति। अत्रेदं बोध्यम्। उत्सर्गे कृते ईत्वस्य अपवादस्य चारितार्थ्यं वक्तुं शक्यते। कुतः। अभ्यासविकारेषु वैयधिकरण्येनान्वयस्य उक्तत्वादिति चेन्न।

---

१ B H इति सूत्रे भाष्ये.
२ B. स्पष्टैव
३ B. काञ्चनेन निर्वृत्तर्थे.
४ B. स्वविषये यद्यत्प्राप्नोति.

चिन्तेति व्यवह्रियते। अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति विनिगमनाविरहात्॥ यदि तु येनेत्यस्य लक्षणेनेत्यर्थः[1] कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता। अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं[2] विशेषचिन्ता संभवति यद्युदाहरणमिति[3]॥ ५८॥

तत्र[4] कार्येणेत्यर्थे परत्वावच्छिन्ने कार्ये[5] आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किंशास्त्रविहितस्येत्येवं तद्विशेषचिन्तामायाह।

## पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्॥ ५९॥

अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन[6] चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभाव आकाङ्क्षाया[7] निवृत्तेर्विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य[8] बीजम्॥ ५९॥

नासिकोदरौष्ठजङ्घादन्त (४. १. ५५) इत्यस्यौष्ठाद्यंशे[9] ङीष्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किंविहितस्येत्याकाङ्क्षायामाह[10]।

## मध्येऽपवादाः पूर्वान्विधीन्बाधन्ते नोत्तरान्॥ ६०॥

तेनौष्ठादिषु पञ्चस्वसंयोगोपधादिति प्रतिषेध एव बाध्यते न तु सहनं[11]ञ्विद्यमानलक्षण इति नासिकोदर (४. १. ५५) इत्यत्र भाष्ये स्पष्टम्॥ पूर्वोपस्थितबाधेन नैराकाङ्क्ष्यमस्या बीजम्॥ ६०॥

---

अभ्यासविकारेषु बाध्यबाधकभावो नेति ज्ञापने अन्वयः क्रियते। नुक. यद्युदाहरणमस्तीति सामान्यचिन्तायां स्वीकृतायां अनवकाशत्वेन बाधविषये बहवो विषयाः प्राप्ताः। तत्रैकस्य बाधं कृत्वा सावकाशत्वे न पुनस्तेषां बाधः कर्तुं शक्यते सावकाशत्वात्। अतो नोदाहरणसंभव इति भावः॥ ५८॥ ५९॥ ६०॥

---

1 B. G. H. °त्यर्थो येन कार्येणेत्यर्थो वा; C. om. इत्यर्थः; B. C. G. have येन before लक्षणेन.
2 B. H. तद्बाधेन चेत्येवं विशेषचिन्तासंभवो.
3 C. G. °दाहरणमस्ति. H. दाहरणमस्तीति।
4 B. C. G. H. तत्र येन कार्येण.
5 B. G. कार्ये प्राप्त आरभ्यमाणावृद्धे°.
6 C. °बाधनेन.
7 B. C. G. H. आकाङ्क्षानि°.
8 B C. H. भावाच्चेत्यस्य.
9 C. G. H. °दन्तेत्यस्यौष्ठा°; B. °दन्तस्यौष्ठा°.
10 B. किंविहितेत्यस्याका°. G. किंविहितस्येत्याशंकायामाह
11 C. सहनञ्लक्षण इति; B. °लक्षणेति

ननु वा च्छन्दसि ( ३. ४. ८८ ) इत्यनेन सेर्ह्यपिच्च ( ३. ४. ८७ ) इत्यनन्तरस्यापित्त्वस्येव हेरपि विकल्पः स्यात् । तथा नेटि ( ७. २. ४ ) इति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धिमृजिवृद्धयोरपि स्यात् । अत उक्तन्यायमूलकमेवाह ।

## अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६१ ॥

अत एव संख्याव्ययादेः ( ४. १. २६ ) इति ङीब्ग्रहणं चरितार्थम् । तद्ध्यनन्तरस्य ङीपो विध्यभावाय । न क्तिचि ( ६. ४. ३७ ) इति सूत्रे दीर्घग्रहणं च चरितार्थम् । तद्ध्यनन्तरस्यानुदात्तोपदेश ( ६. ४. ३७ ) इत्यस्यैव निषेधाभावाय ॥ मध्येऽपवादन्यायाद्यपेक्षयानन्तरस्येति न्यायः प्रबल इत्यष्टाभ्यः ( ७. १. २१ ) इति सूत्रे कैयटः ॥ प्रत्यासत्तिमूलकोऽयम् । लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम् । तत्रतत्र क्वचित्स्वरितत्वप्रतिज्ञासामर्थ्येन वा

---

अनन्तरस्य विधिर्वेति । मध्येपवादन्यायाद्यपेक्षया अनन्तरस्येति न्यायः प्रबल इति अष्टाभ्य इति सूत्रे कैयटः । तत्रायं प्रसङ्गः । अष्टाभ्य औशिति सूत्रे 'अनुत्तरपदे इति वक्तव्यम्' इति वार्तिकम् । तद्धि किमर्थम् । अष्टभार्यः, अष्टपुत्रः इत्यादिषु मा भूदित्यर्थम् । परंतु तन्न कर्तव्यम् । जातेपि औशि सामासिकलुकः सत्त्वेन दोषाभावात् । न चैवं 'अष्टौ तिष्ठन्ति, अष्टौ पश्य' इत्यत्रापि लुक् स्यात् । परंतु आरम्भसामर्थ्याच्चेति तत्रोत्तरं दीयते । अथवा अपवाद औश्त्वम् । कस्यापवाद इति चेत्, षड्भ्यो लुगित्यस्य । कुतः । यस्य विषये औशादेशारम्भः तस्यापवाद इति । अथवा अनन्तरस्यैव बाध उचितः । अनन्तरस्येति परिभाषाया जागरूकत्वादिति । यस्तु व्यवहितस्तेन यो वा तस्मादनन्तरः इति भाष्यादस्या एवापवादः । तस्य अनेकाध्यायव्यवहितत्वेन बहुकालेन स्मरणादिति ॥ एतेन मध्येपवादन्यायापेक्षया अनन्तरस्येत्यस्य प्राबल्यमिति स्फुटमेव ॥ प्रत्यासत्तीति । यो वेति भाष्यस्य प्रत्यासत्तावेव

---

१ B. मूलमेवाह.

२ C. G. °पदेशेत्यस्यैव ; B. °पदेशस्येत्यस्यैव. H. °पदेशस्यैव निषेधा°.

३ P. °न्यायाद्यपेक्षया ; B. C. G H. °न्यायापेक्षया.

४ B. C. om. च.

५ C. H. तत्र क्वचित्स्वरितत्वप्रतिज्ञानात्साम°.

बाधपरोऽयं न्यायः । यथा टिड्ढ (४. १. १५) इति सूत्रेण ङापा व्यवहितस्यापि ङीपो विधिः । न षट् (४. १. १०) इत्यादिना द्वयोरपि टाब्डापोः प्रतिषेधः ॥ इयं च शि सर्वनामस्थानम् (१. १. ४२) इत्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः ॥ ६१ ॥

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशोऽल्विधौ स्थानिवत्त्वाभावाददादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह ।

**पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६२ ॥**

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चय उत्सर्गेण तल्लक्ष्यं संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः । अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । अपवादो यद्यन्यत्र चरितार्थः (परि० ६५) इति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥ ६२ ॥

लक्ष्यैकचक्षुष्कस्तु तच्छास्त्रपर्यालोचनं विनाप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः । तदाह ।

**प्रकल्प्य वापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ ६३ ॥**

तत इत्यस्यापवादशास्त्रपर्यालोचनाप्रागपीत्यर्थः । प्रकल्प्येत्यस्य परित्यज्येत्यर्थः ॥ ६३ ॥

---

तात्पर्यम् । तेन अत्रानन्तरस्यात्तस्यैव बाध इति नानेन भाष्येण मध्येपवादन्यायादित्यस्य प्राबल्यं बोध्यते किं तूभयोस्तौल्यमेवेति लक्ष्यानुरोधाद् व्यवस्थेति दिक् ॥ ६१ ॥ ६२ ॥ ६३ ॥

---

१ B. H. ल्यपि विधिरिति.
२ B. om. च.
३ C. न स्यादत आह.
४ B. लक्षणचक्षुष्को.
५ B. मात्र प्रवृत्तिरन्तादेशा°.
६ B. H. तत्तल्लक्ष्य°.
७ C. प्रकल्प्य चापवाद°; B. प्रकल्प्यापवाद°.

अत एव प्रातिपदिकार्थसूत्रे भाष्य इदं द्वयमप्युक्त्वा न कदाचित्तावदु[1]-त्सर्गो भवत्यपवादं तावत्प्रतीक्षत इत्यर्थकमुक्तम् ॥ एतन्मूलकमेव नवीनाः पठन्ति ।

## [2]उपसंजनिष्यमाणनिमित्तोऽप्यपवाद [3]उपसंजातनिमित्त-मप्युत्सर्गं बाधत इति ॥ ६४ ॥

यत्त्वभ्यस्तसंज्ञासूत्रे कैयटेन [4]प्रकल्प्य वेति प्रतीकमुपादाय यथा न संप्रसारणे ( ६. १. ३७ ) इति परस्य यणः पूर्वं संप्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध इत्युक्तं त[5]त्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम् । यत्त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थं इति तन्न । [6]अभिनिविशन्ते ऽपवाद-विषयमित्यादिपदस्वारस्यभङ्गापत्तेः । पदजन्यपदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च ॥ यत्र त्वपवादो निषिद्धस्तत्रापवादविषये ऽप्युत्सर्गः

---

यत्त्वभ्यस्तेति । यत्तु अभ्याससूत्रे कैयटेन प्रकल्प्य वेति प्रतीकमुपादाय तस्योदाहरणं 'न संप्रसारणे संप्रसारणम्' इत्युक्तं तत्र परस्य यणः आदौ संप्रसारणम्, पूर्वस्य तन्निमित्तकः प्रतिषेधः इत्युक्त तन्न युक्तम् । तत उत्सर्गः प्रवर्तते इत्यक्षराननुगुणकत्वं तस्येति । यत्त्वपवादेति । प्रकल्प्य चापवादेत्यस्य एतादृशमर्थं वर्णयन्ति—अपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तन्न । अभिनिविशते अपवादविषयमित्यादिपदस्वारस्यभङ्गापत्तेरिति । तथाहि । अभिनिविशते इत्यस्य कोर्थस्तर्हि बुद्ध्यारूढो भवतीत्यर्थः । बुद्ध्यारूढभवनं वाक्यार्थभवनं इत्यनयोर्मध्ये अस्ति विशेषः । अतो न स वाक्यार्थः सम्भवति । किं च अपवाद-विषयं इत्यत्र विषयशब्दस्य न स्वारस्यम् । विषयो नाम शास्त्रस्य लक्ष्ये प्रवृत्तिः । यथा उपेन्द्र इत्यवस्थायां गुणस्य । किं च । वाक्यार्थः पदच्छेदादिना वाक्यार्थ-करणम् । एवं चोभयोर्भिन्नार्थत्वेन न तयोः स्वारस्यम् । एवं च तात्पर्ये सति अक्षरार्थो नैतादृशः इति सिद्धं भवति । वस्तुतस्तु तदपि नेत्याह । पदजन्येति । पदजन्यपदार्थोपस्थितौ सत्यां वाक्यार्थबोधे न किमपि कारणं दृश्यते । अतः

---

१ B. °दुत्सर्गो भवन्त्यपवादं.
२ B. H. उपजनि°
३ B. उपजात°.
४ B C. G. प्रकल्प्य चेति.
५ B. तत्तु नत इत्याद्यक्षरा°; H. तत्तु उत्सर्ग इत्याद्यक्षरा°
६ B. अभिनिविशते.

प्रवर्तत एव यथा वृक्षावित्यत्र नादिचि ( ६. १. १०४ ) इति पूर्वसवर्ण-दीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वाभावाद्वृद्धिः प्रवर्तते । अत एव तौ सत् ( ३. २. १२७ ) इत्यदि सगच्छते । अत एव निर्देशाद्भ्रष्टावसर-न्यायस्यात्र शास्त्रे नाश्रयणम् । ध्वनित चेदमिको गुण [ १. १. ३ ]. इति सूत्रे भाष्य इति भाष्यप्रदीपोद्योते निरूपितम् ॥ अत्र देवदत्तस्य हन्त-रि हते देवदत्तस्योन्मज्जन नेति न्यायस्य विषय एव नास्ति । हते देवदत्त उन्मज्जन न । देवदत्तहननोद्यतस्य तु हनने भवत्येवोन्मज्जनम् । प्रकृते ऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हनन किंतु हननोद्यमसजातीय प्रसक्तिमात्र प्रसक्तस्यैव निषेधात् ॥ प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोज-कम् । स्पष्ट चेद शेषाद्विभाषा ( ५. ४. १५४ ) इति सूत्रे भाष्ये । तत्र हि शेषग्रहणमनर्थक ये प्रतिपद विधीयन्ते ते बाधका भविष्यन्तीत्याशङ्क्यान-वकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कब्भावे सावकाशा इत्यु-क्तम् । क्वचिदनवकाशत्वाभावेऽपि परनिमित्तत्वादिसमवधाने शीघ्रोपस्थितिकत्वेन

---

नोत्सर्गवाक्यार्थो भवतीत्येतद्विषये न मानमिति दिक् ॥ भ्रष्टावसरन्यायस्येति । तथाहि लोक कस्यचित्पुरुषस्य सेवा कर्तु सेवक सनिधापयितव्य । तत्र एक निषिद्ध । तत केनापि कारणेन द्वितीयोऽपि निषिद्धः । तत्र पुन प्रथमोऽपि न गृह्यते । भ्रष्टावसरत्वात् । एव युक्त्या वृक्षावित्यत्र न पुनर्वृद्धिर्भवतीति चेन्न । तस्य न्यायस्य अस्मिञ्शास्त्रे अनाश्रयणात् । ध्वनित चेद 'इको गुणे' इत्यत्र भाष्ये । तत्र वृद्धिग्रहण किमर्थम् । अमैत्सीत् इत्यत्र हल सिचिवृद्धिनिवृत्त्यर्थम् । न च तत्र हलन्तलक्षणा बाधिका भविष्यति । अकोषीत् इति । एव तर्हि सिचिवृद्धेरप्यय प्रतिषेध इत्युक्त भाष्ये । यदि च भ्रष्टावसरन्यायस्य अत्र शास्त्रे आश्रयण तर्हि पुन सिचिवृद्धिरत्र न प्राप्नुयात् इति सिचिवृद्धेरप्यय प्रतिषेध इति न वक्तव्यम् । यतश्च भगवानाचार्य प्रतिषेध करोति तद् बोधयति तस्य न्यायस्य नास्मिञ् शास्त्र आश्रयणमिति । अथवा भैरव्युक्त ध्वनन वक्तव्यम् ॥ क्वचिदिति । अनव-काशा विधयो बाधका भवन्ति इति शेषाद्विभाषेति सूत्र भाष्यम् । अनवकाश-त्वाभावे जनक पूर्वोपस्थितिकत्वेन पूर्वप्रवृत्तिबलवत्त्व प्रतिपदविधित्वेनापि वक्तुं

---

१ B G H. °द्यतस्य हनने तु भवत्येवो°

२ B °सजातीयासक्त°

पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि । परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथःप्रसङ्गे परबलीयस्त्वमिति प्रत्ययोत्तरपदयोश्च ( ७.२.९८ ) इति सूत्रे कैयटेन पाठात् । अत एव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेव औकारप्रश्लेषाद्धल्ङ्याब्भ्य।दिलोपो न प्राप्नोतीत्याशङ्क्यैङ्ह्रस्वात् ( ६.१.६९ ) इति लोपेन समाहितम् ।। ६४ ।।

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह ।

**अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६५ ॥**

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात् । एवं च प्रकृते ऽन्तरङ्गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादो ऽपि बाध्यते । पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वाविषय इदम् ।। यत्त्वागमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वादत एव ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डिन्यायेत्यादौ कम्बलेन न दधिदानबाध इति च्छ्वोः ( ६. ४. १९ ) इति सूत्रे कैयटस्तन्न । अपवादो नुग्दीर्घत्वस्येति दीर्घोऽकितः ( ७. ४. ८३ ) इति सूत्रस्थभाष्यविरोधात् ।। ६५ ।।

---

सुवचमिति ध्येयम् । एतद्विषये प्रमाणं तु कैयटपाठ एव—**परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति** । अत्र यदि तक्रकौण्डिन्यन्यायस्य विषयः तदा बाधः सुवच एव । यदा च तक्रकौण्डिन्यन्यायाभावः तदा अनवकाशत्वादेव बाध । कैयटस्तु एवं ब्रवीति प्रतिपदविधित्वस्य बाधकत्वम् । तच्च कथम् । तर्हि सर्वान्तरङ्गापेक्षया प्रतिपदविधित्वस्य शीघ्रोपस्थितिकत्वमिति तस्य प्राबल्यमिति दिक् ॥ ६४ ॥

समानाश्रये चरितार्थ इति । तत्स्थाने चारितार्थ्यदानकारणं तु आदौ अपवादवाक्यार्थसत्त्वेन ततः अपवादस्य अवकाशं त्यक्त्वा उत्सर्गप्रवृत्तिः । अतः समानाश्रये चारितार्थ्यं तस्येति शम् ॥ ६५ ॥

---

१ B. आकारस्य प्रश्लेषा°.
२ B. बाधकबीज°.
३ B. om. अपि.
४ C. G. H. °न्तरङ्गविषय.
५ B. कम्पल.
६ G. कौण्डिन्याय कम्पल इत्यादौ.
७ B. दधिदानस्य बाध.
८ B. सूत्रभाष्य°.

नन्वजीगणदित्यादौ णेरीत्वं निरवकाशत्वाद्धलादिशेषं बाधेत तत्राह ।

## अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६६ ॥

दीर्घो ऽकितः ( ७. ४. ८३ ) इत्यकिद्ग्रहणमस्या ज्ञापकम् । अन्यथा यंयम्यत इत्यत्र नुकि कृते ऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ इयं परान्तरङ्गादिबाधकानामप्यबाधकत्वबोधिका । तेनाचीकरत् मीमांसत इत्यादि सिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाध प्राप्नोति । अन्ये मान्बध

---

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति। परिभाषाया अस्या ज्ञापक दीर्घोऽकित इति सूत्र अकिद्ग्रहणम्। तथाहि --तदकिद्ग्रहण किमर्थं क्रियते। तर्हि यंयम्यते इत्यादिषु दीर्घो मा भूदित्येतदर्थम्। तच्च कर्तव्यम्। यंयम्यते इत्यादौ दीर्घवारण तु सुवचमत्र। नामात्र दीर्घ आरभ्यमाणा नीगादय तद्बाधका । तेन पूर्वं नीकि कृते पश्चात्सामानाधिकरण्येन अजन्ताभ्यासस्य दीर्घो भवतीति वाक्यार्थस्य सत्त्वेन नुकि कृते पश्चादनवकाशत्वेन बाधेपि दीर्घप्राप्त्या अकिद्ग्रहण व्यर्थं ज्ञापयति-–अभ्यासविकारेषु बाध्यबाधकभावो नेति। अत. बाध्यबाधकभावाभावाद्दीर्घोपि स्यादिति अकिद्ग्रहण कर्तव्यम् । परन्तु पुनर्व्यर्थं भवति। नुकि कृते दीर्घाभावात् अजन्ताभ्यासाभावात् इति पुनर्व्यर्थं ज्ञापयति-– अभ्यासविकारेषु वैयधिकरण्येन अन्वय इति। तत अभ्याससम्बन्धी योऽच् तस्य दीर्घो भवतीति वाक्यार्थस्य जातत्वेन पुनर्दीर्घ स्यादिति अकिद्ग्रहण कर्तव्यम्। अन्यत्रफले-–आद्यस्य अजीगणत् । अन्त्यस्य चिच्छिसति। अत्र अजन्ताभ्यासाभावादित्व न स्यात्। स्वीकृते च ज्ञापके अभ्याससम्बन्धिनस्य इत्व भवतीति वाक्यार्थस्य सत्त्वेन इत्व सिध्यति। अत्रेद वक्तव्यम्--इद ज्ञापकद्वय कदा सिध्येत्। उभयोर्मध्ये कस्मिन्नपि पूर्वं जाते यत्रोभयो सुवचत्व तत्रैव ज्ञापकद्वयस्य सिद्धि । अत्र तु नैवम्। यदि पूर्वमभ्यासविकारेषु वैयधिकरण्येनान्वयस्तदा अकिद्ग्रहणस्य चारितार्थ्यसम्भवे न तद्गमयति । तथाहि। अकिद्ग्रहण व्यर्थम्। अजन्ताभ्यासाभावेन दीर्घप्राप्त्यभावात् इति। व्यर्थं ज्ञापयति। अभ्यासविकारेषु वैयधिकरण्येनान्वय इति। यदि चेदानीमकिद्ग्रहण न क्रियते तर्हि दीर्घ स्यात्। तद्वारणार्थमकिद्ग्रहणमावश्यकम्। पर तु पुनर्व्यर्थम्। आत्वापवादेनास्या बाध्यबाधकभावो नेति ज्ञापनार्थम्। पर तु पुनश्च वक्तु पार्यते। कुत ।

---

१ C °द्धावाप्रवृत्तौ तद्वै°.

२ B H इयं च परान्तरङ्गादिबाधानाम°.

( ३. १. ६ ) इति दीर्घेणान्तरङ्गत्वादित्वस्य बाध प्राप्त ॥ यत्तु यत्रैकैका प्रवृत्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमित्यत एक ( ६. ४. १२० ) इति सूत्रे कैयटस्तन्न । नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधान्मान्बधादीना दीर्घे कृत इत्वाप्राप्त्या गुणो यङ्लुको ( ७. ४ ८२ ) इति सूत्रस्थभाष्योक्ततदुदाहरणासगतेश्चेत्यन्यत्र विस्तर ॥ ६६ ॥

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपरादोऽसरूपापवादस्य विकल्पेन बाधकत्वात् । अत आह ।

## ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ ६७ ॥

ण्वुलि सिद्धे निन्दहिंसादिसूत्रेणैकाज्भ्यो वुञ्विधानमत्र ज्ञापक तत्र ण्वुल्वुञो स्वरे विशेषाभावात् ॥ ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलि-

---

नाप्राप्ते दीर्घे आरभ्यमाणस्य नुक बाधकत्वम् । इत्यनया रीत्या वैयर्थ्यं वक्तव्यम् । पर तु बाधकत्व कथा विधया तर्हि तदप्राप्तियोग्येति बीजाभावेनानवकाशत्वाद्भ बाधो वक्तव्य । तथा च नुकि कृत वैयधिकरण्येनान्वयस्योक्तत्वात् पुन प्राप्तदीर्घवारणाय चरितार्थं आकिद्ग्रहणमिति ज्ञापक न वक्तु शक्यते इति चेन्न । नुकि कृते यदि दीर्घ स्यात्तर्हि नुग्विधायके सूत्रे तपरकरण व्यर्थं स्यात् । अत स्तत्सामर्थ्यान्नुका दीर्घस्य नित्यो बाध । न च तपरकरण भूतपूर्वदीर्घग्रहणार्थम् । अत एव वाभाम्यते इति सिध्यति इत्येतत्त्वसामर्थ्यमिति चेन्न । तथा सति तयैव भूतपूर्वगत्या दीर्घोपि भवेत् । कुत । दीर्घे नाम कृते दीर्घत्वेपि पूर्वं ह्रस्वस्य विद्यमानत्वेन नुक प्राप्त्या तक्रकौण्डिन्यन्यायेन बाध सुकर । अत न पुन दीर्घ प्राप्नोतीति व्यर्थं ज्ञापयति इति पूर्ववदेवेति दिक् । ननु नुग्विषये कृता व्यवस्था चर्करीकादीना कथमिति चदुच्यते । नीक् रीक् इत्यत्र कृते दीर्घे फला भाव । चकू इत्यत्र ह्रस्वोच्चारणसामर्थ्याद् दीर्घो नति वक्तु सुकरम् । इति आकिद्ग्रहणवैयर्थ्यमिति न दोष इति ध्येयम् ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥

---

१ C G H प्रवृत्तिस्तत्रैवेतरप्रवृत्तिरित्यत
२ B °माने विरोधात्
३ B om. गुणा भ्रमस्य°.
४ H सूत्रे भाष्योक्त
५ B ताच्छील्यादि°
६ B. °हिंसासूत्रे°

कैरताच्छीलिकैश्च वासरूपविधिर्नेति बोध्यम् ॥ नन्वेवं कम्रा कमनेत्याद्यसिद्धिर्नमिकम्पि ( ३. २. १६७ ) इति रेणानुदात्तेतश्च हलादेः ( ३. २. १४९ ) इति युचो बाधादिति चेत् । न । सूददीपदीक्षश्च ( ६. २. १५३ ) इत्यनेन दीपेर्युज्निषेधेनैतत्कार्यस्यानित्यत्वात् ॥ ६७ ॥

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञिच्छति भोक्तुमित्यत्र लिङ्लोटावीषत्पानः सोमो भवतेत्यत्र खल् प्राप्नोतीत्यत आह ।

## क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ ६८ ॥

इदं च वासरूपविधेरनित्यत्वात्सिद्धम् । तदनित्यत्वे ज्ञापकं चार्हे कृत्यतृचश्च ( ३. ३. १६९ ) इति । तत्र हि चकारसमुच्चितलिङा कृत्यतृचोर्बाधा मा भूदिति कृत्यतृज्ग्रहणं क्रियत इत्यन्यत्र विस्तरः ॥ वासरूपसूत्रे भाष्ये स्पष्टा ॥ ६८ ॥

ननु श्वः पक्तेत्यत्र वासरूपविधिना लृडपि प्राप्नोति कृत आदेशे वैरूप्यादत आह ।

## लादेशेषु वासरूपविधिर्नास्ति ॥ ६९ ॥

आदेशकृतवैरूप्यन्तु लकारेषु स नास्तीत्यर्थः ॥ अत्र च ह्यशश्वतोर्लङ् च ( ३.२.११६ ) इति लड्विधानं ज्ञापकम् । अन्यथा परोक्षे लिट् ( ३.२.११५ ) इति लिटा लङः समावेशोऽसारूप्यात्सिद्ध इति किं लड्विधानेन ॥ शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिर्लिटः कानज्वा ( ३. २. १०६ ) इति वाग्रहणं च कृतम् । तज्ज्ञापयति वासरूपसूत्रेऽपवाद आदेशत्वानाक्रान्तः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम् । तत्फलं तु सदादिभ्यो भूतसामान्ये लिटः क्वसुरेव न तु पक्षे तिङ् इति बोध्यम् ॥ ६९ ॥

---

१ B बाध इति.
२ B. भोक्तुमित्यर्थेलि°.
३ B कृत्यतृचोर्ग्रहण.
४ B. स्पष्टेषा. G. H. एषा स्पष्टा.
५ C. G. H. om. लिट् इति.
६ B. °सिद्ध इति.
७ B. C. पक्षे तिङिति. G. पक्षे तिङेति.

ननु ङमो ह्रस्वात् ( ८. ३. ३२ ) इत्यादौ ङमः परस्याचो ऽचि परतो ङम इति वेति संदेहः स्यादत आह ।

**उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७० ॥**

अचीति सप्तमीनिर्देशस्य मय उञः ( ८. ३. ३३ ) इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशो ऽनवकाश इति तस्मादित्युत्तरस्य ( १. १. ६७ ) इत्यस्यैव प्रवृत्तिः । यत्र तु डः सि धुट् ( ८. ३. २९ ) इत्यादावुभयोरप्यचारितार्थ्यं तत्र तस्मिन् ( १. १. ६६ ) इति सूत्रापेक्षया तस्मादित्युत्तरस्य ( १.१.६६ ) इत्यस्य परत्वात्तेनैव व्यवस्था । एवमुभयोश्चारितार्थ्ये ऽपि यथामि सर्वनाम्नः ( ७.१.५२ ) इत्यादौ । तत्रामीति सप्तमी त्रेस्त्रयः ( ७. १. ५३ ) इत्यत्र चरितार्था । आदिति पञ्चम्याज्जसेरसुक् ( ७. १. ५० ) इत्यत्र चरितार्थेति स्पष्टं तस्मिन्निति सूत्रे भाष्ये कैयटे च ॥ ७० ॥

नन्वतः कृकमि ( ८. ३. ४६ ) इति सत्वमयस्कुम्भीत्यत्र न स्यात्कुम्भशब्दस्यैवोपादानादत आह ।

**प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् ॥ ७१ ॥**

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम् । अपिना केवलस्यापीत्यर्थः ॥

---

अयस्कुम्भीति । प्रातिपदिकग्रहणपरिभाषावतरणे अयस्कुम्भीत्युदाहरणं न स्यात् । कुम्भशब्दस्यैवोपादानादिति । न च कुम्भीत्यत्र ङीबुत्पत्तेः प्राक् कुम्भ इति स्थित एवेति न कश्चिद् दोष इति वाच्यम् । समासे सत्वस्य विधानात् कुम्भशब्दे इत्यस्य उत्तरपदे कुम्भशब्दे इत्यर्थस्य स्वीकर्तव्यत्वात् अत्र कुम्भशब्दोत्तरपदत्वाभावात् इति अवतरणं न युज्यते इति दोषः । अपिनेति । केवलस्यापि ग्रहणं कर्तव्यमिति भावः । अत्रेदं बोध्यम् । यथा कृद्ग्रहणपरि-

---

१ B. C. G. P. ङम् इति वेति संदेहः ; P mentions the reading ङमो वेति संदेहः. H. ङम इति चेति.

२ C. G. H. इत्यत्र कृतार्था.

३ B. आत इति.

४ B. om. भाष्ये.

५ C. G. °शब्दस्योपादानादत आह.

६ B. प्रातिपदिकशब्दग्रहणे सति

७ B. लिङ्गबोधकस्य प्रत्यय°

अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे कुमारः श्रमणादिभिः (२.१.७०) इति सूत्रे [1]स्त्रीलिङ्गश्रमणादिशब्दपाठः । स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न [2]तु कुमारशब्दस्येति [3]तदेतज्ज्ञापकम् ॥ इयं च द्विषत्परयोः ( ३. २. ३९ ) इत्याद्युपपदविधौ समासान्तविधौ महदात्वे [4]ञ्नित्स्वरे [5]राज्ञः स्वरे ब्राह्मणकुमारयोर्बह्वोर्नञ्स्वदुत्तरपदभूम्नि (६. २. १७५) इत्यादौ समाससंघातग्रहणेषु च न प्रवर्तत इति व्याप्सूत्रे भाष्ये स्पष्टम् । विभक्तिनि[6]मित्तकार्ये च नेत्यपि तत्रैव ॥ तत्र समासान्तविधाववयवग्रहण एव न समाससंघातग्रहणे तु प्रवर्तत एव स्वरविधावेव समाससंघातग्रहणे नत्र दोषो-

---

भाषायां गतिकारकसमभिव्याहारे विशिष्टस्य ग्रहणम्, अपिशब्दात्तदसमभिव्याहृतस्य केवलस्य ग्रहणमिति तथैवात्र स्वीक्रियते । आवश्यकं चैतत् । अन्यथा शुनीत्यत्र ङीप्समभिव्याहारे केवलस्य ग्रहणाभावे संप्रसारणं न स्यादिति । इष्यते च संप्रसारणम् । अतः एतादृशं स्वीक्रियते इति । इयं च द्विषत्परयोरिति । उदाहरणानि भैरव्यां स्फुटानि । तत्र समासान्तेति । समासान्तविधावयवग्रहणे एव न । समाससंघातग्रहणे तु प्रवर्तत एव । एतद्विषये प्रमाणमाह— स्वरविधावेवेति । पूर्वं सामान्यत उक्तं समासान्तविधौ परिभाषा नेति । ततः स्वरविधौ समाससंघातग्रहणे नेति । तत्रापि सामान्यतः स्वरविधौ समासे नेत्युक्ते समाससंघात इत्यस्य सिद्धौ समाससंघातग्रहणादेवमवगम्यते । समाससंघातग्रहणे प्रवर्तत एवेति सिद्धम् । अस्य फलं तु अतिभ्रातृक इति । अतिशयिताः भ्रातरः अस्यां नगर्यां सा अतिभ्रात्री । अत्र वन्दिते भ्रातुरिति निषेधान्न कप् । ततः अः अतिभ्रात्री यस्य सः अतिभ्रात्रिः । अत्र परादिवद्भावे अतिभ्रात्री इत्यस्योत्तरपदत्वेन वन्दिते भ्रातुरिति निषेधः । अत्र समाससंघातग्रहणे परिभाषाप्रवृत्तिस्वीकाराद् भ्रात्रीति लिङ्गविशिष्टस्य ग्रहणेन वन्दिते भ्रातुरिति

---

१ B. स्त्रीलिङ्गः श्रमणादिशब्दपाठः

२ B. G. H. om. तु.

३ B. C. G. तज्ज्ञापकम्.

४ C. ञित्स्वरविधौ. G H. ञिन्स्वरविधौ.

५ B. C. G. राजस्वरे.

६ B. °निमित्तककार्ये.

के: । बहुव्रीहेरूधसः (४. १. २५) इति सूत्रभाष्याच्च ॥ एतावत्त्वेवानित्यत्वादप्रवृत्तिदोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः ॥ नन्वेवं बहुव्रीहेरूधसो ङीष् ( ४. १. २५ ) इति सूत्रस्थभाष्यासंगतिः । तत्र हि कुण्डोघ्नीत्यत्र नद्यृतश्च ( ५.४.१५३ ) इति कबापादितो नद्यन्तबहुव्रीहिरित्यर्थात् । नद्यन्तस्य बहुव्रीहित्वाभावात्तदसंगतिः । नद्यन्तानां यः समास इत्यर्थेन च परिहृतम् । नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इतीति चेत् । न । अनया

निषेधः सिध्यतीति। अपरमप्यत्र प्रमाणमस्तीत्याह—बहुव्रीहेरिति। एतच्चाग्रे स्फुटं भवेत् । अन्यदपि प्रमाणमाह –एतावत्त्वेवेति । बहुव्रीहेरूधसो ङीष् इति सूत्रस्थभाष्य प्रकारान्तरेण दर्शयति--नन्विति। कबापादित इति। आपादनं च यथा। नद्यृतश्चेति सूत्रे वाक्यार्थद्वयं संभवति । नद्यन्तो यो बहुव्रीहिः तस्मात्कप् प्रत्ययो भवति। कुण्डोघ्नीत्यत्र कबापादितः। उत्तरं च अपरेण वाक्यार्थेन। नद्यन्तानां यः समासः तत्र कप् भवति। अत्र नद्यन्तेन बहुव्रीहित्वाभावाच्च कप् इति। परंतु कबापादनं न युज्यते। कुण्डोघ्नीति नद्यन्तस्य बहुव्रीहित्वं वक्तव्यम् । तच्च वक्तुं न पार्यते । कुतः । यस्य बहुव्रीहिरिति संज्ञा कुण्डोघ्नन् इत्यस्य तस्य न नद्यन्तत्वं, यस्य च नद्यन्तत्वं न तस्य बहुव्रीहित्वम्। न च प्रातिपदिकेति परिभाषया नद्यन्तस्य बहुव्रीहित्वं सुवचमिति वाच्यम्। सा हि परिभाषा न धर्मग्राहिका। किं तु विशिष्टस्य ग्रहणं कर्तव्यमिति सूचयति। अतः कथमापादनम्। तदुपरि एवमुत्तरम्--तया परिभाषया धर्मा आनीयन्ते इति। परंतु अत्रेयं शङ्का--बहुव्रीहित्वधर्मः न प्रातिपदिकव्याप्यः इति कथमतिदेशः। तस्य सुबन्तसमुदायनिष्ठत्वेन प्रातिपदिकत्वाभावात् इत्याभिप्रायः शङ्काकारस्य। वस्तुतः सुबन्तसमुदायनिष्ठमपि बहुव्रीहित्वं प्रातिपदिकव्याप्यं भवत्येवेति कृत्तद्धितेति सूत्रेण समासस्य प्रातिपदिकत्वविधानात्संभवत्येव तस्य तत्त्वम्। परंतु नेदं युक्तमत्र समासान्तविधौ परिभाषाया अभावादिति। अतः अस्माद् भाष्यात्समाससंपातग्रहणे परिभाषाप्रवृत्तिः स्वीक्रियते इति युज्यते भाष्यम्। एवं च अस्माद् भाष्यात् समासान्तविधौ अवयवग्रहणे न, समाससंपातग्रहणे तु प्रवर्तत एवेति सिद्धमिति दिक् ॥ ७१ ॥

१ C. साकल्येन गणिताः.

२ B. H. om. च.

३ B. इति चेत्.

परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तैद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टे ऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात् ॥ ७१ ॥

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि श्वयुव ( ६. ४. १३ ३) इति संप्रसारणं स्यादत आह ।

## विभक्तौ लिङ्गविशिष्टाग्रहणम् ॥ ७२ ॥

³एषा चेयं युवोरनाकौ ( ७. १. १ ) इत्यत्र भाष्ये । घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तैन्मूलैवेत्यन्ये ॥ ७२ ॥

ननु तस्यापत्यम् (४. १. ९२) इत्येकवचननपुंसकाभ्यां निर्देशाद्गार्ग्यौ गार्ग्या इत्याद्यनुक्तमत आह ।

## सूत्रे लिङ्गवचनमतन्त्रम् ॥ ७३ ॥

अर्धं नपुंसकम् (२. २. २) इति नपुंसकग्रहणमस्या ज्ञापकम् । नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम् ॥ धान्यपलालन्यायेन नान्तरीयकतया तयोरुपादानमिति तस्यापत्यमित्यत्र भाष्ये स्पष्टम् ॥ अत एवाकडारसूत्र एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७३ ॥

ननु भृशादिभ्यो भुव्यच्वेः ( ३.१.१२ ) इत्यादौ विधीयमानः क्यङ् कदिशा भृशा भवन्तीत्यत्रापि स्यादत आह ।

## नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७४ ॥

नञ्युक्तमिवयुक्तं च यत्किंचिद्दृश्यते तत्र तस्माद्भिन्ने तत्सदृशे ऽधिकरणे

---

यूनः पश्येति । अत्र विस्तरो भैरव्यां द्रष्टव्यः ॥ ७२ ॥ ७३ ॥

नञिवयुक्तमिति नञिवयुक्तन्यासः किमर्थमुक्त इति चेदुच्यते । लोके

---

१ B तद्रहितदृष्टानां

२ B. प्रातिपदिकत्वव्याप्यधर्माणां लिङ्गविशिष्टे.

३ B. इयं स्पष्टा

४ B. C. G. H. °त्तन्मूलैवेत्यन्ये.

५ B. originally °द्गार्ग्यौ गार्ग्या इत्या°, which has been altered to °द्गार्ग्यो गार्ग्या इत्या°.

६ B. °युक्तमित्यत आह.

७ B. नपुंसकार्थं.

८ C. अत एवाकडार इति सूत्रे. G. अत एवाकडारादिति सूत्रे.

९ B. H. इति विधीयमान.

द्रव्ये कार्यं विज्ञायते हि यतस्तथार्थगतिरिति । न ह्यब्राह्मणमानयेत्युक्ते लोष्ठमानीय कृती भवति । अतश्च्व्यन्तभिन्ने च्व्यन्तसदृशेऽभूततद्भावविषये क्यङिति नोक्तदोषः ॥ ओषधेश्च विभक्तावप्रथमायाम् ( ६. ३. १३२ ) इत्यादौ विभक्तिग्रहणा[1]द्येतन्न्यायसिद्धार्थानुवाद एव । एते[2]न विभक्ता[3]वित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ता अनित्यत्वे भाष्यसंमतफलाभावात् । अत एवाकर्तरि च ( ३. ३. १९ ) इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति बोध्यम् ॥ स्पष्टा चेयं भृशादिभ्यः ( ३. १. १२ ) इति सूत्रे भाष्ये ॥ अत्रान्यसदृशेत्युक्तया सादृश्यस्य भेदाघटितत्वं सूचयति । निरूपितं चैतन्मञ्जूषायाम् ॥७४॥

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाट्टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादत आह ।

**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥७५॥**

उपपदम् ( २. २. १९ ) इति सूत्रेऽतिङ्ग्रहणेन कुगति ( २. २.१८ ) इत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुपे[4]त्यस्य निवृत्त्येकदेशानुमत्या कारकांशे च सिद्धेयं तेनाश्वक्रीतीति[5] सिद्धा । अन्यथा पूर्वं टाप्यदन्तत्वाभावात्क्रीतात्करणपूर्वात् ( ४. १. ५०. ) इति ङीष् न स्यात् ॥ अ[6]थवा अनित्यत्वात्क्वचित्सुबुत्पत्त्यनन्तरमपि समासो यथा सा हि तस्य धनक्रीते-

नञ्स्थले भेदघटितं सादृश्यं गृह्यते । इवशब्दे तु न तथा । तथा भेदघटितमेव उभयत्र ग्राह्यमित्यस्य स्वीकारः ॥ सादृश्यं भेदाघटितमप्यत्र शास्त्रे इवशब्देनापि भेदघटितमेव ग्राह्यमित्युच्यते । अस्यार्थस्य लोके अभाव एव । अतः अनेन न्यायेन तदुच्यत इति सादृश्यं भेदाघटितमपि लोके वर्तत इति भाष्यकारः सूचयति इति । सादृश्यस्य भेदाघटितत्वमपीति तदर्थः । अस्योदाहरणं तु गगनं गगनाकारमिति बोध्यम् । ॥ ७४ ॥

१ B °ग्रहणमेतन्न्याय°. G °ग्रहणं ह्येत°. H. °न्यायेन सिद्धार्था.
२ B C. तेन.
३ B. विभक्तावित्यस्या°.
४ B. C. G. H. सुप्सुपेत्यस्य; P. mentions this reading.
५ B. G. H. om. इति.
६ B. अस्यानित्य°

ति । अन्ये त्वनित्यत्वे न मानं तत्राजादित्वाद्दाबित्याहुः । अत एव कुम्भकार इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव । षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमित्युपपदम् ( २. २. १९ ) इति सूत्रे भाष्ये स्पष्टम् । तत्र हि षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्तिकम् । अथवा विभाषा षष्ठीसमासो यदा न षष्ठीसमासस्तदोपपदसमास इति तत्प्रत्याख्यानं च । यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं न वा षष्ठीसमासाभावादुपपदसमास इति वार्तिककृतोक्तं तथापि तदुभयप्रत्याख्यानपरमथवेत्यादि भाष्यम् । परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समासमात्रस्य सुबुत्पत्तेः

---

अनित्यत्वे न मानमिति । गतिकारकेति परिभाषाया अनित्यत्वे न मानमिति । परं त्वेतदयुक्तम् । अनित्यत्वे ज्ञापनस्य वक्तुं शक्यत्वात् । तथा हि । अम्बाम्बेतिसूत्रे गवादिग्रहणं न कर्तव्यम् । तद्धि गोष्ठ इत्यादौ षत्वार्थं क्रियते । परंतु तन्न कर्तव्यं भवति । कुतः । गतिकारकेति परिभाषया सुबुत्पत्तेः प्राक्समासे कृते सात्पदाद्योरिति षत्वनिषेधाभावेन गोष्ठ इत्यादिरूपाणां सिद्धौ सत्यां तदर्थं गवादिग्रहणमनर्थकं ज्ञापयति—इयं परिभाषा अनित्येति । यदि च गवादिग्रहणं न क्रियते तर्हि सुबन्तेन समासस्य सत्त्वात् सात्पदाद्योरिति निषेधात् षत्वं न स्यादिति तदावश्यकम् । अन्यत्रफलं—सा हि तस्य धनक्रीतेति । परंतु तदपि न । तत्र नियमोऽस्ति उत्तरपदभूतस्य षत्वं यदि स्यात् तर्हि एभ्यः परस्यैव इति नियमात् । तेन हृदिस्थ इत्यत्र न भवति । एवं च गवादिग्रहणस्य नियमार्थत्वेन चारितार्थ्यान्न ज्ञापकमिति दिक् । अत एवेति । अत एव नाम अस्यां परिभाषायां कारकांशस्य सत्त्वादेव । भाष्ये स्पष्टमिति । तथा हि कुम्भकार इत्यत्र षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वं भवतीति सिद्धम् । सुबुत्पत्तेः पूर्वं भवतीत्येतद्विषये प्रमाणमाह—तत्रेति । आदौ वार्तिकं षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति । तस्यायमाशयः—उपपदमतिङ् इति सूत्रे सुप् सुपा इति पदद्वयं वर्तते तदानीं षष्ठीसमासः प्राप्त उपपदसमासश्च प्राप्तः । वार्तिकमिति । न वेति । उपपदसमास एव परत्वाद्भवतीति विप्रतिषेधशास्त्रमूलकमेतद्वार्तिकम् । ततः परं न वा पूर्ववार्तिकं कर्तव्यम् । षष्ठीसमासाभावात् उपपदसमास इति । अस्यायमाशयः 'उपपदमतिङ्' इति सूत्रे सुपा इत्यस्य निवृत्तिः

---

१ C. B. G. H. इत्यत्र.

२ B. om. च.

३ B. समासमात्रस्य.

पूर्वमेव लाभात् ॥ एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम् । अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत्कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थलाभाच्च ॥ ७५ ॥

ननूगिदचाम् ( ७. १. ७० ) इत्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेनाधातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह ।

## सांप्रतिकाभावे भूतपूर्वगतिः ॥ ७६ ॥

तद्वचनसामर्थ्यन्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्यापीत्यर्थेन गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः । नामि ( ६. ४. ३. ) इत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७६ ॥

## बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७७ ॥

अपिनातद्गुणसंविज्ञानम् । तेषां गुणानामवयवपदार्थानां संविज्ञानं विशेष्यान्वयित्वमिति तदर्थः ॥ यत्र समवायसम्बन्धेन संबन्ध्यन्यपदार्थस्तत्र प्रायस्तद्गुणसंविज्ञानम् । अन्यत्र प्रायोऽन्यत् ॥ लम्बकर्णचित्रगू उदाहरणे । सर्वादीनि

एवं च तदानीं षष्ठीसमासस्य प्राप्त्यभावेन उपपदसमासस्यान्तरङ्गत्वाभिप्रायकं द्वितीयं वार्तिकम् । 'अथवा०' इति भाष्यमुभयोर्वार्तिकयोः प्रत्याख्यानपरम् । तथा हि । प्रथमस्य यथा--उपपदमतिङ् इति सूत्रे सुपा इत्यस्य निवृत्तिः । तथा च किंच सिद्धिः । कथं तर्हि षष्ठीसमासस्य वैकल्पिकत्वाद्यदा न षष्ठीसमासस्तदोपपदसमासः । एवं च विरोधाभावान्न वार्तिकारम्भः कर्तव्यः इति प्रथमस्य प्रत्याख्यानम् । एतेन षष्ठीसमासः सुबुत्पत्तेः पूर्वं सत्त्वेन नान्तरङ्गत्वमुपपदसमासस्येति खण्डनं तस्येति तदपि न कर्तव्यमिति तस्यापि प्रत्याख्यानम् ॥ ७५ ॥

१ B. H. °तद्विशेषोपादान.
२ B. विध्येकवाक्यत्वा°
३ B. °र्थलाभाच.
४ C. नुम् सिद्धे.
५ B. एतत्साम°.
६ B. स्पष्टम्.
७ B. H. and Rāghavendra विशेष्यान्वयित्व°; P. mentions this reading C. G. P. विशेष्यान्वयिनान्वयित्व°.
८ B. समवायसंयोगसंबन्धान्यतरसम्बन्धेन.
९ B °चित्रगु. G. लम्बकर्णचित्रगु उदा°

( १. १. २७ ) जक्षित्यादयः ( ६. १. ६. ) इति चोदाहरणे ॥ सर्वनामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७७ ॥

ननु वदः सुपि क्यप् च ( ३. १. १०६ ) इति चेनानुकृष्टस्य यतो भुवो भावे ( ३. १. १०७ ) इत्यत्राप्यनुवृत्तिः स्यादत आह ।

## चानुकृष्टं नोत्तरत्र ॥ ७८ ॥

णमुल्यनुवर्तमानेऽन्यये ऽयथाभिप्रेता ( ३. ४. ९ ) इति सूत्रे पुनर्णमुल्ग्रहणमस्या ज्ञापकम् । अन्यथा क्त्वा चेति ब्रूयात् । तद्धयुत्तरत्रोभयोः संबन्धार्थम् । उदाहरणानि स्पष्टानि ॥ इदमनित्यम् । अत एव तृतीया च होः ( २. ३. ३. ) इत्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तरान्तरेण ( २. ३. ४. ) इत्यत्र संबन्धः ॥ लुटि च क्लृपः ( १. ३. ९३ ) इति सूत्रस्थेनानुवृत्त्यर्थसकलचकारप्रत्याख्यानेन विरुद्धेयम् । व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः ॥ कुलिजाल्लुक्खौ च ( ५. १. ५५ ) इति सूत्रस्थभाष्यविरुद्धा च । तत्र हि द्विगोः ष्ठंश्च ( ५. १. ५४ ) इति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य खोऽन्यतरस्यामित्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम् ॥ ७८ ॥

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह ।

## स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ७९ ॥

स्वरोद्देश्यके विधाविन्यर्थः ॥ नोत्तरपदेऽनुदात्तादावपृथिवीरुद्रपूषमन्थिषु ( ६. २. १४२ ) इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः । अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ॥ धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम् । अत एव शतुरनुमो नद्यजादी ( ६. १. १७३ ) अचः कर्तृयकि (६. १. १९५) इत्यादावजादी अच इत्यादेश्चारि-

१ B. स्पष्टेना.
२ C. °नुवृत्त्यर्थचकार°.
३ B. C. G. H. तदाशयात्.
४ C. भाष्यविरुद्धाच; B. °भाष्यविरोधाच.
५ C. चेनाप्यनुकृष्टस्य.
६ P. C. °मित्यनु°; B. G. °मित्यस्यानु°; P mentions the last reading
७ C. om. भाष्ये.
८ B. G. H. इत्यादीनां चारितार्थ्यम्.

## निरनुबन्धकग्रहणे न[1] सानुबन्धकस्य ॥ ८१ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य[2] ॥ ८२ ॥

वामदेवाड्ड्यड्ड्यौ ( ४. २. ९ ) इति सूत्रे ड्यड्ड्यतोर्डित्त्वमनयोर्ज्ञापकम्। तद्धि ययतोश्चातदर्थे ( ६. २. १५६ ) इत्यत्र[3] तयोरग्रहणार्थम्। नञः परस्य ययदन्तस्योत्तरपदस्या[4]न्त उदात्त इति तदर्थः। एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति ॥ त[5]न्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः ॥ एते च प्रत्यया[6]प्रत्ययसाधारणे दिव औत् ( ७. १. ८४ ) इत्यादौ सचारितत्वात् ॥ वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टं[7] मौङ आपः ( ७. १. १८ ) इत्यत्र भाष्ये ॥ येनानुबन्धेन सानु[8]बन्धकत्वमनुबन्धकत्वादि वा तदनुच्चारण एवैषा धर्मिग्राहकमानात्। तेन जश्शसोः ( ७. १. २० ) इत्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम्। एवमन्त्यान्यतरानुबन्धोच्चारण एव। तेन वनो र च ( ४. १. ७ ) इत्यादौ ङ्व[9]निप्क्वनिपोर्ग्रहणसिद्धिः ॥ ए[10]कानुबन्धकग्रहणे समवतीति त्वर्थो न भाष्यादिसंमत इत्यन्यत्र विस्तरः ॥ ८२ ॥

ननु कु[11]टीर इत्यादौ स्वार्थिकत्वात्स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिरेकत्वमित्यत्र नपुं[12]सकत्वैकवचनयोरनुपपत्तिश्चेत्यत आह।

१ B H न सानुबन्धकस्य ग्रहणम् ॥
२ B H. नातदनुबन्धकस्य ग्रहणम् ॥
३ B H. इत्यत्रानयोर°, P. reads तयो and mentions the reading अनयोः
४ B. °पदस्यान्तोदात्त इति, C. °पदस्यान्तोदात्तमिति.
५ C. G. तन्मात्रस्यानुबन्धग्रहणे.
६ B H °त्ययग्रहणसाधारण दिव औदित्यादौ भाष्ये स°.
७ B om. स्पष्टम्.
८ B H सानुबन्धत्व
९ B G H. ङ्वनिप्कनिपो°
१० B. एकानुबन्धग्रहणे समवतीति तु नार्थो भाष्याद्यसंमतत्वादित्यन्यत्र
११ H. कुटीरेत्यादौ.
१२ C. नपुंसकैकवचन°.

तात्पर्यम् । अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तोऽवत्याः ( ६. १. २२० ) इति स्वरो नोदश्वित्वानित्यत्र ह्रस्वनुड्भ्याम् ( ६. १. १७६ ) इति मतुबुदात्तत्वं नेत्याकरः ॥ स्पष्टं चेदं समासस्य ( ६. १. २२३ ) इति सूत्रे भाष्ये ॥ उच्चैरुदात्तः ( १. २. २९ ) इति सूत्रे कैयटस्त्वियमनावश्यकी समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह । तत्र भाष्ये ऽपि ध्वनितमेतत् ॥ ७९ ।

नन्वेवमपि राजदृषदित्यादौ समासस्य ( ६. १. २२३ ) इत्यन्तोदात्तत्वं पकाराकारस्य न स्यादत आह ।

## हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥

अस्याश्च यतोऽनावः ( ६. २. २१३ ) इति सूत्रे नौप्रतिषेधो ज्ञापकः । नाव्यमित्यत्रादिर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधो ऽनर्थकः ॥ न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाच्रूपोऽस्त्विति वाच्यम् ॥ तथा सति निमित्तभूतव्यञ्जकत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः ॥ स्पष्टा चेयं समासस्य ( ६. १. २२३ ) इति सूत्रे भाष्ये ॥ ८० ॥

ननु पूरणगुण ( २. २. ११ ) इति निषेधस्तव्यत्यपि स्यात् । दिव औत् ( ७. १. ८४ ) इत्यौत्वं दिवेः क्विप्यपि स्यात् । तथा यतोऽनावः ( ६. १. २१३ ) इति स्वरो ण्यत्यपि स्यात् । ऋदृशो ऽङि गुणः ( ७. ४. १६ ) इति चङ्यपि स्यात् । अत आह ।

---

उच्चैरुदात्त इति सूत्रस्थकैयटस्त्विति । इयं न कर्तव्या । कुतः । समभिव्याहृतं अजुपरागेण हलोपि उदात्तत्वाद्यवभासात् । अवभासो यथा—उच्चैरुदात्त इत्यादिभिः सूत्रैः अजुच्चारणं उच्चैः नाम ऊर्ध्वदेशे उच्चारितमुदात्तसंज्ञकं भवति । एवं च हल्विशिष्टस्य अचः उच्चारणात् हलोपि ऊर्ध्वभागे उच्चारणं भवति इति उपरागो भवति ॥ ७९ ॥ ८० ॥

---

१ B. C. G. °दात्तत्वं च नेत्याकरः.

२ B. om. भाष्ये.

३ B. नौप्रतिषेधो ऽस्या ज्ञापकः.

४ B. H. उदात्तविशिष्ट°.

५ C. °भूतव्यञ्जकस्य.

६ B. C. G. H. दात्तताऽप्राप्तेरि°.

## निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८१ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८२ ॥

वामदेवाड्ड्यड्ड्यौ ( ४. २. ९ ) इति सूत्रे ड्यड्यतोर्डित्त्वमनयोर्ज्ञापकम्। तद्धि ययतोश्चातदर्थे ( ६. २. १५६ ) इत्यत्र तयोरग्रहणार्थम्। नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः। एवं चावामदेव्ये ऽव्ययपूर्वपदप्रकृतिस्वर एव भवति ॥ तन्मात्रानुबन्धकग्रहणे स चान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्यार्थः ॥ एते च प्रत्ययाप्रत्ययसाधारणे दिव औत् ( ७. १. ८४ ) इत्यादौ सचारितत्वात् ॥ वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टं औङ आपः ( ७. १. १८ ) इत्यत्र भाष्ये ॥ येनानुबन्धेन सानुबन्धकत्वं ध्यनुबन्धकत्वादि वा तदनुच्चारण एवैषा धर्मिग्राहकमानात्। तेन जश्शसोः ( ७. १. २० ) इत्यत्र नैषेति निरनुबन्धकत्वाच्छद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम्। एवमन्यथान्यतरानुबन्धोच्चारण एव। तेन वनो र च ( ४. १. ७ ) इत्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धिः ॥ एकानुबन्धकग्रहणे सम्भवतीति त्वर्थो न भाष्यादिसमत इत्यन्यत्र विस्तरः ॥ ८२ ॥

ननु कुटीर इत्यादौ स्वार्थिकत्वात्स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिः कल्पमित्यत्र नपुंसकत्वैकवचनयोरनुपपत्तिश्चेत्यत आह।

१ B H न सानुबन्धकस्य ग्रहणम् ॥
२ B H नातदनुबन्धकस्य ग्रहणम् ॥
३ B H इत्यत्रानयो°, P reads तयो and mentions the reading अनयो
४ B °पदस्यान्तोदात्त इति, C °पदस्यान्तोदात्तमिति
५ C G तन्मात्रकानुबन्धग्रहणे
६ B H °त्ययप्रत्ययसाधारण दिव औदित्यादौ भाष्य स°
७ B om. स्पष्टं
८ B H सानुबन्धत्व
९ B G H वनिप्क्वनि°
१० B एकानुबन्धग्रहणे सम्भवतीति तु नाथो भाष्यादिसमतत्वादित्यन्यत्र
११ H कुटीरेत्यादौ
१२ C. नपुंसकैकवचन°

तात्पर्यम् । अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तोऽवत्याः ( ६. १. २२० ) इति स्वरो नोदश्चित्वानित्यत्र ह्रस्वनुड्भ्याम् ( ६. १. १७६ ) इति मंतुबुदात्तत्वं नेत्याकरः ।। स्पष्टं चेदं समासस्य ( ६. १. २२३ ) इति सूत्रे भाष्ये ।। उच्चैरुदात्तः ( १. २. २९ ) इति सूत्रे कैयटस्त्वियमनावश्यकी समभिव्याहृताजुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह । तत्र भाष्ये ऽपि ध्वनितमेतत् ।। ७९ ।

नन्वेवमपि राजदृषदित्यादौ समासस्य ( ६. १. २२३ ) इत्यन्तोदात्तत्वं षकाराकारस्य न स्यादत आह ।

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ।। ८० ।।

अस्याश्च यतोऽनावः ( ६. २. २१३ ) इति सूत्रे नौप्रतिषेधो ज्ञापकः । नाव्यमित्यत्रादिर्नकारो न स्वरयोग्यो यथाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधो ऽनर्थकः ।। न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाच्रूपोऽस्त्विति वाच्यम् ।। तथा सति निमित्तभूतैकाच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः ।। स्पष्टा चेयं समासस्य ( ६. १. २२३ ) इति सूत्रे भाष्ये ।। ८० ।।

ननु पूरणगुण ( २. २. ११ ) इति निषेधस्तव्यत्यपि स्यात् । दिव औत् ( ७. १. ८४ ) इत्यौत्त्वं दिवेः क्विप्यपि स्यात् । तथा यतोऽनावः ( ६. १. २१३ ) इति स्वरो ण्यत्यपि स्यात् । ऋदृशो ऽङि गुणः ( ७. ४. १६ ) इति चङ्यपि स्यात् । अत आह ।

---

उच्चैरुदात्त इति सूत्रस्थकैयटास्त्विति । इयं न कर्तव्याः । कुतः । समभिव्याहृतं अजुपरागेण हलोपि उदात्तत्वाद्यवभासात् । अवभासो यथा---उच्चैरुदात्त इत्यादिभिः सूत्रैः अजुच्चारणं उच्चैः नाम ऊर्ध्वदेशे उच्चारितमुदात्तसंज्ञकं भवति । एवं च हल्विशिष्टस्य अचः उच्चारणात् हलोपि ऊर्ध्वभागे उच्चारणं भवति इति उपरागो भवति ।। ७९ ।। ८० ।।

---

१ B. C. G. °दात्तत्वं च नेत्याकरः.
२ B. om. भाष्ये.
३ B. नौप्रतिषेधो ऽस्या ज्ञापकः.
४ B. H. उदात्तविशिष्ट°.
५ C. °भूतद्व्यच्कस्य.
६ B. C. G. H. दात्तत्वाऽप्राप्तेरि°.

निमित्तम् ॥ उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा ॥ अत एवात्र संनिपातशब्देन न पूर्वपरयोः संबन्ध एव किंतु विशेष्यविशेषणसंनिपातोऽपि गृह्यते। अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वेऽपि पिति कृति (६. १. ७१) इति तुग्[1] प्रातिपदिकाजन्तत्वसंनिपातेन जातस्य ह्रस्वस्य तदवि-

आतोधमस्मद्बन्धुरेव ह्रस्वयमापि अनयोः संबन्धरक्षणे यतेत इति सा तुममनुमतिं ददातीति संभवति। तमुद्दिश्य षट्संज्ञा तु न भवति। या या संज्ञा सा सा फलवतीति न्यायेन तस्याः शत्रुपक्षीयत्वात्। इति न षट्संज्ञा नापि लुक्। एवं च शतानीत्यस्य सिद्धिः॥ उपादास्तेत्यत्र द्वयोः संबन्धं निमित्तीकृत्य जातो य आकारः स स्वजनकयोः प्रकृतिप्रत्यययोः--आकित् प्रत्ययः प्रकृतिश्च तयोः--संबन्धस्य विघातकं कित्त्वं न प्रयोजयति॥ न च मा भूत् कित्वस्य निमित्तं, इत्वस्य तु भवेदेवेति इत्वे कृते गुणे च उपादेस्त इति स्यात्। एवं च भाष्योक्तस्य उपादास्त इति रूपस्यासिद्धिरिति चेन्न। कित्वस्य इत्वस्य च संनियोगशिष्टत्वेन कित्वाभावे इत्वमपि नेति न दोषः इति दिक्॥ अत्रेदं बोध्यम्। यथा लोके द्वयोः संबन्धमुद्दिश्य जातः पुत्रः स्वतः न तं संबन्धं विहन्ति, विघातकस्य निमित्तं न भवति, तद्विघातनिमित्तस्यापि नायं निमित्तं भवति एवमेव परंपरयापि निमित्तविनाशो ग्राह्यः इति सिद्धम्। तथा च द्वयोर्विश्लेषमपि अयं न सहते, एतेन संबन्ध उक्तः। पित्रभावे अहं द्रव्यादिना त्वां तोषयामि इत्युक्तेपि न सः अङ्गी करोति। एतेन आतिदेशिकत्वानिवृत्तिः। अस्मिन् शास्त्रे लोके च परिकिंचिद्भेदः। संबन्धनिमित्ते सति संबन्धिनो नाशेपि परिभाषा न प्रवर्तते इति। वस्तुतः संबन्धनिमित्ते सति शतशः संबन्धातिदेशेपि परिभाषा प्रवर्तते। अकृतव्यूहपरिभाषा तु एतद्विरुद्धा। नित्यं निमित्तविनाश एवेति सा प्रवर्तते इति। अत एवेति। न्यायमूलकत्वादेव नात्र पौर्वापर्यसंबन्ध एव गृह्यते, किंतु विशेषणविशेष्यभावोपि। न हि संकोचविषये प्रमाणमस्ति। एवं च असति बाधके प्रमाणानां सामान्ये पक्षपातः इति न्यायेन सामान्यं स्वीक्रियते इति। अन्यथा उपजीव्यविरोधः। पौर्वापर्यसंबन्धनाशेन विशेषणविशेष्यभावसंबन्धनाशेनापि भवति। अतः उभयं स्वीक्रियते इति। अत एवेति। विशेषणविशेष्यभावसंबन्धे परिभाषास्वीकारादेव ग्रामणिकुलमिति सिध्यति। नायं समासः। तत्र नपुंसकार्थप्रातिपदिकं अजन्तत्वं च एतयोः संबन्धमुद्दिश्य जातस्य ह्रस्वस्य तद्विघातकस्य तुगागमस्य तुकि कृते

[1] B. C. G. H. P. प्रातिपदिकाजन्तसंनिपातेन; P. says that some read प्रातिपदिकाजन्तसंनिपातेन.

## क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ॥ ८३ ॥

णचः स्त्रियाम् ( ५. ४. १४ ) इति सूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका । अन्यथा कर्मव्यतिहारे णच् स्त्रियाम् ( ३. ३. ४३ ) इति स्त्रियामेव विधानात्किं तेन ॥ स्पष्टा चेयं बहुव्रिधायके भाष्ये ॥ ८३ ॥

ननु सुपथी नगरीति युवोरनाकौ ( ७. १. १ ) इति सूत्रभाष्योदाहृत इनः स्त्रियाम् ( ५. ४. १५२ ) इति कप्स्यादत आह ;

## समासान्तविधिरनित्यः ॥ ८४ ॥

प्रतेरंश्वादयस्तत्पुरुषे ( ६. २. १९३ ) इत्यन्तोदात्तत्वार्थाश्वादिषु राजञ्शब्दपाठोऽस्या ज्ञापकः । अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन ॥ द्वित्रिभ्यां पादन्मूर्धसु ( ६. २. १९७ ) इति स्वरविधायके भाष्ये स्पष्टेयम् ॥ ८४ ॥

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति ततश्च लुक् स्यात्तथोपादास्तेत्यत्रात्वे कृते स्थाघ्वोरिच्च ( १. २. १७ ) इतीत्वं प्राप्नोत्यत आह ।

## संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८५ ॥

सनिपातो द्वयोः संबन्धस्तन्निमित्तो विधिस्त संनिपात यो विहन्ति तस्या-

नन शतानीति शतशब्दाज् जसि नुमि च कृते षट्सञ्ज्ञा प्राप्नोति । ततश्च लुक् स्यात्तथा च शतानि इति रूपं न सिध्येत् । किं च उपादास्त इत्यत्रोपपूर्वाद् दोङ् क्षये इत्यस्माद् धातोः सकाशाल्लुङि कृते आत्वे च घुत्वात् स्थाघ्वोरिच्चेति किच्त्वं स्यात् । तथा च उपादास्तेत्यत्र आत्वं न स्यात् । इत्यत आह—संनिपातेति । द्वयोः संबन्धः संनिपातः तन्निमित्तोः विधिः तद्विघातस्य नाम तं विहन्ति इति तद्विघातः तस्य अनिमित्तं भवति तं संबन्धं न नाशयति इत्यर्थः । एवं शतानीत्यत्र शत अम् इत्यवस्थायां पूर्वमङ्गसञ्ज्ञा प्राप्ता सा च भवति । ततः नुमागमः प्राप्तो भवतीति न वा तर्हि स नुम् अङ्गप्रत्यययोर्मध्ये व्यवधानं करोति अतः स न भवेदिति चेन्न । स हि मिदचोऽन्त्यात्पर इत्यादिभिरवयवो भूत्वा वर्तते इति प्रतिपादितत्वाच्च तेन निमित्तविनाशः । अत एव शब्देन्दुशेखरे स्फुटत्वाकमवयवत्वात्र तेन निमित्तविनाश इत्युक्तम् । एवं न नुम् साक्षात्संबन्धविनाशकः । न च अङ्गसञ्ज्ञा प्रत्ययस्य संबन्धं निमित्तीकृत्य जाता नुमा च संबन्धाविनाशस्य जायमानत्वेन न नुमं प्रयोजयेत् इति चेन्न । सा हि एवं विचारयति—यथाहमनयोः संबन्धं निमित्तीकृत्य जाता तथैवायमपि जातः ।

१ B. G. इति णचः स्त्रियामेव.
२ B. G. H. प्राप्नोतीत्यत आह.

निमित्त स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः। किंचैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम् ॥ ग्रामणिकुल ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथंचिद्बहिरङ्गपरिभाषयापि वारणं संभवतीति ङ्मेजन्तः ( १. १. ३९ ) इत्यत्र ह्रस्वस्य पिति ( ६. १. ७१ ) इति सूत्रे चैकदेशिना तया परिभाषया तुग्वा-

त्तक इति भाष्यम्। अस्याय भाव –अस्या परिभाषाया सनिपातशब्देन पौर्वापर्यरूपसबन्ध एव ग्राह्य¹। दाक्षिरित्यत्र न प्रत्ययः पौर्वापर्यरूपसंबन्धं निमित्तीकृत्य जात। अत नात्र परिभाषाप्राप्तिरिति शङ्का। एतच्च भाष्य प्राचीनमते सिद्धान्तभूते। नैतन्नवीनसंमतम्। कुत। असति बाधके प्रमाणाने सामान्ये पक्षपात इति न्यायाच्च सकोचे प्रमाणम्। अत. एकदेश्युक्तिभाष्य तत्। तद्धारि च उत्तरं–अङ्गसंज्ञासाहचर्यनिमित्त स्यादिति। अङ्गसंज्ञा प्रकृतिप्रत्यययो पौर्वापर्यरूपसम्बन्ध निमित्तीकृत्य जाता। अतो न सा यस्येतिलोप प्रयोजयेदिति। तदपि उत्तर सिद्धान्त्येकदेशिनः। न तु सिद्धान्तिन। कस्मादिति चेदुच्यते। पूर्वोक्त दोषयुक्तं भाष्य कथ तेनाङ्गीकृतम्। यत एवमङ्गीकरोति तस्मादेकदेश्युक्तमिति। अपरोपि हेतुरस्त्येकदेश्युक्तिविषये तदाह किंचेति। वर्णाश्रयः प्रत्यय इत्यादिपूर्वोक्तभाष्यस्य वैयर्थ्यं प्राप्नोति दाक्षि प्लाक्षिरित्यत्रैव गार्ग्य इत्यादिषु। अङ्गसंज्ञाया लोपनिमित्तकत्वेन सर्वत्रैव दोषसत्त्वेन दाक्षिरित्युदाहरणगतदोषनिरूपणावसरे उक्तस्य भाष्यस्य वैयर्थ्यं स्यात्। अत एव स्वीकार्यमेवेति। ग्रामणिकुलमिति। ह्रस्वापो सज्ञेतिसूत्रेण ह्रस्वे कृते ‘ ह्रस्वस्य पिति कृति तुक् ’ इति सूत्रेण तुक् प्राप्त.। स भाष्ये बहिरङ्गपरिभाषया वार्यते। तत्र सनिपातपरिभाषया वारणसभवेपि अनया वारण कृतं तस्मादेव विशेषणविशेष्यभावे सनिपाते नेयमिति शङ्का तु अत्रैव प्राप्नोति—यद्यत्र विशेषणविशेष्यभावसंनिपात गृहीत्वैव संनिपातपरिभाषाप्राप्ति तर्हि एवं युज्येत। परतु पौर्वापर्यरूप सबन्धोत्र शक्यते वक्तुम्। कुत। ह्रस्व पूर्वोत्तरपदे निमित्तीकृत्य जात। एव च बहिरङ्गपरिभाषयोत्तरदानात् विशेषणविशेष्यभावो नात्र गृह्यते इति वक्तु न शक्यते इति चेन्न। अत्र पौर्वापर्यसबन्ध निमित्तीकृत्य परिभाषाप्राप्तिरेव न। कुत। तुगागमे

१ C °परिभषया वारण

२ C. reads here and in the following ङ्मेजन्तसूत्रे

घातकत्वात्। तुक्यजन्तत्वविघातः स्पष्ट एव ॥ न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयासिद्धत्वम्। अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात्। किंच षत्वतुकोरसिद्धः ( ६. १. ८६ ) इत्येतद्बलात्कृति तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्ते. ॥ सर्वविधसंनिपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्त्तिककृतोक्तम्। न हि प्रत्ययः पूर्वपरसंनिपातनिमित्तकः स[2] एव च संनिपातशब्देन गृह्यत इति मत्वा न प्रत्ययः संनिपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तद्धि-

अजन्तस्य नाशः स्पष्टः। इति परिभाषायाः सिद्धिः॥ अत्र प्राचीनाः—संनिपातपरिभाषायां संनिपातपौर्वापर्यमेव न विशेषणविशेष्यभावोऽपि। तेन नात्र परिभाषया उत्तरं दातुं शक्यते। किंतु बहिरङ्गपरिभाषया उत्तरं दीयते। तथाहि—अर्थसापेक्षत्वेन बहिरङ्गो ह्रस्वः, तुमागमश्च अर्थनैरपेक्ष्यत्वेनान्तरङ्गः। अतस्तुग्दृष्ट्या ह्रस्वो नास्त्येवेति न तुक्। न चापरनिमित्तकत्वेन ह्रस्वोऽप्यन्तरङ्ग इति वाच्यम्। सर्वापेक्षया अर्थसापेक्षत्वेन बहिरङ्ग एव इति तेषां मतम्। परंतु तत्प्राचीनोक्तं न युक्तम्। अर्थकृतबाहिरङ्गस्यानाश्रयणात्। षत्वतुकोरितिसूत्रस्थतुग्ग्रहणेन नलोपः सुप्स्वरेतिसूत्रस्थकृतितुग्ग्रहणस्य तुकि कर्तव्ये न प्राप्तिः इति स्वीकाराच्चेति। संनिपातपरिभाषायां सर्वविधसंनिपातग्रहणे प्रमाणमाह— सर्वविधेति। तस्यार्थः। एतत्परिभाषादोषनिरूपणावसरे 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यात्' इति वार्तिककृतोक्तम्। तथाहि। दाक्षिः इत्युदाहरणे दक्षशब्दात् इञि कृते यस्येति लोपः क्रियते तदा दाक्षिरित्याकारकं रूपं भवति। तत्र वार्तिककृता संनिपातपरिभाषामानीय तदनित्यत्वेन सिद्धिः कृता। परंतु अत्र परिभाषायां संनिपातो यदि पौर्वापर्यरूप एव गृह्यते तदा संनिपातपरिभाषायाः प्राप्तिरेव न। नहि पौर्वापर्यसंबन्धं निमित्तीकृत्य अत्र प्रत्ययः कृतः। अत एवमत्र मन्तव्यम्—नास्यां परिभाषायां पौर्वापर्यरूपसंबन्ध एव गृह्यते, किंतु विशेषणविशेष्यभावोऽपीति। तेनेदं युज्यते—वर्णाश्रयः प्रत्ययः वर्णविनाशस्यानिमित्तमिति। अदन्त प्रातिपदिकमित्येवं विशेषणविशेष्यभावं माश्रित्य प्रत्ययो विनाशयतीति परिभाषाप्राप्तिः इत्येतद्वार्तिकव्याख्यानपरभाष्यात् अयं निर्गलितोऽर्थः। सामान्यसंनिपातः अस्यां परिभाषायां ग्राह्यः। एतदेव सिद्धान्तमूलं भाष्यम्। ततः न प्रत्ययः संनिपातनिमि-

१ वर्णविघातस्य°.

२ C. स एव संनिपात°; P. mentions this reading.

निमित्तं स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः। किंचैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वानापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम् ॥ ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथंचिद्बहिरङ्गपरिभाषयापि वारणं संभवतीति ङ्मो ह्रस्वादचि ङमुण्नित्यम् इत्यत्र ...

---

त्वकः इति भाष्यम्। अस्यायं भावः–अस्यां परिभाषायां संनिपातशब्देन पौर्वापर्यरूपसंबन्ध एव ग्राह्यः। दाक्षिरित्यत्र न प्रत्ययः पौर्वापर्यरूपसंबन्धं निमित्तीकृत्य जातः। अतः नात्र परिभाषाप्राप्तिरिति शङ्का। एतच्च भाष्यं प्राचीनमते सिद्धान्तभूतं। नैतन्नवीनसंमतम्। कुतः। असति बाधके प्रमाणानां सामान्ये पक्षपातः इति न्यायात्संकोचे प्रमाणम्। अतः एकदेश्युक्तिभाष्यं तत्। तदुपरि च उत्तरं–अङ्गसंज्ञासाहचर्यनिमित्तं स्यादिति। अङ्गसंज्ञा प्रकृतिप्रत्यययोः पौर्वापर्यरूपसंबन्धं निमित्तीकृत्य जाता। अतो न सा यस्येतिलोपं प्रयोजयेदिति। तदपि उत्तरं सिद्धान्त्येकदेशिनः। न तु सिद्धान्तिनः। कस्मादिति चेदुच्यते। पूर्वोक्तं दोषयुक्तं भाष्यं कथं तेनाङ्गीकृतम्। यत एवमङ्गीकरोति तस्मादेकदेश्युक्तमिति। अपरोऽपि हेतुरस्यैकदेश्युक्तिविषये तदाह–किंचेति। वर्णाश्रयः प्रत्यय इत्यादिपूर्वोक्तभाष्यस्य वैयर्थ्यं प्राप्नोति दाक्षिः प्लाक्षिरित्यत्रेव गार्ग्य इत्यादिषु। अङ्गसंज्ञाया लोपनिमित्तकत्वेन सर्वत्रैव दोषसत्त्वेन दाक्षिरित्युदाहरणगतदोषनिरूपणावसरे उक्तस्य भाष्यस्य वैयर्थ्यं स्यात्। अत एवं स्वीकार्यमेवेति। ग्रामणिकुलमिति। ह्र्यापोः संज्ञेतिसूत्रेण ह्रस्वे कृते 'ह्रस्वस्य पिति कृति तुक्' इति सूत्रेण तुक् प्राप्तः। स भाष्ये बहिरङ्गपरिभाषया वार्यते। तत्र संनिपातपरिभाषया वारणसंभवेऽपि अनया वारणं कृतं तस्मादेव विशेषणविशेष्यभावे संनिपाते नेयमिति शङ्का तु अत्रैवं प्राप्नोति–यद्यत्र विशेषणविशेष्यभावसंनिपातं गृहीत्वैव संनिपातपरिभाषाप्राप्तिः तर्हि एवं युज्येत। परंतु पौर्वापर्यरूपः संबन्धोऽत्र शक्यते वक्तुम्। कुतः। ह्रस्वः पूर्वोत्तरपदे निमित्तीकृत्य जातः। एवं च बहिरङ्गपरिभाषयोत्तरदानात् विशेषणविशेष्यभावो नात्र गृह्यते इति वक्तुं न शक्यते इति चेन्न। अत्र पौर्वापर्यसंबन्धं निमित्तीकृत्य परिभाषाप्राप्तिरेव न। कुतः। तुगागमे

---

१ C. °परिभाषया वारणं.

२ C. reads here and in the following ङ्मो ह्रस्वादचि ङमुण्नित्यम्.

रितो भाष्ये। अत एव परिभाषाफलत्वेनेदमुक्तं कृन्मेजन्त इति सूत्रे वार्तिककृतेति केचित् ॥ संनिपातलक्षणविधित्वमस्या लिङ्गम् ॥ स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यः संनिपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ॥

नन्वेवं रामायेत्यादौ सुपि च (७. ३. १०२) इति दीर्घानापत्तिः। अदन्ताङ्गङेसंनिपातेन जातस्य यादेशस्य तदविघातकत्वात् ॥ न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयासिद्धत्वान्नात्र संनिपातविघात इति वाच्यम्। आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः। किंचान्तरङ्गे

जातेपि पौर्वापर्यसंबन्धस्य न हानिर्भवति। तुकः आगमत्वेन अवयवत्वात् न तेन संनिपातविघात इति न तत्संनिपातमुद्दिश्य परिभाषायाः प्राप्तिः, किंतु विशेषणविशेष्यभाव स्वीकृत्य परिभाषा आनेया इति युक्तैव शङ्का। अत एवेति। विशेषणविशेष्यभावस्य ग्राह्यत्वेनेत्यर्थः। संनिपातलक्षणमस्या लिङ्गमिति। लिङ्ग नाम बीजम्। इय परिभाषा कमुद्दिश्य प्रवर्तते तर्हि संनिपातलक्षणाविधिमुद्दिश्य तं विधिं प्रति त्वमस्य संबन्धविनाशकस्य निमित्तं मा भूः इति। ननु संनिपातविघातकमुद्दिश्य प्रवर्तते इत्युक्ते को दोषस्तर्हि तदानीं परिभाषाविघातकं प्रति गत्वा ब्रूयात् अनयोः सबन्धमुद्दिश्य जातः अयम्, अतस्त्वं तमुद्दिश्य अनयोः संबन्धं मा जहि। परंतु इदं निष्फलम्। यथा पुत्रः मातापित्रोः नाशे शस्त्रं दधति सति विघातकोयं न वेति न विचारं करोति नाप्यपराणां किंचिदपि शृणोति एवं चेयं परिभाषा न विघातकमुद्दिश्य प्रवर्तते इति दिक्। न च यञादित्वेति। दीर्घस्य अदन्ताङ्गत्वं, सुप्, यञादित्वं चेति निमित्तत्रयम्। यञादेशस्य अदन्ताङ्गत्वं सुप् चेति निमित्तद्वयमेवेति तस्यान्तरङ्गत्वम्। ननु बह्वपेक्षत्वेनान्तरङ्गत्वं न कुत्राप्युक्तं अन्यथा बह्वपेक्षमल्पापेक्षे इत्येव वदेदिति चेत्तर्हि अपरनिमित्तकत्वेनान्तरङ्गत्वं आदेशस्य। तत्र पञ्चम्यन्तनिमित्तत्वस्वीकारे यञादेशोपि परनिमित्तकः इति चेन्न पञ्चम्यन्तस्य निमित्तत्वं स्वीक्रियते। एवं च परनिमित्तकत्वेन पञ्चम्यन्तस्य निमित्तत्वाभावेन न तस्य परनिमित्तकत्वम्। एवं च दीर्घस्य परनिमित्तकत्वेन बहिरङ्गत्वमिति

१ C. स्वप्रवृत्तेः.
२ B. °द्विघातस्य.
३ B. °सापेक्षस्य दीर्घस्य.
४ B. C. G. H. °त्वेन तत्प्रवृत्तेः.

कर्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः । किंचातिदेशिकसंनिपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन ह्रस्वनिमित्तसंनिपातविघाताभावात्तत्रैतस्याव्याप्तिपरिहारकृन्मेजन्त. (१. १. ३९) इति सूत्रस्थभाष्यासंगतिः । संनिपातस्याशास्त्रीयत्वान्न स्थानिवत्त्वमिति चेत्तर्ह्यत्रासिद्धत्वमपि कथमिति विभावय । अशास्त्रीयेऽसिद्धत्वाप्रवृत्तेरीदूदेद् (१. १. ११) इति सूत्रे कैयटेन स्पष्टमुक्तत्वात् । एवं च पूर्वत्रासिद्धीयेऽपि कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत् । न । कष्टाय (३. १. १४) इति निर्देशेनैतस्या अनित्यत्वात् ॥

---

शेखरोक्तम् । अन्तरङ्गत्वेनात्र सिद्धिर्भवति इति तस्यासिद्धत्वमुक्तम् । तत्र कृते इति । अन्तरङ्गे कृते प्राप्यमाणमसिद्धमिति नान्तरङ्गत्वमेतादृशं परिभाषायां दृश्यते । केनापि तादृशस्यास्वीकारात् । वस्तुत निमित्तविघातेन संनिपातपरिभाषया संनिपातवारणसम्भवेन फलाभावादिति । किं चातिदेशिकेति । आतिदेशिकसंनिपातविघाताभावमादाय एतदप्रवृत्तिस्वीकारे भाष्यासङ्गतिः । तथा हि हे गौरि इत्यत्र ह्रस्वे कृते एङ्ह्रस्वादिति लोपः क्रियते । परन्तु अत्र संनिपातपरिभाषया लोपो न स्यात् इत्याशङ्कां कृत्वा द्वयोः सम्बुद्धिप्रकृतिसम्बन्धमुद्दिश्य जातो ह्रस्वो न तद्विघातनिमित्तमिति प्रातिमानीयानित्यत्वेन वारणं कृतम् । यदि चातिदेशिकसंनिपातविघाताभावः स्वीक्रियते तर्हि परिभाषाप्राप्तिरेव न । सम्बुद्धिलोपेऽपि स्थानिवत्त्वेन सम्बुद्धेः सत्त्वेन न संनिपातविघात इति प्रवृत्तिरेव न स्यात् परिभाषाया इति । अतिव्याप्तिरत इति । अतिव्याप्तिपरभाष्यासंगतिः । अत आतिदेशिकसंनिपातविघाताभावमादाय परिभाषाप्रवृत्तिर्नेति नासंगतिर्भाष्यस्येति । अत्र किंचित् । अत्र स्थानिवत्त्वेन सम्बुद्धिपरकत्वमुच्यते । अत्र स्थानिवत्त्वं नियमपक्षे । नियमाभावे तु स्थानिवत्त्वेन नाम प्रत्ययलक्षणेनेत्यर्थः । अत्रेयं शङ्का । स्थानिवद्भावो न वक्तुं शक्यते । स्थानिवत्त्वं कस्मिन्पक्षे शास्त्रातिदेशपक्षे कार्यातिदेशे वा । तत्र सिद्धान्ते शास्त्रातिदेशकार्यातिदेशयोर्मध्ये भेदो नास्त्येव । शास्त्रातिदेश एव कार्यातिदेशो नान्यः इति सिद्धान्तितं शब्देन्दुशेखरे । एवं च धर्ममात्रेऽपि कार्याणि कर्तव्यानीति सिद्धम् । तत्र स्थानिवद्भावस्य द्विधा व्याख्यानम् । आदेशः स्थानि-

१ B C G चेत्तत्रा°, P mentions this reading and says that some read also in the preceding °शास्त्रीयत्वान्न तत्र H °शास्त्रीयत्वान्न तत्र

२ B G निर्देशेन तस्या, C निर्देशेनास्या, P. mentions the latter reading

यंयो[1] संनिपातस्य विघातकं शास्त्रं तयोः संनिपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः। अत एव दाक्षिरित्यत्राकारान्तप्रकृतीञ्संनिपातनिमित्ताङ्गसंज्ञानया[2] परिभाषयाल्लोपस्य निमित्त न स्यादित्याशङ्कयानित्यत्वेन समाहितं कृन्मेजन्तः ( १. १. ३९ ) इति सूत्रे भाष्ये। न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेत्युक्तमस्ति ॥ न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अनया परिभाषया बाधपरभाष्यासंगतिः। अनया[3] परिभाषया लुग्मा भूत्। अव्ययत्वं तु स्यादेव। लुका हि तदीयसंनिपातस्य विघातो नाव्ययसंज्ञया। संज्ञाफलं त्वकच्स्यादिति वाच्यम्। एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परंपरया वा

---

चत्कार्याणि लभते, प्रवर्तयति च इति। द्वितीयमर्थं स्वीकृत्य स्थानिवत्त्वं धर्मं संपाद्य संनिपातत्वं वक्तव्यम्। परंतु धर्मो नानेतुं शक्यते। निरधिष्ठानारोपासंभवात्। अतः कथं स्थानिवद्भाव इति चेन्न। समीपस्थायां प्रकृतौ संबुद्धिपरकत्वमानीय संनिपातो वक्तव्यः तत्प्रयुक्तानि च कार्याणि कर्तव्यानि इति न कश्चिद् दोष इति। नन्वेवं रामायेत्यत्र परिभाषाप्राप्तिरेव न। कुत। संनिपातनिमित्तकविधौ ययोः संनिपातविघातकं शास्त्रं तयोर्ग्रहणमावश्यकम्। यथा आधये इत्यत्र अव्ययसंज्ञा कृत्वा लुकि कर्तव्ये संनिपातपरिभाषाविषये न गुणः कारणं परंतु तत्र घेः ङिति इति पदद्वयस्य ग्रहणं वर्तते। रामायेत्यत्र यादेशोच्चारणम्। नहि ङेर्यः इत्यत्राकारान्ताङ्गोच्चारणं वर्तत इति न दोषः अतः अङ्गस्येति। तथापि घेर्ङिति इति सूत्रवदुच्चारणं नास्त्येवेति न दोषः इत्यत आह—ययोः संनिपातस्येति। अत एवेति उच्चारणाग्रहाभावादेव। तथाहि—'अङ्गसंज्ञा तर्हि निमित्तं स्यात्' इति पूर्वोक्तैकदेश्युक्तिभाष्ये परिभाषा गृहीता भाष्ये। यद्यपि एकदेश्युक्तित्वं तस्य तथापि न सर्वमेकदेश्युक्तिः। न स सिद्धान्त इत्येवैकदेश्युक्तित्वं तस्य। एवं च तत्र परिभाषा स्वीकृता भाष्यकारैः। यदि चोच्चारणस्याग्रहः स्यात्तर्हि परिभाषाप्राप्तिरोधकभाष्यस्य असङ्गतिः स्यादिति तात्पर्यं बोध्यम्। न च कुम्भकारेभ्य इति। ननु कुम्भकारेभ्य आधये इत्यादौ परिभाषा भाष्ये गृहीता। अव्ययसंज्ञा अनिमित्तं स्यादिति। तत्र अव्ययसंज्ञया न निमित्तविनाशः लुगादिनिमित्तविनाशः लुग् मा भूत् अव्ययत्वं स्यात्। तत्फलं तु अकजिति कथं परिभाषा-

[1] P. mentions the reading ययोः संनिपातः कार्यस्य निमित्तं तयोः सूत्र उपादान°.

[2] C. °प्रकृतिक इञ्सं°. G. प्रकृति-इञ्स°.

[3] B. C. तया.

स्व[1]निमित्तसंनिपातविघातकस्य स्वयमनिमित्तमित्यर्थे[2]नादोषात् । एतेनात्राकस्या-दित्यपास्तम् ।। न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽप्यकजेकवाक्य-तापन्ना स्यादिति वाच्यम् । अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणा-देरसिद्धत्वात् । लुगेकवाक्यतापन्ना तु न गुणादितोऽन्त[3]रङ्गोभयोरपि शब्दतः सुबाश्रयत्वात् ।।

न[4] यासयोः ( ७. ३. ४५ ) इति निर्देशाच्चे[5]यमनित्या तेन नातिप्रसङ्गः ।। स्पष्टा चेयं कृन्मेजन्तः ( १. १. ३९ ) इति सूत्रे भाष्ये ।। अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि । वर्णाश्रयः प्रत्ययो वर्णविघातस्यानिमित्तम् । दाक्षिः ।। आत्वं पुग्विधेः । क्रापयति ।। पुग् ह्रस्वत्वस्य । अदीदपत् ।। स्वदा-घकारष्टाब्विधेः । या सेति ।। इड्विधिराकारलोपस्य । पपिवान् ।। ह्रस्वनुड्भ्यां मतुप् ( ६. १. १७६ ) अन्तोदात्तादुत्तरपदात् ( ६. १. १६९ ) इति मतु-ब्भिमक्त्युदात्तत्वं पूर्वनिघातस्य । अग्निमान् । परमवाचा ।। नदीह्रस्वत्वं संबुद्धि-लोपस्य । नदि कुमारीत्यादि ।। यो[?]देशो दीर्घत्वस्य । कष्टाय ।। इतोऽन्यत्र प्रवृत्तिरेव । दोषाः सन्त्वपि साकल्येन परिगणिता इति भाष्योक्तेरित्यन्यत्र विस्तरः ।। ८५ ।।

---

स्वीकार· इति शङ्कते—न चेति । आत्वं पुग्विधेः क्रापयतीति । अत्र पुग्त्वं णिच् प्रत्यय एतयोः संबन्धमुद्दिश्य जातमात्वं न तद्विघातकम् । न च पुग्त्वस्य आत्वेनैव विघातः इति न तद्विघातकः पुगिति चेद् न । सामान्यरूपेण तथात्वेऽपि परिभाषा प्रवर्तत एव । यथा प्रकृते—पुग्त्वरूपेण सांनिपातः, निमित्तेऽपि अङ्ग· रूपेण तथात्व इति परिभाषाप्राप्तिः । युष्माकमित्यत्र यद्यपि सुटि कृते शेषेलोपस्य निमित्तं विहन्यते तथापि न परिभाषाप्राप्तिः । तत्र साकृत्वरूपेण ग्रहणं किं तु शेषत्वेन । सुटि कृते तस्य आकमावयवत्वेन न शेषत्वाविघातः । यदि अन्त्यरूपेण प्रत्ययस्य ग्रहणं स्यात्तर्हि परिभाषा प्रवर्तेत इति येन रूपेण ग्रहणं तस्य विघात एव परिभाषाप्राप्तिः न तु यस्य कस्यचिद्विघाते इति कतीनामित्यत्र न परिभाषा-प्राप्तिः । तत्र कृतेऽपि दीर्घे षट्त्वमस्त्येव । तत्र ह्रस्वत्वस्य नाशेऽपि षट्त्वमस्त्येवेति न दोषः ।। ८५ ।। ८६ ।। ८७ ।।

---

1 B. स्वनिमित्तविघातकस्य ; C. H. स्वनिमित्तसंनिपातविघातस्य.
2 B. C. G. °मिति तदर्थेना°, P. mentions the reading एतदर्थेन found also in H
3 B. C. G. बहिरङ्गेण°. H. °न्तरङ्गत्वमुभयो°
4 C. न यासयोरित्या दिना ज्ञापकाच्चेयमनित्या. G. H. °इति ज्ञापकाच्चेयमनित्या.
5 B. C. G. H. यद्देशः सुटि चेति दीर्घत्वस्य.

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ द्विगोर्लुक् (४. १. ८८) इत्यणो लुकि लुक्तद्धित ( १. २. ४९ ) इति स्त्रीप्रत्ययलुक्यानुकः श्रवणापत्तिरत आह ।

## संनियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ॥ ८६ ॥

अत्र च बिल्वकादिभ्यश्छस्य लुक् (६. ४. १५३) इति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि छं[1]मात्रस्य लुग्बोधनद्वारा कुको ऽनिवृत्तिर्यथा स्यादि[2]त्यर्थम् । कृतकुगागमा नडाद्यन्तर्गणबिल्वा[3]दय एव तत्र निर्दिष्टा बिल्वकादिशब्देन ॥ न चैवमपि छग्रहणं व्यर्थं कृतकुगागमानुवादसामर्थ्यादेव तदनिवृत्तिसिद्धेः । अन्यथा बिल्वादिभ्य इत्येव वदेत् । लक्षणप्रतिपदोक्तपरिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नातिप्रसङ्ग इति वाच्यम् । ततो ऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्यो ऽण् ( ४. ३. १३६ ) इति विका[4]रार्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात् ॥ समुच्चयार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वानियमान्न्यायसिद्धो[5]पीयम् ॥ यत्तु णाविष्ठवदित्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थमन्यथैतयतीत्यादौ टिलोपेनैव ङीपि निवृत्ते संनियोगशिष्टपरिभाषया नस्यापि निवृत्त्यैतयतीत्यादिसिद्धौ पुंवत्त्ववैयर्थ्यं स्पष्टमेवेति टेः ( ६. ४. १५५ ) इति सूत्रे कैयटस्तन्न । इडविडमाचष्ट ऐडविडयतीत्यादौ पुंवत्त्वस्यावश्यकत्वात् ॥ ऐनेयः श्यैने[6]यं इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः ॥ ८६ ॥

ननु चुरा शीलमस्याः सा चौरीत्यादौ शीलम् ( ४. ४. ६१ ) छत्रादिभ्यो णः ( ४. ४. ६२ ) इति णे ङीप् न प्राप्नोतीत्यत आह ।

## ताच्छीलिके णे ऽण्कृतानि भवन्ति ॥ ८७ ॥

अन् ( ६. ४. १६७ ) इत्यणि विहितप्रकृतिभावबाधनार्थं कार्मस्ताच्छील्ये ( ६. ४. १७२ ) इति निपातनमस्या ज्ञापकम् ॥ ताच्छीलिकणान्तादणो ग्यचः (४. १. १५६) इति फिञ्सिद्धिरप्यस्याः प्रयोजनमिति नव्याः ॥

१ B. छमात्रलु°.
२ B. स्यादित्यर्थं. H. स्यादित्येतदर्थं
३ B. °बिल्वकादय .
४ B. C. G. H. विकारार्थस्य.
५ C G. H. °सिद्धा चेयम् ; P. also mentions this reading.
६ B. श्येनेयः .

ताच्छीलिक इत्युक्तेस्तदस्यां प्रहरणम् ( ४. २. ५७ ) इति णे दाण्डेत्येव ॥ कार्मः ( ६. ४. १७२ ) इति सूत्रे भाष्ये स्पष्टा ॥ ८७ ॥

ननु कंसपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत आह ।

**धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८८ ॥**

भ्रौणहत्ये तत्वनिपातनमस्या ज्ञापकम् ॥ धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति पाठस्तु प्रसृड्भिरित्यादावनुदात्तस्य चर्दुपधस्य (६. १. ५९) ईत्यमापादनेन भाष्ये दूषितः ॥ यत्कार्यं प्रत्ययनिमित्तकं तत्रेयं व्यवस्थापिका । तेन पदान्तत्वनिबन्धनं नशेर्वा ( ८. २. ६३ ) इति कुत्वं प्रनड्भ्यामित्यादौ भवत्येव ॥ इयङादिविधौ तु नैषा न भूसुधियोः ( ६. ४. ८५ ) इति निषेधेनानित्यत्वात् ॥ मृजेर्वृद्धिः ( ७. २. ११४ ) इत्यत्र भाष्ये स्पष्टा ॥८८॥

ननु सर्वक उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह ।

**तन्मध्यपतितस्तद्ग्रहणेन गृह्यते ॥ ८९ ॥**

नेदमदसोरकोः ( ७. १. ११ ) इति सूत्रेऽकोरिति निषेधोऽस्या ज्ञापकः ॥ तदेकदेशभूतं तद्ग्रहणेन गृह्यत इति येन विधिः ( १. १. ७२ ) इति सूत्रे भाष्ये पाठः ॥ ८९ ॥

---

धातोः कार्यमिति । प्रत्ययनिमित्तकत्वं यत्रास्ति तत्रैवेयं व्यवस्थापिका । इयं परिभाषा मृजेर्वृद्धिरित्यादौ प्रत्यये परतः इत्यध्याहारं कृत्वा वाक्यार्थे कृते सति सामान्यप्रत्यये परतः प्राप्तवृद्धिनिवारणार्थं कृता । तेन धातुप्रत्यय एव भवति । कंसपरिमृड्भ्याम् इत्यादौ नेति । तेनेति । नशेर्वेत्यादौ प्रत्ययनिमित्तककार्याभावान्नेयं व्यवस्थापिका इति ध्येयम् ॥ ८८ ॥ ८९ ॥

---

१ B. G. H. स्पष्टैव.
२ C. तत्प्रत्यय एव भवति.
३ B. H. ॰निपातनं चास्या ज्ञा॰.
४ B. इत्वमागमापादनेन.
५ C. G. प्रणग्भ्यामित्यादौ; P. H. प्रणड्भ्यामि॰.
६ C. om. नु.
७ B. H. स्पष्टैव.
८ B. G. तन्मध्ये पतित॰.
९ C. om. सूत्रे ऽकोरिति.
१० B. om. भाष्ये.

ननु गातिस्थाघुपाभूभ्यः ( २. ४. ७७ ) इति सिचो लुगपासीदित्यादौ पातेरपि स्यादत आह ।

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ९० ॥

अस्यार्थे ज्ञापकः स्वरतिसूति (७. २. ४४) इति सूत्रे सूङिति वक्तव्ये सूतिसूयत्योः पृथङ्निर्देश इति कैयटः । तन्न । साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासंभवात् ॥ ध्वनिता चेयं परिभाषा यस्य विभाषा ( ७. २. १५ ) इत्यत्र भाष्ये । तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो विभाषा गमहनविदविशाम् ( ७. २. ६८ ) इति सूत्रे शब्विकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम् । तत्र चो हेतौ । यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छब्विकरणस्य ग्रहणं न तु हनिसाहचर्यादस्याप्येतत्परिभाषाविरोधादिति तदाशयः ॥ अत एव परिभाषायां लुग्विकरणस्यैवेति नोक्तम् ॥ कण्ठतस्तु भाष्य[6] एषा क्वापि न पठिता ॥ गातिस्था ( २. ४. ७७ ) इति सूत्रे पिबतेर्ग्रहणं कर्तव्यमिति वार्तिककृता सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणमिति भाष्यकृता चोक्तम् । स्वरतिसूति ( ७. २. ४४ ) इति सूत्रे कैयटेन च स्पष्टमुक्ता ॥ ९० ॥

लुग्विकरणश्चेति । अयं चो हेतौ । यतः अयं लुग्विकरणः अतः न तस्य निषेधः । तस्य लुग्विकरणत्वात् । एतेनेयं परिभाषा ध्वनितेति ध्येयम् । एतत्परिभाषाविरोधादिति । यदि पूर्वसाहचर्याल्लुग्विकरणस्य ग्रहणं स्यात्तर्हि एतत्परिभाषाविरोधः स्पष्ट एव । यदि समावेशं कृत्वा व्यवस्था कर्तुं शक्यते तर्हि न विरोधस्वीकारः इति ध्येयम् । पूर्वसाहचर्यात्परसाहचर्यस्य बलीयस्त्वमिति तु न नवीनानां संमतम् । तथा सति भग्येषिषम् इति दोषः प्राप्नोतीति पञ्चमीसमासस्य पाक्षिकत्ववर्णनावसरे शब्दरत्ने द्रष्टव्यम् ॥ ९० ॥

---

१ P. says that some read अलुग्विकरणस्यैव.

२ B. om. च.

३ B. H. इह इति.

४ C. om. इति कैयटः :— °संभवात् . H. कैयटः । तत्र साह. ५ G. पृथङ्निर्देश इत्येतज्ज्ञापकं चिन्त्यम् । ध्वनिता.

५ B. H. °करणस्यैव ग्रहणं.

६ C. om. एषा. H. एषा भाष्ये.

ननु प्रजिघापयिषतीत्यादौ हेरचङि (७. ३. ५६) इति विधीयमानं कुत्वं न स्यादत आह ।

प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ९१ ॥

अचङीति प्रतिषेध एवास्या ज्ञापकः ॥ इयं च कुत्वविषयैव । हेरचङीति सूत्रे भाष्ये स्पष्टेयम् ॥ ९१ ॥

ननु युष्मभ्यमित्यादौ भ्यसः (७. १. ३०) इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोप एत्वं स्यादत आह ।

अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ९२ ॥

अङ्गेऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः ॥ एषा च ज्यादादीयसः (६.४.१६०) इत्यादिविधानेन ज्ञापिता अन्यथैकारलोपेनाकृत्सार्व (७. ४. २५) इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत एव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा ॥ इयं चानित्या द्वयोः (१. २. ५९; ५. ३. ९२) इति निर्देशात् । अनित्यत्वबललभ्यार्थमादायैव भ्यसोऽभ्यम् (७. १. ३०) इति सूत्रे भाष्ये निष्ठितस्येति पठितम् ॥ केचित्त्वनया परिभाषया न किंचिल्लक्ष्यं साध्यते । अत एव ज्ञाजनोर्जा (७. ३. ७९) ज्यादादीयसः (६. ४. १६०) इति सूत्रयोरेतां ज्ञापयित्वा किं प्रयोजनमिति प्रश्ने पिबतेर्गुणप्रतिषेध उक्तः स न वक्तव्य इत्येव प्रयोजनमुक्तं न तु लक्ष्यसिद्धिरूपम् । तदुक्तम् । भ्यसोऽभ्य-

कुत्वं न स्यादिति । परंतु नेदं युज्यते । अभ्यासात्परस्य हिनोतेर्हकारस्य सत्त्वेन कुत्वस्य प्राप्तिरस्तीति कथमवतरणमिति चेदुच्यते । हेरचङि इति सूत्रमङ्गाधिकारस्थम् । तथा च तस्य वाक्यार्थः- प्रत्ययनिमित्तकं हिस्वरूपमङ्गं तदभ्यासस्य हकारस्य कुत्वमित्युक्ते प्रत्यासत्तिः । यन्निरूपितं हिनोतेरङ्गत्वं तन्निरूपितमेव द्वित्वं यत्रास्ति तत्र कुत्वम् । प्राजिघापयिषति इत्यत्र अङ्गसंज्ञा णिच्प्रत्ययनिमित्तिका, द्वित्वं तु सन्प्रत्ययनिमित्तकमिति न तत्र कुत्वम् । अत एवावतरणं युज्यत इति । किं च प्रत्यासत्तिस्वीकारादेव जिहापकोऽपिषति इति रूपं सिध्यति । अत्र ण्वुल् क्यप् सन् इति त्रयः प्रत्ययाः । अत्र प्रत्यासत्तिरूपेण यन्निरूपिता अङ्गसंज्ञा ण्वुल्निमित्तिका न तन्निमित्तकं द्वित्वम् । अतः कुत्वमत्र न भवतीति दिक् ॥ ९१ ॥ ९२ ॥ ९१.१ ॥ ९१.२ ॥ ९१.३ ॥ ९१.४ ॥ ९१.५ ॥ ९१.६ ॥ ९१.७ ॥ ९१.८ ॥

1 B. H. निषेध.

मित्यत्राभ्यमिति च्छेदः शेषे लोपश्चान्त्यलोप एवातो गुणे ( ६. १. ९७ ) इति पररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्यमेतज्ज्ञापनपरं भाष्यं भ्यसोऽभ्यमिति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥९२॥

यस्योरोदिति वाच्य ओर्गुणः ( ६. ४. १४६ ) इति गुणग्रहणात्

संज्ञापूर्वकविधेरनित्यत्वम् ॥ ९३.१ ॥

इयं चं विधेयकोटौ संज्ञापूर्वकत्व एव। तेन स्वायंभुवमित्यादि सिद्धम् ॥

तथा नि लोडित्येव सिद्ध आनिग्रहणात्

आगमशास्त्रमनित्यम् ॥ ९३.२ ॥

तेन सार्गरं तर्तुकामस्येत्यादि सिद्धम् ॥

तथा तनादिपाठादेव सिद्धे तनादिकृञ्भ्यः ( ३. १ ७९ ) इति सूत्रे कृञ्ग्रहणात्

गणकार्यमनित्यम् ॥ ९३.३ ॥

तेन न विश्वसेदविश्वस्त इत्यादि सिद्धम् ॥

तथा चक्षिङो ङिकरणात्

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९३.४ ॥

तेन स्फायमिर्मोर्क इत्यादि सिद्धम् ॥

तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात्

नञ्घटितमनित्यम् ॥ ९३.५ ॥

तेन नेयङुवङ् ( १. ४ ४ ) इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्धमिति तन्न भाष्येऽदर्शनात् । भाष्यानुक्तज्ञापितार्थस्य साधुतायां नियामकत्वे माना-

१ B. °भ्यमित्येव च्छेदः.
२ C. om. च.
३ B. C. G. H. स्वायंभुवमिति.
४ C. G. H om. सार्गरं.
५ B. G. H. कामस्येति सिद्धम्.
६ B. C. G. H. इति.
७ C. G. om. तथा.
८ C. G. °भाक्तसंधित्यादि.
९ B. G. H. साधुत्वनियामकत्वे.

मावात् । भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् ॥ किंच ज्ञापितेऽप्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः । आड्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव घोर्लोपो लेटि वा ( ७. ३. ७० ) इति सूत्रे वेति प्रत्याख्यातम् । लोपेऽप्याट्पक्ष आटः श्रवणं भविष्यति दधादिति । अटि दधदिति । आगमशास्त्रस्यानित्यत्वे त्वाट्यसति दधादित्यसिद्धया वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासंगतिः स्पष्टैव । एतेन यत्कैयटे केचिदित्यादिनास्यैव वाग्रहणस्य तदनित्यत्वज्ञापकत्वोक्ता सापि चिन्त्या प्रत्याख्यानपरभाष्यविरोधात् ॥ तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च ॥ चक्षिङो ङकारस्यान्त इदित्त्वाभावसंपादनेन चारितार्थ्याच्च ॥

एवमेव

आतिदेशिकमनित्यम् ॥ ९३.६ ॥

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान् ॥ ९३.७.८ ॥

इत्यादि भाष्यानुक्तं बोध्यम् ॥

स्वायंभुवमित्यादि श्लोकेऽसाध्वेवेत्यन्यत्र विस्तरः ॥

यदपि ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह ।

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥ ९३.९ ॥

---

१ B. G. H. प्रयोगानसिद्धेः.

२ P. says that some read आग्रहणं. G. H. अ पाठ.

३ B. om. अटि.

४ C. G. °ज्ञापकतोक्त.

५ B. H. °स्यान्तेदित्त्वाभाव°, C. G. °स्यान्ते इदित्त्वाभाव° B. G. H. read the words चक्षिङो......चारितार्थ्याच्च *before* तनादिसूत्रे.

६ B. om. इत्यपि.

७ C. om ननु.

८ B. C. यङ्लुगन्तस्यापि.

९ C. G. H. भाष्यमिति । यत्तु°.

षाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम् । अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धि[1]रिति तदपि न भाष्येऽदर्शनात् । किंच तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः ॥ अत एव दयतेर्दिगि ( ७. ४. ९ ) इति सूत्रेऽस्तेः परत्वाद्द्वित्वे कृते परस्यास्तेर्भूभावे कृते पूर्वस्य श्रवणं प्राप्नोतीत्याशङ्क्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये । अन्यथा त्वदुक्तरीत्यैका[2]ज्द्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसंगतिः स्पष्टैव । तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या[3] ॥ भूसुवोः ( ७. ३. ८८ ) इत्यस्य तदन्ताङ्गस्येत्यर्थात्[4]प्राप्तस्य[5] गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः ॥ तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥

---

षाष्ठद्वित्वस्येति । प्राचीनमतेनेदम् । प्राचीनाः एवं वदन्ति--द्वित्वे कृते पूर्वस्य परस्यापि च न धातुत्वम् । किं तु समुदायस्य । अत उक्तम्— प्रकृतिरूपद्वये समुदाये इति । नवीनास्तु नैवं मन्यन्ते । ते हि परस्य धातुत्वं वदन्ति । प्राचीनानां तु पूर्वस्य त्यागमात्रमिति लाघवम् । ननु पूर्वस्य त्यागो निर्मूल इति चेन्नानर्थकेऽलोन्त्यविधिरिति परिभाषायामनभ्यासविकारे इति प्रतिषेधात्तस्यानर्थकत्वसूचनात् तदसंगतिः स्पष्टैवेति । श्रवणापत्तिरित्युक्तेरसंगतिरित्यर्थः । भूसुवोरित्यस्येति । भूसुवोस्तिङि इति सूत्रेण भूधातोर्गुणनिषेध उक्तः । किं च दाधर्तीतिसूत्रे बोभूतु इति निपातनस्य नियमार्थत्वमुक्तं लिटपेवेति । तन्न सिध्येत् । भू इत्यस्य उत्तरखण्डस्य धातुत्वेऽपि तस्याङ्गत्वाभावात् प्राचीनमते तु युज्यते । सर्वस्यैव धातुत्वेन तस्याङ्गत्वात् इति चेन्न । इदं सूत्रमङ्गाधिकारस्थम् । तथा च तस्य विशेषणं च कृत्वा भूशब्दानां यदङ्गमित्यस्य वाक्यार्थस्य जातत्वेन यङ्लुकि प्राप्तत्वान्नियमार्थत्वं वक्तुं शुवयामिति न कश्चिद् दोषः । एवं च सर्वस्य समुदायस्य प्रकृतिरूपत्वाभावात्सैषा परिभाषेति दिक् ॥ ९३.१ ॥

---

१ B om इति.

२ B. °रीत्येका°.

३ B. °प्रवृत्तिर्बोध्या.

४ B. H. P. °त्यर्थात्प्रा° ; C. G. °त्यर्थाद्वेप्रा° ; P. rejects the latter reading.

५ B. प्राप्तगुणस्य, P. says that some read प्राप्तस्यागुणस्य.

यदपि ननु वृद्धिर्यस्याचामादिः ( १. १. ७३ ) इत्यत्रैकपरिभाषोपस्थितौ शाटीयाद्यसिद्धिरत आह ।

## विधौ परिभाषोपतिष्ठते नानुवादे ॥ ९३.१० ॥

अनूद्यमानविशेषणेषु तन्नियामकपरिभाषा नोपतिष्ठत इति तदर्थः ॥ विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया संबन्धासंभवेऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभाव इति तर्कमूलेयम् ॥ किंचोदीचामातः स्थाने ( ७. ३. ४६ ) इति सूत्रे स्थानेग्रहणमस्या लिङ्गम् । अन्यथा षष्ठी स्थाने ( १. १. ४९ ) इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति । तन्न । उदात्तस्वरितयोर्यणः ( ८. २. ४ ) इत्यादौ ष्यङः संप्रसारणम् ( ६. १. १३ ) इति सूत्रभाष्योक्तरीत्याल्लोपोऽनः ( ६. ४. १३४ ) इत्यादौ चैतस्या[1] व्यभिचारितत्वात् । भाष्यानुक्तत्वाच्च । स्थानसंबन्धो न परिभाषालभ्य इत्यर्थस्य षष्ठी स्थाने ( १. १. ४९ ) इति सूत्रे[2] भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासंभवाच्च । तत्र [3]स्थानेग्रहणं तु स्पष्टार्थमेव ॥

---

विधौ परिभाषोपतिष्ठते नानुवादे इति । इयं परिभाषा तर्कमूला न तु ज्ञापकसिद्धा । तथा हि । विधेरङ्गभूतायाः परिभाषायाः सत्त्वेन यत्र विधिः 'स्यात्' इत्यनेन विहितः न तत्र 'स्यात्' इत्यस्मिन् तस्य संभवः । नापि विधेयेन सह संबन्धः । तस्य असिद्धत्वात्तत्र अनिष्पन्नत्वात् । निष्पन्नस्य विधानं संभवति न तु अनिष्पन्नस्य इति न तेन संबन्धः । एवं च तद्विशेषणे उद्देश्ये संबन्धः क्रियते । एवं च तद्विशेषणे चारितार्थ्याच्च उद्देश्यविशेषणे परिभाषाप्रवृत्तिः । प्रधानसंबन्धलाभात् । यत्र तु उद्देश्ये न संभवः उद्देश्यविशेषणे तद्विशेषणे च संभवोऽस्ति तत्रापि उद्देश्यविशेषणे एव परिभाषा न तु उद्देश्यविशेषणविशेषणेऽपि प्रधानसंबन्धलाभादिति । संबन्धश्च एकसूत्रस्थ एव ग्राह्यः इति तु नाग्रहः । अत एवोद्देश्यविशेषणत्वेन इको यणचीत्यादौ चारितार्थं तस्मिन्निति निर्दिष्टे इति सूत्रं उद्देश्यविशेषणे न प्रवर्तते । अत एव प्रत्ययस्थात् इत्यत्र आपीति अकारविशेषणम् । एवं च मिदेर्गुण इत्यत्र उद्देश्यविषये चारितार्थं इको गुणवृद्धी इति सूत्रं न तद्विशेषणविशेषणे इति वृद्धिर्यस्याचामादेरित्यत्र न इको गुणवृद्धी इति परिभाषोपस्थितिरिति ध्यम् ॥ ९३-१० ॥

---

१ B. C. H. च तस्याः.

२ C. om. सूत्रे.

३ B. स्थानग्रहणं.

किंच विधौ परिभाषेति प्रवाद इको गुणवृद्धी ( १. १. ३ ) अचश्च ( १. २. २८ ) इत्यनयोर्विधीयत इत्यध्याहारमूलकोऽन्यत्र तु नास्याः फलमित्यन्यत्र विस्तरः ॥ ९३ ॥

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ नमःस्वस्ति ( २.३.१६ ) इति चतुर्थी दुर्वारेत्यत आह ।

## उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ ९४ ॥

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वं तच्च प्रथमाया अप्यस्तीति सापि कारकविभक्तिरिति सहयुक्ते ( २. ३. १९ ) इत्यादिसूत्रेषु भाष्ये ध्वनितम् ॥ इयं च वाचनिक्येव । अत एव यस्य च भावेन ( २. ३. ३७ ) इति सप्तम्यपेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन तत्र च दीयते ( ५. १. ९६ ) इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम् । एतेन क्रियान्वयित्वं कारकत्वमित्यपास्तं यस्य च भावेनेति सप्तम्या अपि क्रियान्वयित्वात् ॥ ये तु प्रधानीभूतक्रियासंबन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्वं वदन्ति तेषामुभयोरपि क्रियासंबन्धनिमित्तकत्वेन तदसंगतिः स्पष्टैव । नमोवरिवः ( ३. १. १९ ) इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्य उपन्यासस्यासंगतिश्च ॥ एतेन क्रियाकारकसंबन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गोपपदार्थेन तु यत्किंचित्क्रियाकारकभावमूलकः संबन्ध इति तन्निमित्ता बहिरङ्गेत्यपास्तं नमस्यतीयत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात् । अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव ॥ सहयुक्ते ( २. ३. १९ ) इत्यादौ च प्रधाने प्रथमासाधनार्थमिदं भाष्य उपन्यस्तेत्यन्यत्र विस्तरः ॥ ९४ ॥

---

१ C. क्रियाजनकार्थविभक्तित्व तत्वं प्रथमायाः.
२ B. यत्.
३ B. G. H. °क्रियानिमित्तकार्यत्वेन.
४ C. क्रियानिमित्तसंबन्धकत्वेन.
५ P. उपन्यासस्यासंगतिश्च; C. B. G. H. °संगतेश्च.
६ B. नमःस्वस्तीत्यत्र.
८ C. G. °पदार्थस्य क्रियात्वं.
९ B. मुण्डयतौ.

नन्वदमुयङ्ङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह ।

## अनन्त्यविकारेऽन्त्यसदेशस्य ॥ ९५ ॥

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः । अन्यथा धात्वादेर्नत्वसत्वे नेता सोतेत्यादावेव स्यातां न तु नमति सिञ्चतीत्यादौ ॥ अनन्त्यविकार इति च लिङ्गम् ॥ अन्त्येन समानो देशो यस्य सोऽन्त्यसदेशः । तत्त्वं चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम् । अत एव विद्ध इत्याद्यर्थं न संप्रसारणे ( ६. १ ३७ ) इति चरितार्थम् । अल्लोपोऽनः ( ६. ४. १३४ ) इत्यादेरनस्तक्ष्णे[1] यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलं यजादिस्वादिपरानन्ताङ्गस्याकारस्य लोप इत्यर्थस्यैवाङ्गांशे प्रत्ययस्योत्थिताकाङ्क्षतयौचित्यादङ्गावयवयजादिस्वादिपरस्यान[2] इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयास्या उचितत्वात् ॥ न चैषा ष्यङः संप्रसारणम् ( ६. १. १३ ) इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम् । वार्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथा सिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्तव्या प्रतिविधेयं दोषेषु प्रतिविधानं चोदाचनिर्देशासि-

---

ष्यङः संप्रसारणमिति । तत्र हि यजादिस्वादिपर इति अनो विशेषणम् । तेन अनस्तक्ष्णेत्यादौ न दोषः इति तद्भाष्याशयः । अत्र यो भाष्यकाराशयो वर्णितः सोऽयुक्तः स्यात् । एतत्परिभाषाविरोधात् । अत्र अकारः उद्देश्यम् । तत्र विशेषणसंभवेन अनो विशेषणस्य अयुक्तत्वं स्पष्टमेवेति भावः । वस्तुतस्तु सोऽन्वयो न युक्तः । प्रत्ययस्याङ्गांशे उत्थिताकाङ्क्षतया तत्रैवान्वयस्यौचित्यात् । एवं च प्रत्ययस्याङ्गांशे अन्वयः । अत इत्यङ्गस्य विशेषणम् । तथा च वाक्यार्थः । अदन्तं यदङ्गं तदवयवीभूतस्य अकारस्य लोपः इति । तेन राज्ञः इत्यादिसिद्धिः । न च अनस्तक्ष्णेत्यत्र अनोऽकारस्यापि लोपः स्यात् इति वाच्यम् । अन्त्यबाधेति परिभाषया क्षकाराकारस्यैव लोप इति । अत्रेदं बोध्यम् । विश्ववाट् प्रष्ठौहः इत्यत्र यथा द्वयोः संप्रसारणं कृतो न, तर्हि न पूर्वस्य निर्दिश्यमानत्वम् । अतो निर्दिश्यमानपरिभाषया नातिव्याप्तिः । अत्र वाह इत्यस्य निर्दिश्यमानत्वेन तदन्ताङ्गस्य प्रतीयमानत्वं तस्य । नैव अनस्तक्ष्णेत्यत्र अनोऽकारस्य तया परिभाषया व्यावृत्तिः स्यादिति चेत् । तत्र प्रत्ययस्याङ्गांशे अन्वयेन

---

१ B. °नस्तक्ष्ण इत्यादावा°.

२ B. °काङ्क्षतयैवोचित्यात्

३ B. C. G. H. यजादिस्वरूपतः.

द्धमित्युपसंहारात् ॥ मिमार्जिषतीत्यर्थं च । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद्द्वित्वे परत्वादभ्यासकार्ये ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी। न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिर्लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः ॥ यत्तु न संप्रसारण इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं तस्यायमर्थः। एतत्सूत्रप्रयोजनान्येतस्याः परिभाषायाः प्रयोजनानि न भवन्ति व्यधादावन्त्यसमानदेशयणोऽभावादिति । नैतान्येतस्याः प्रयोजनानीति पाठोऽपि कचि–

---

तदवयवीभूतस्याकारस्य निर्दिश्यमानत्वेन सर्वेषामकाराणां निर्दिश्यमानत्वेन न तया व्यावृत्तिः कर्तुं शक्यते इति अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषा आश्रयणीयैव । स्थानसंबन्धो न परिभाषालभ्य इति न षष्ठीस्थाने इति परिभाषालभ्यः । किंतु अन्तरङ्गत्वादिना लभ्यः सः। यदि परिभाषालभ्यः स विधेत तर्हि तया लाभे सति स्थानेग्रहण व्यर्थं स्यात् । एवं च स्थानेग्रहणं स्पष्टार्थम् । तर्हि परिभाषार्थे उच्चार्यमाणमेवेति निर्दिश्यमानपरिभाषार्थो ज्ञेयः । चलीक्लृप्यते इत्यत्रान्त्यसदृशस्येति परिभाषायाः सत्त्वेन अन्त्यस्यैव लत्वं स्यादिति कथमुभयत्र लत्वमिति चेत् उच्यते। सा हि परिभाषा अन्त्यवर्णतद्वर्णयोरितराव्यवधाने प्रवर्तते। चलीक्लृप्यते इत्यत्र तु न तस्याः प्रवृत्तिः। अन्त्यः पकारः तद्बाधे तत्सदेशः पकारसदृशो लृकारः। एवं च लृकारपकारयोर्मध्ये अज्भक्त्या व्यवधानात् अन्त्यवर्णतद्वर्णयोरव्यवधानाभावेन न सा परिभाषा प्रवर्तते इति अत उभयोरपि लत्वसिद्धिरिति। अत्रेदं बोध्यम्- अभ्यासस्याधातुत्वेपि 'कृपो रो लः' इत्यत्र 'कृपः' इति संबन्धसामान्यषष्ठीसत्त्वेन कृपसंबन्धिळकारसदृशो वर्तत इति भवत्येव । न च नवीनमते अभ्यासस्य अधातुत्वेपि अवयवषष्ठीत्वं सुवचम् । लत्वविधौ धातोरधिकाराभावेन कृप इत्यस्य रकारस्य लो भवतीति वाक्यार्थस्य सत्त्वेपि अवयवषष्ठीत्वेऽपि अदोषः इति चेन्न । अर्थवत्परिभाषया अर्थवत एव कार्यविधानात् । अभ्यासस्य अनर्थकत्वादत्र लत्वं स्यादिति दोषः प्राप्नोत्येव । अतः संबन्धसामान्यषष्ठी एव ग्राह्या। संबन्धसामान्ये गृहीते सा परिभाषा विशेषरूपोपादाने प्रवर्तते न सामान्यसंबन्धे इत्यदोष इति दिक ॥ ९५ ॥

---

१ B. C. H. °त्यर्थं च सा. G. त्यर्थं चैषा।
२ C. G. H. वारणाय सावश्यकी; B. वारणार्थं सावश्यकी.
३ C. एतत्सूत्रे प्रयोजना°.
४ B. C. G. H. भवन्तीत्यर्थः। व्यधा°.
५ B. C. G. H. om. इति.

दृश्यते ॥ वाचनिक्येवैषा । स्पष्टा च ष्यङः ( ६. १. १३ ) इति सूत्रेऽदसो ऽसेः ( ८. २. ८० ) इति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्य इत्यन्यत्र विस्तरः ॥ ९५ ॥

नन्वव्यक्तानुकरणस्यातः (६. १. ९८) इति पररूपं पटत् इति पटितीत्यादावलो ऽन्त्यस्य ( १. १. ५२ ) इत्यन्त्यस्य प्राप्नोतीत्यत आह ।

नानर्थके ऽलोऽन्त्यविधिरनभ्यासविकारे ॥ ९६ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ भृञामित् ( ७. ४. ७६ ) इत्याद्यन्तस्यैव । अभ्यासो ऽनर्थको ऽर्थावृत्त्यभावात्किंतूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम् ॥ एषालोऽन्त्यात्सूत्रे भाष्ये स्पष्टा फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यताम् ॥ ९६ ॥

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ पुमान् स्त्रिया (१. २. ६७) इत्येकशेषापत्तिः स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह ।

प्रधानाप्रधानयोः प्रधाने कार्यसंप्रत्ययः ॥ ९७ ॥

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः ॥ स्पष्टा चेयं पुमान् स्त्रिया ( १. २. ६७ ) नपुंसकमनपुंसकेन ( १. २. ६९ ) इत्यनयोर्भाष्ये ॥ अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति हेतुमति च ( ३. १. २६ ) इत्यत्र भाष्यकैयटयोः ॥ ९७ ॥

---

नानार्थकेति परिभाषायां ज्ञापकं दश्चेति सूत्रम् । अन्यथा इदम् [illegible] इदमस्य पूर्वं पाठं गृहीत्वा इदश्चेति सूत्रेण सिद्धौ दश्चेत्यस्य [illegible] । अत्र अनर्थकत्वं नाम सर्वथा अनर्थकत्वमेव । अनभ्यासविकारे [illegible] यस्या अर्थवत्त्वं स्वीकृत्य वव्रे इत्यत्र कल्पना क्रियते । [illegible] वैयर्थ्यापत्तेः इति वृत्तौ तथास्वीकारेऽपि न दोषः । अत्र तु [illegible] सकलपम् । अस्याः फलानामन्यथासिद्धिकरणं [illegible] पूर्व उपधेति सूत्रे द्रष्टव्यम् ॥ ९६ ॥

---

१ B. इत्यनेनान्त्यस्य प्राप्नोत्यत.
२ B. इत्याद्यन्तस्यैव.
३ C. G. ऽन्त्यसूत्रे.
४ B. H. एवावधार्यम्
५ B. C. मत्वेव [illegible].
६ C. [illegible] B. G. H. [illegible]

ननु स्वस्रादिष्वप्रयुक्तो मातृशब्दस्य ङीप्निषेधः परिच्छेत्तृवाचकमातृशब्दे-ऽपि स्यादत आह ।

**अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ ९८ ॥**

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य ॥ योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम् । रथकाराधिकरणन्यायसिद्धो ऽयमर्थः ॥ कश्चित्तु दीधीवेवीटाम् ( १. १. ६ ) इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न[2] दीङ्धीङ्-वेञ्वीनामिति । तन्न । [3]तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ ९८ ॥

ननु [4]वातायनार्थे गवाक्षेऽवङो वैकल्पिकत्वाद्गोक्ष इत्याद्यपि स्यादत आह ।

**व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ ९९ ॥**

लक्ष्यानुसाराद् व्यवस्था बोध्या ॥ शाछोः (७ ४. ४१) इति सूत्रे लटः शतृ ( ३. २. १२४ ) इत्यादिसूत्रेषु [5]च भाष्ये स्पष्टा ॥ ९९ ॥

**विधिनियमसंभवे विधिरेव ज्यायान् ॥ १०० ॥**

नियमे ह्यश्रुतायाः अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्चेति

---

ननु स्वस्रादिप्रयुक्तो मातृशब्दस्येति । नन्वु स्वस्रादिषु स्वसंबन्धिकशब्द-साहचर्यात् मातृशब्दोऽपि स्वसंबन्धिक एव गृह्येतेति न दोष इत्यवतरणं न युज्यते इति चेन्न । मातृ इत्युपलक्षणम् । स्वस्रादिषु सर्वत्रैव सदेह. । तत्रापि मातृशब्द-वद् व्युत्पादनसंभवादिति ज्ञेयम् ॥ ९८ ॥

विधिनियमसंभवे इति । यस्य हल इति इत्यत्र भाष्ये स्पष्टैषामिति ] तत्र हि अकारलोपस्य अतो लोप इति सूत्रेण सिद्धिः । तत्र यस्येति संघातग्रहणस्वी-कारेऽपि अलोन्त्यपरिभाषया अन्त्यस्य लोप इति अतो लोप इति सिद्धौ वैयर्थ्यम् । तत्र नियमोऽपि संभवति । लोपो यदि भवेद्धलः परस्यैव इति लोलूयते इत्यत्र दोषः । एवं च तत्र भाष्ये नियमो न स्वीकृतः किंतु विधिरेवेति सिद्धम् । नियमे ह्यश्रुता या इति । इदं च तत्र कैयटे स्पष्टम् ॥ १०० ॥

---

१ B. °शब्दस्यापि
२ B. G H. न तु दीङ्धीङ्°.
३ B. तथा दीवे°.
४ B. वातायनार्थंगवाक्षे.
५ B च स्पष्टैषा भाष्ये.

लाघवादिविधिरेवेति बोध्यम् ॥ यस्य हलः ( ६. ४. ४९ ) इत्यत्र भाष्ये स्पष्टेयम् ॥ १०० ॥

नन्वाशंसायां भूतवच्च ( ३. ३. १३२ ) इत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह ।

सामान्यातिदेशे विशेषानतिदेशः ॥ १०१ ॥

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्या बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः ॥ इयमनित्या न ल्यपि ( ६. ४. ६९ ) इति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि ॥ स्पष्टं चैतत्सर्वं स्थानिवत्सूत्रे भाष्ये ॥ १०१ ॥

ननु तित्स्वरितम् ( ६. १. १८५ ) इति स्वरितत्वं किरतीत्यादावपि स्यादत आह ।

प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १०२ ॥

इयं चाङ्गस्य ( ६. ४. १. ) इति सूत्रे भाष्ये पठिता । वर्णग्रहणे च न प्रवर्तत इति तत्रैव कैयटे स्पष्टम् । अत एव सनाशंसभिक्ष उः ( ३. २. १६८ ) चले ( ६. ३. ११८ ) इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ॥ परे तु तित्स्वरितम् ( ६. १. १८५ ) इति सूत्र एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम् । अङ्गस्य ( ६.४.१ ) इति सूत्रे तत्रत्यव्याख्यानायैषा भाष्य एकदेशिनोक्ता । अत एव तिति प्रत्ययग्रहणं कर्तव्यमिति वार्तिककृतोक्तम् । उक्तसूत्रयोर्व्याख्यानात्प्रत्यययोरेव ग्रहणमित्याहुः ॥१०२॥

ननु विपराभ्यां जेः ( १. ३. १९ ) इत्यात्मनेपदं परा सेना जयतीत्यर्थके परा जयति सेनेत्यत्र प्राप्नोतीत्यत आह ।

---

१ C. G. इत्यत्रेत्यादेः सनुम इत्यत्र च भाष्ये, B. H. इत्यत्रेत्यादेः सनुम इत्यादौ च भाष्ये, P. mentions this reading.

२ C. सेनायतन°.

३ B. विशेषार्थातिदेशो.

४ B. C. G. H. ननु सनाशंस [३. २. १६८] इत्युः सन् धातोरपि स्यादत आह, P. mentions this reading.

५ B. G. H. प्रत्ययस्यैव, P. mentions this reading.

६ B. G. H. इव चाङ्गसंज्ञासूत्रे; P. mentions this reading.

## सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥ १०३ ॥

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम् ॥ सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते । रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम् । सदृशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च ॥ ध्वनितं चेदं कर्मप्रवचनीययुक्ते द्वितीया ( २.३.८ ) इति सूत्रे भाष्ये । तत्र हि पञ्चम्यपाङ्परिभिः ( २. ३. १० ) इति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने चायं खल्वपशब्दो ऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य को ऽन्यः सहायो भवितुमर्हत्यन्यो वर्जनार्थाद्यथास्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इत्युक्तम् । तेन हि सदृशानामेव प्रयोगे सहायभावो बोधितः ॥ द्विस्त्रिश्चतुः ( ८. ३ ४३ ) इति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषानित्या । तेन दीधीवेवीटाम् ( १. १. ६ ) इत्यत्र धातुसाहचर्ये ऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः ॥ १०३ ॥

नन्वस्थि ( ७. १. ७५ ) इत्याद्यनङ् प्रियसक्थ्ना ब्राह्मणेनेत्यत्र स्यादङ्गस्य नपुंसकत्वाभावादत आह ।

## श्रुतानुमितयोः श्रुतसंबन्धो बलवान् ॥ १०४ ॥

---

सहचरितासहचरितयोरिति । परा सेना जयतीति । तेनेति विशिष्टसाहचर्यात् अत्र पराशब्दस्य उपसर्गस्य ग्रहणं न तु उत्कृष्टार्थस्य पराशब्दस्यापि । अत्रेदं शङ्क्यते । अनया परिभाषया अवधारणं क्रियते । परंतु तन्न कर्तुं शक्यते । कुतः । एषा हि परिभाषा एकस्मिन् निश्चिते अपरस्य निश्चयं कर्तुं प्रवर्तते । अत्र तु वि इत्यस्य निश्चय एव नास्ति । तत्र पक्षिवाचकस्य ग्रहणं कर्तुं शक्यते । न च विजयते इति प्रयोगाभावात् स न संग्राह्यः इति चेन्न । तथा सति अतिवि कुलं इति समासे नपुंसके लुकि च कृते तत्र स्यादिति दोष इति । तदपि चानभिधानादिति बोध्यम् ॥ १०३ ॥

श्रुतानुमितयोरिति । अस्यां परिभाषायामन्ते तक्रकौण्डिन्यन्यायेनेति । अत्र निमित्तकार्यत्वयोरुद्देश्यत्वेन कथं तक्रकौण्डिन्यन्यायेन बाध इति चेन्न । अचो रहाभ्यां द्वे इति द्वित्वेन अनचि चेत्यस्य बाध इत्यर्थेनादोषात् इति शम् ॥ १०४ ॥

---

१ B. G. H. इत्यनेन.

२ B. C. H. कृत्वोऽर्थानां; P. mentions this reading.

श्रुतेनैव सबन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः । प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः । एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणं नाङ्गस्य । शीङ्क्षीलुम्विधिषु तु गृह्यमाणस्याभावात्प्रकरणप्राप्ताङ्गस्यैव विशेषणम् । अत एव वा नपुंसकस्य [ ७, १, ७९ ] इति सूत्रं वा शावितिं न कृतम् । तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद्बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र मा भूद्बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम् ॥ स्पष्टं चेदं स्वमोर्नपुंसकात् [ ७. १. २३ ] इत्यत्र भाष्ये ॥ केचित्त्वचो रहाभ्यां द्वे [ ८, ४, ४६ ] इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तर्भावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः । तन्न । तक्रकौण्डिन्यन्यायेन सिद्धेरित्यन्यत्र विस्तरः ॥ १०४ ॥

ननु तत्पुरुषे तुल्यार्थ [ ६. २. २ ] इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा गतिरस्याधुपाभूम्य. [ २. ४. ७७ ] इति लुक् पैशोषणं इत्यत्र कृतात्वात्परस्यापि स्यादत आह ।

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ १०५ ॥

लक्षणप्रतिपदोक्तयोरिति । परमकारकेण इत्यत्र च य निवृत्तिः क्रियते । तत्र किं लाक्षणिकम् । तृतीया लाक्षणिकी आहोस्वित् समासो लाक्षणिकः । उभयमपि न लाक्षणिकम् । अत्र तृतीया न लाक्षणिकी न लाक्षणिकः समासोऽपि । किं तर्हि समूहः तृतीयासमासो लाक्षणिकः. विभाषा द्विकसमास इतिवत् । तत्र यथा द्विकशब्दो द्विकसमास अनेकमन्यपदार्थे इति सूत्रेण न विहित अत द्विकस-

१ G H शिशीनुम्विधिषु
२ B C. H. नपुंसकग्रहणं हि तत्र
३ B G H. इत्यत्र च यथा स्यादि°
४ B श्रुतेऽकस्य
५ B °मर्थानुमित
६ C इत्यत्र व्याख्यान

लक्षणेनेत्यर्थ[1] ॥ तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादि प्रतिपदोक्तस्तस्यैव ग्रहण शीघ्रोपस्थितिकत्वात्। द्वितीयो हि विलम्बोपस्थितिक । पै इत्यस्य पा इति रूप लक्षणानुसधानपूर्वक विलम्बोपस्थितिक पिबतेस्तु[2] तच्छीघ्रोपस्थितिकम् । इदमेव ह्येतत्परिभाषाबीजम् ॥ इयं च वर्णग्रहणेऽप्यो-त्सूत्रे भाष्ये सचारितत्वात् । यत्तु वर्णग्रहणे नैषा आदेच [ ६, १, ४५ ] इत्यत्रोपदेशग्रहणादिति तत्तु[3] तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ॥ अनित्या चेयं सुबन्ध महाव्याहृते [ ८, २, ७१ ] इति

---

मासस्य लाक्षणिकत्वम् । एवमत्र तृतीयासमासो लाक्षणिक । न हि तृतीयासमासस्य प्रतिपदोक्तत्व वक्तु शक्यते । अतस्तस्य व्यावृत्तिरिति बोध्यम् ॥ वर्णग्रहणे नैषेति । वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते इत्यत्रविषये प्रमाणमादेच उपदेश इति सूत्रस्थमुपदेशग्रहणम् । तद्धि चेता स्तोतेत्यत्र आत्व मा भूदित्येतदर्थं क्रियते । तन्न कर्तव्यम् । लक्षणप्रतिपदोक्तपरिभाषया तद्व्यावृत्तिसभवात् । तज्ज्ञापयति—वर्णग्रहणे नेयमिति । एव च चेता स्तोतेत्यत्र परिभाषाऽभावात् आत्व स्यात् । तद्व्यावृत्त्यर्थं क्रियमाणमुपदेशग्रहणमावश्यकम् । अन्यत्रफल शुक्लीभवति । अत्र शुक्ला इति टाबादेशस्य लाक्षणिकत्वेऽपि परिभाषाऽभावात् अस्य च्वौ इतीत्व सिध्यतीति बोध्यम् ॥ तत एव द्रष्टव्यमिति । अत्र उपदेशग्रहण किमर्थम् । गाशब्दादीनां व्यावृत्त्यर्थम् । न च धातुत्वादेव तद्व्यावृत्ति । तत्र धातोरित्यधिकाराभावात् । कथ तर्हि कौमुद्यामुक्तम्—एजन्तस्य च धातोरिति चेदुच्यते । प्रातिपदिकानामुद्देशा न तूपदेशा अतस्तथा व्यावृत्तिः । एवं च अर्थेन उपदेशे एजन्तो धातुरेव लभ्यत इति धातोरित्युक्तम् । उपदेशग्रहण गो इत्यादिव्यावृत्त्यर्थं लभ्यते । अत. उपदेशग्रहण चरितार्थमिति

---

१ P लक्षणेनेत्यर्थ ; B C G H लक्षण लाक्षणिकमुपधारात्; after लक्षणेनेत्यर्थ P rejects the reading as that of Sirideva

२ C. पिबतेस्तु

३ B. ॰ग्रहणात् तत्तु

महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ १०५ ॥

नन्वेवं देङो दोधातोश्च कृतात्वस्य घुसंज्ञा न स्याद्यथेह आत्वे प्रणिमातेत्यादौ नेर्गदनद ( ८. ४. १७ ) इति णत्वं न स्यात्तथा गै इत्यस्यात्वे घुमास्था ( ६. ४. ६६ ) इतीत्वं न स्यादत आह ।

गामादाग्रहणेष्वविशेषः ॥ १०६ ॥

अत्र ज्ञापकं ङेयः ङित्त्वम् । तद्धयदापिति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन ङित्त्वेन । तेन चैकदेशानुमतिद्वारा संपूर्णपरिभाषा ज्ञाप्यते ॥ इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरणपरिभाषाणां बाधिका दाधा घु ( १. १. २० ) इति सूत्रे भाष्ये स्पष्टा ॥ गातिस्था ( २. ४. ७७ ) इति सूत्रे इणादेशगाग्रहणमिष्यत इत्यन्यत्र विस्तरः ॥ १०६ ॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह ।

प्रत्येकं वाक्यपरिसमाप्तिः ॥ १०७ ॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥ १०७ ॥

नन्वेवं संयोगसंज्ञा समाससंज्ञाभ्यस्तसंज्ञापि प्रत्येकं स्युरत आह ।

क्वचित्समुदायेऽपि ॥ १०८ ॥

गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ दण्डनवत् ॥ लक्ष्यानुरोधेन च व्यवस्था ॥ १०८ ॥

ननु यू स्त्र्याख्यौ ( १. ४. ३ ) इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकत्वाप्राप्त्योदात्ताद्यन्यतमोच्चारणे ऽन्यस्वरकस्य संज्ञा न स्यादत आह ।

---

प्राचीनोक्तं चिन्त्यमिति ॥ महाव्याहृतीति । महाव्याहृतिग्रहणादिति अन्यत्रकृतं मनोरमोक्तं ग्राह्यम् ॥ १०५ ॥

---

१ B G अत्र च ज्ञापक.

२ B. दाधा इति द्वय. घु इति सूत्रे भाष्ये स्पष्टम्.

३ B इणादेशगाग्रहणमिष्यत इति न दोष इत्यन्यत्र.

४ B. भुज्यन्त मित्यत्र

५ B. °समुदाये उदाहरण°.

शेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह ।

## पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १११ ॥

एवं च ह्रस्वस्यापि ह्रस्वत्वे कृते लक्ष्ये लक्षणस्येति न्यायेन न पुनर्ह्रस्वः । तदुक्तमिको झल् ( १. २. ९ ) इति सूत्रे भाष्ये । कृतकारि खल्वपि शास्त्रं पर्जन्यवदिति । सिद्धे ऽपि ह्रस्वादिकारीत्यर्थः ॥ न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम् । समो वा लोपमेक इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ समः सुटि ( ८. ३. ५ ) इति सूत्रस्यैव मानत्वात् । संप्रसारणाच्च ( ६. १. १०८ ) सिचि वृद्धिः ( ७. २. १ ) इत्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ॥ अत्र विकारकृतो लक्ष्यभेदो नेति सिचि वृद्धिरिति भाष्यात्प्रतीयत इत्यन्यत्र विस्तरः ॥१११॥

ननु स्यन्दूधातोः स्यन्स्यतीत्यादौ आत्मनेपदनिमित्तत्वाभावनिमित्तत्वान्न वृद्भ्यश्चतुर्भ्यः (७.२.५९) इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह—

## निषेधाश्च बलीयांसः ॥ ११२ ॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः ॥ चतुर्थ्यं इति तु स्पष्टार्थमेव । अत एव तत्प्रत्याख्यानं भाष्योक्तं संगच्छते ॥ अत एव वर्णसंज्ञादेर्निषेधविषये न

१ B. G. H. इस्वे.

२ B. H. प्रवृत्तिरिति न्याये न.

३ B H. त्रिसकारस्य च.

४ B. C. H. विकारागमकृतो.

५ B. H. स्यन्स्यतीत्यादौ सकारादिविशेषापेक्षत्वादात्मनेपद'; P. rejects this reading.

६ B. तत्प्रत्याख्यानं भाष्यं.

७ C. निषेधविषयत्वे न.

विकल्पः। अन्यथा मीमांसकरीत्या निषेधपर्युदासत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः। अत एव द्वन्द्वे च (१.१.३१) विभाषा जसि (१.१.३२) इति चरितार्थम्॥ विध्युन्मूलनाय प्रवृत्तिरस्या बीजम्॥ न लुमता (१.१.६३) कर्मवत्कर्मणा तुल्यक्रियः (३.१.८७) इत्यनयोर्भाष्ये स्पष्टैषा॥ ११२॥

नन्वलन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह।

## अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे॥ ११३॥

यस्यार्थः प्रकृत्या प्रत्याय्यते सो ऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः। स्वार्थे इत्यस्य स्वीयप्रकृत्यर्थे इत्यर्थः॥ महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम्॥ सुपि स्थः (३.२.४) इत्यादिसूत्रेषु भाष्ये स्पष्टैषा॥ ११३॥

## योगविभागादिष्टसिद्धिः॥ ११४॥

इष्टसिद्धिरेव न त्वनिष्टापादनं कार्यमित्यर्थः। तत्तत्समानविधिकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम्॥ ११४॥

## पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते॥ ११५॥

तत्रतत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम्॥ ११५॥

---

निषेधाश्च बलीयांस। मीमांसकरीत्येति। विधेरुपजीव्यत्वं निषेधस्य विशेषविषयत्वमित्येवमुभयसमत्वाद्विकल्पापत्ति.। विध्युन्मूलनायेति। यदि हि निषेधस्य बलीयस्त्वं न स्यात्तर्हि तेन विध्युन्मूलनं न स्यात्। यतश्च तस्य विध्युन्मूलनं दृश्यते अतस्तस्य बलीयस्त्वमिति॥ ११२॥

योगविभागादिष्टसिद्धिः॥ तत्तत्समानेति। यथा सुपीति योगस्य स्थ इति आनित्यत्वं वर्ण्यते। अन्यथा तद्द्वयस्यार्थादिति ज्ञापनं क्रियते-पूर्वस्यानित्यत्वमिति। तेन इष्टसिद्धिरेव कार्येति सिद्धम्॥ ११४॥

---

१ B. H. स दुर्वारः

२ B. स्पष्टा.

३ B. प्रत्याय्यते.

४ C. G. H. तेन परिभाषामाद्यामनिष्टं नापा°.

## ज्ञापकसिद्धं न सर्वत्र ॥ ११६ ॥

स्पष्टमेव पठितव्येऽनुमानाद् बोधनमसार्वत्रिकार्थमित्यर्थः । तेन ज्ञापकसिद्धपरिभाषयानिष्टं नापादनीयमिति तात्पर्यम् । भाष्येऽपि[1] ध्वनितमेतन्वपाप्सूत्रादौ ॥ ज्ञापकेति न्यायस्याप्युपलक्षणम् ॥ न्यायज्ञापकसिद्धानामपि केषांचित्कथनमन्येषामानित्यत्वबोधनायेति भावः । यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानिवत्सूत्रं ज्ञापकसिद्धं च तत्रानल्विधाविति[2] ॥ ११६ ॥

ननु द्रोग्धाद्रोग्धा द्रोढाद्रोढेत्यादौ घत्वादीनासिद्धत्वात्पूर्वं द्वित्व एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह ।

## पूर्वत्रासिद्धीयमद्वित्वे ॥ ११७ ॥

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । पूर्वत्रासिद्धम् ( ८. २. १ ) इत्यधिकारभवं शास्त्रमस्या लिङ्गम्[3] ॥ यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः ॥ सर्वस्य द्वे (८. १. १) इति सूत्रे भाष्ये स्पष्टेयम्[4] ॥ ११७ ॥

---

पूर्वत्रासिद्धीयमद्वित्वे । अस्या लिङ्गमिति । पूर्वत्रासिद्धमित्यधिकारभवं यच्छास्त्रं तस्य व्याख्याकरणवेलायां तदेकवाक्यतापन्नं पूर्वत्रासिद्धं शास्त्रं भवति । तथा च वाक्यार्थे कृते इदमसिद्धं भवति । पूर्वस्मिन्कर्तव्ये इति वाक्यार्थे जाते आद्वित्वे इति तत्र उपस्थितं भवति । तथा च द्वित्वभिन्नकार्ये इदमसिद्धं द्वित्वे कर्तव्ये तु सिद्धमित्यनेन 'पूर्वत्रासिद्धमद्वित्वे' इति वदन्तः परास्ताः । एतेन नाम पूर्वत्रासिद्धेत्यधिकारभवशास्त्रस्यलिङ्गवचनेनेत्यर्थः इति ॥ ११७ ॥

---

१ C. om. अपि.

२ C. ॰सिद्ध तत्रान॰.

३ C. G. ॰भवशास्त्रमस्या ज्ञापकम्. H. ॰भवशास्त्रत्वमस्या लिङ्गम्.

४ B. स्पष्टैवा.

ननु गोष्वश्वेषु च स्वामीत्यादिवद्गोष्वश्वानां च स्वामीत्यपि स्यात्स्वामीश्वर (२. ३. ३९) इति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह ।

एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ ११८ ॥

यत्रान्याकृतिकरणे भिन्नार्थत्वसंभावना तद्विषयोयं न्याय इत्यन्यत्र विस्तरः ॥ कृञ्चानुप्रयुज्यते (३. १. ४०) इति सूत्रे भाष्ये स्पष्टेयम् ॥ ११८ ॥

ननु विध्याधेत्यादौ परत्वाद्वलादिःशेषे वस्य संप्रसारणं स्यादत आह ।

संप्रसारणं तदाश्रयं च कार्यं बलवत् ॥ ११९ ॥

तदाश्रयं संप्रसारणाच्च (६. १. १०८) इति पूर्वरूपम् ॥ वस्तुतो लिट्यभ्यासस्य (६. १. १७) इति सूत्र उभयेषांग्रहणस्योभयेषां संप्रसारणमेव यथा स्यादित्येवंर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति लिट्यभ्यासस्येति सूत्रे भाष्ये स्पष्टम् । फलान्तराण्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा । णौ च संश्चङोः

---

एकस्या आकृतेरिति । भिन्नार्थत्वसंभावनेति । प्रकृते गोषु अश्वानां स्वामी इत्यत्र अश्वानां स्वामी गोषु वर्तते इति भिन्नार्थसंभावनास्तीति परिभाषाप्रवृत्तिर्ज्ञेयेति ॥ ११८ ॥

संप्रसारणं तदाश्रयं चेति । वस्तुत इति । प्राचीनाः उभयेषांग्रहणेनेयं ज्ञाप्यते । नेयं परिभाषा, किं तूभयेषांग्रहणस्य सामर्थ्याद् संप्रसारणमेव कर्तव्यमित्यर्थासिद्धमिति नव्याः ॥ ११९ ॥

---

१ C द्वितीयायास्तृतीयायाश्च. G. द्वितीयस्यास्तृतीयायश्च.

२ B. तद्विषये.

३ B. सूत्रभाष्ये.

४ B. H. om. कार्यं.

५ B. ०त्यर्थकत्वेनेदं.

’5

( ६. १. ३१ ) इत्यादौ[1] संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ ११९ ॥

यत्तु

## क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२०.१ ॥

तेन निसमुपविभ्यो ह्वः ( १. ३. ३० ) इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः ॥

तथा

## औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥१२०.२॥

तेन दादेर्धातोः ( ८. २. ३२ ) इत्यत्रौपदेशिकधातोरेव[2] ग्रहणमिति तन्न। तयोर्निर्मूलत्वाद्भाष्याव्यवहृतत्वाच्च । न च विकृतिः प्रकृतिं गृह्णातीति ग्रहिज्या ( ६. १ १६ ) इति सूत्रस्थभाष्येणाद्यायास्तिरस्काराच्च । निसमुपविभ्यो ह्व इत्यादौ ह्वेञो ऽनुकरणे सौत्रः प्रयोगः । आत्त्वविषय एवात्मनेपदं प्रयोगस्यानामेवानुकरणस्य घुसंज्ञासूत्रे[5] भाष्ये स्पष्टमुक्तत्वादित्यन्ये ॥ अन्त्यापि तत्रतत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्तिककृतश्चासंमता । इह हि व्याकरणे सर्वेष्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते यत्रास्यैतद्रूपमिति[3] रूपनिर्ग्रहश्च[4] शब्दस्य नान्तरेण लौकिकं प्रयोगं तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते क उपदेशो नामेति घेसंज्ञासूत्रस्थभाष्येण प्रायोगिकासंभवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासंमता च ॥ भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण । दादेरिति सूत्रे दादिपदस्यौपदेशिकदादिस्वपरति लक्षणेति न दोष इत्यन्यत्र विस्तरः ॥

---

१ C. इत्यादौ संश्चङोरित्यादिर्विषय°; B. इत्यादिविषय°.

२ C. °धात्वोर्ग्रहणमिति.

३ B. H. om. यत्रास्यैतद्रूपमिति.

४ C. H. रूपनिग्रहश्च.

५ B. H. घुसंज्ञासूत्रे°.

यदपि नन्वजर्घां बेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युस्तथा यङ्लुकि बेभिदितेत्यादावेकाचः ( ७. २. १० ) इति इण्णिषेधः स्यादत आह ।

श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १२०.२ ॥

अनुबन्धनिर्देशो द्विधा स्वरूपेण ङित इत्यादिपदेन च ॥ हन्ति याति वाति । सनीवन्त ( ७. २. ४९ ) इति सूत्रे भरतेति । दीङो युडचि ( ६. ४. ६३ ) अनुदात्तङितः ( १. ३. १२ ) दिवादिभ्यः श्यन् ( ३. १. ६९ ) एकाच उपदेशे ( ७. २. १० ) इत्युदाहरणानि ॥ द्वित्वं सनाद्यन्ताः ( ३. १. ३२ ) इति भूवादयः ( १. ३. १ ) इति च धातुत्वं च भवत्येव गुणो यङ्लुकोः ( ७. ४. ८२ ) इत्यादिभिर्निषेधानित्यत्वकल्पनात् । तेन मम्मात्रो ऽप्यजर्घा इत्यादौ भवति । अत एव श्वीदितः ( ७. २. १४ ) इति सूत्रे कैयटे यत्रैकाज्ग्रहणं किंचिदिति पाठः ॥ एकाच उपदेशे ऽनुदात्तात् ( ७. २ १० ) इति सूत्र एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते । अन्यथोपदेशे ऽनेकाचामनुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति । तदपि न ।

---

श्तिपा शपानुबन्धेनेति । तदपि नेति । एकाज्ग्रहणस्य वधिस्याबृत्त्यर्थमाव-श्यकत्वात् । अन्यथा तत्रापि निषेधः स्यात् । न च वधिः स्यान्युपदेशे एकाच् विद्यते, अतः न तदावृत्त्यर्थमेकाज्ग्रहणं कार्यमिति वेद्य । साक्षादुपदेशासंभवे

---

१ B. मम्व्यजर्घां बिभेदृणी° ; C. यदपि नन्वजर्घा बेभिदिर्णी°.
२ C. स्यास्तथा. G. स्याजहा.
३ B. यङ्लुङ्ति.
४ B. भरति.
५ B. युङवेति.
६ P. इति च धातुत्वं च; B. C. G. H. इति धातुत्व च.
७ C. भवत्यवधारण.
८ C. °देशानुमतिर्ज्ञाप्य°.

दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेष्टिः । यङ्लोपेत्यादि[1] भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम् । किं च तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम् । इद्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात् । अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमिदं वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनतापत्तेः ॥ न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम् । एवं च बिभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवेत्युत्तरखण्डे ऽस्तित्ववदेतद्ध दयतेः ( ७. ४. ९ ) इति[2] सूत्रे भाष्ये स्पष्टम् । एवं च प्रकृतभाष्यासंगतिरिति वाच्यम् । आक्षेप · आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्ट एवेत्येकाचो द्वे ( ६. १. १ ) इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तनादिशेषे शब्देन्दुशेखरे ॥ धातुत्वं तूत्तरखण्ड एव । अत एवैकाचो बशो भष् झषन्तस्य स्ध्वोः ( ८. २. ३७ ) इति सूत्रे धातोरवयव-

न दोष इत्यभिप्रेत्याह--किं चेति । यथा लोपे कृते स्थानिवत्त्वेनेति तथा यङ्लुकि उपायो न दर्शितः इति तेषां भवति परिभाषा वर्तते इति च न्यूनतापत्तिरिति वाच्यम् । उत्तरम्-इड्विषये इति । सुवचं सुस्पष्टं चेति । ततः पूर्वपक्षिसिद्धान्तिनोर्मध्ये अपरः कश्चिदुवाच--न चेति । तस्यायमाशयः । दर्शितानुकूलं भाष्यमेकदेश्युक्तिः न तु सिद्धान्तभूतम् । अतो भाष्यस्यपूर्वपक्षस्योत्तरं एकदेश्युक्तमिति देयम् । न तु सिद्धान्तभूतम् । इड्विषयेत्येकदेश्युक्तिस्तु कथमिति चेदुच्यते । एकाच इत्यस्य आर्धधातुकादित्यस्य विशेषणात्, धातुत्वस्य च उत्तरखण्डे इत्यर्थस्य सत्त्वात् बिभित्सतीत्यत्र तान्त उत्तरखण्डे धातुत्वेन निषेधसिद्धेः पूर्वोक्तभाष्यासंगतिरिति । अत एवेति । उत्तरखण्डस्यैव धातुत्वेनेत्यर्थः । एकाचो बश इति सूत्रे वैयधिकरण्येनान्वयस्य फलमुक्तं--

1 B. C. G. H. तद्विषयत्वे.
2 C. G. °धातोरेकाजिति विशेषणम्.
3 . G. om. भाष्ये,
4 °रवयवस्यैकाजिति.
5

भाष्यानुक्तत्वादेकाज्ग्रहणस्य वधिन्यावृत्त्यर्थमावश्यकत्वाच्च । न च यधिः स्थान्युपदेश एकाजेवेति वाच्यम् । साक्षादुपदेशसंभवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ॥ किंचोत्तरार्थमेकाज्ग्रहणम् । अत एव जागरितवानित्यादावुपदेश 'उगन्तत्वमादाय श्र्युकः किति ( ७. २. ११ ) इतीण्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधाये-त्याकरे स्पष्टम् ॥ न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो बिभित्सतीति

---

स्थान्युपदेशग्रहणे मानाभावात् । उपदेशत्वावच्छेदेन एकाज् ग्राह्यः, न तु स्थान्युपदेशत्वावच्छेदेनेति तस्यार्थवत्त्वादिति । किं च । एकाज्ग्रहणस्य उत्तरार्थत्वमपि प्रयोजनं वक्तुं शक्यते । अत एव जागरितवानित्यत्र इण्निषेधो न । तथाहि । जागृ इत्यस्मात् निष्ठाक्तप्रत्यये कृते नित्यत्वाद् गुणे कृते पश्चादिडागमो भवेत् इति तदर्थमेकाज्ग्रहणमावश्यकम् । न च तत्र उगन्तत्वाभावादेव न इण्निषेध इति वाच्यम् । श्र्युकः कितीति सूत्रे उपदेशे उगन्तत्वं गृहीत्वा स निषेधो भवतीत्युक्तत्वेन अदोषात् । तत्र उपदेशे इत्यनुवृत्तिः स्तीर्णमित्यादौ आवश्यकी । अन्यथा तत्र इत्वे उगन्तत्वाभावादिट् स्यादिति । अत्र भाष्यविरोधमाशङ्कते । न च भाष्ये इति । भाष्ये बेभिदिता इत्यादिरूपसिद्ध्यर्थं एकाचः श्रूयमाणादङ्गादिति पक्ष उत्थापितः । स च न सिद्धान्तभूतः । किं तु एकदेश्युक्तः । ततः बिभित्सतीत्यत्रापि न श्रूयमाण एकाच् इति मनसि गृहीत्वोक्तं सनीट्प्रतिषेध इति । तथा यङ्लुकि न दोषोपन्यास उक्तः । एवं च तत्र भाष्यकाराणामिडागम इष्टः । स चानया परिभाषयैवेति भाष्यविरोधः । न च नास्ति भाष्यविरोधः--यङ्लोपे इत्युपलक्षणं यङ्लुक इति । एवं च लोप इव लुकि अपि व्यवस्था भवेत् इति वाच्यम् । उपक्रमोपसंहारबलेन तस्य लुग्विषयत्वाभावनिश्चयात् । अथवा स्वीकृते तथात्वे

---

१ B. उपदेशत्वावच्छिन्नेन°.

२ B. उगन्तमादाय.

३ B. वृत्तिश्चास्ति स्तीर्णमि° G. वृत्तिस्तु स्तीर्णमि°.

४ C. सनि इट्प्रतिषेधो.

दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः । यङ्लोपेत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम् । किं च तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम् । इड्विषये यङ्लुको लोकेऽनभिधानेन च्छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात् । अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमिह वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनतापत्तेः ॥ न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम् । एवं च विभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवोत्तरखण्डे ऽस्तित्वमदेतच्च दयतेः ( ७. ४. ९ ) इति[3] सूत्रे भाष्ये स्पष्टम् । एवं च प्रकृतभाष्यासंगतिरिति वाच्यम् । आक्षेप आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्ट एवेत्येकाचो द्वे ( ६. १. १ ) इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तन्नादिशेषे शब्देन्दुशेखरे ॥ धातुत्वं तूत्तरखण्ड एव । अत एवैकाचो बशो भष् झषन्तस्य स्ध्वोः ( ८. २. ३७ ) इति सूत्रे धातोर[4]वयव-

---

न दोष इत्यभिप्रेत्याह--किं चेति । यथा लोपे कृते स्थानिवत्त्वेनेति तथा यङ्लुकि उपायो न दर्शितः इति तेषां मनसि परिभाषा वर्तते इति च न्यूनतापत्तिरिति वाच्यम् । उत्तरम्-इड्विषये इति । सुवचं सुपृष्टं चेति । ततः पूर्वपक्षिसिद्धान्तिनोर्मध्ये अपरः कश्चिदुवाच--न चेति । तस्यायमाशयः । दीक्षितानुकूलं भाष्यमेकदेशयुक्तिः न तु सिद्धान्तभूतम् । अतो भाष्यस्थपूर्वपक्षस्योत्तरं एकदेशयुक्तमिति देयम् । न तु सिद्धान्तभूतम् । इड्विषयेत्येकदेशयुक्तिस्तु कथमिति चेदुच्यते । एकाच इत्यस्य आर्धधातुकादित्यस्य विशेषणात्, धातुत्वस्य च उत्तरखण्डे इत्यर्थस्य सत्त्वात् बिभित्सतीत्यत्र तान्त उत्तरखण्डे धातुत्वेन निषेधसिद्धेः पूर्वोक्तभाष्यासंगतिरिति । अत एवेति । उत्तरखण्डस्यैव धातुत्वेनेत्यर्थः । एकाचो बश इति सूत्रे वैयधिकरण्येनान्वयस्य फलमुक्तं--

---

१ B. C. G. H. तद्विषयत्वे.

२ C. G. °धातोरेकाजिति विशेषणम्.

३ B. सूत्रभाष्ये. G. om. भाष्ये.

४ B. C. धातोरवयवस्यैकाजिति.

भाष्यानुक्तत्वादेकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च । न च वधिः स्थान्युपदेश एकाजेवेति वाच्यम् । साक्षादुपदेशासंभवेनैतद्विषये स्थान्युपदेशग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च ॥ किंचोत्तरार्थमेकाज्ग्रहणम् । अत एव जागरितवानित्यादावुपदेश उगन्तत्वमादाय श्र्युकः किति ( ७. २. ११ ) इतीण्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधापत्त्याकरे स्पष्टम् ॥ न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थे सनीट्प्रतिषेधो वक्तव्यो बिभित्सतीति

---

स्थान्युपदेशग्रहणे मानाभावात् । उपदेशत्वावच्छेदेन एकाज् ग्राह्यः, न तु स्थान्युपदेशत्वावच्छेदेनेति तस्यार्थवत्त्वादिति । किं च । एकाज्ग्रहणस्य उत्तरार्थत्वमपि प्रयोजनं वक्तुं शक्यते । अत एव जागरितवानित्यत्र इण्निषेधो न । तथाहि । जागृ इत्यस्मात् निष्ठाक्तप्रत्यये कृते नित्यत्वाद् गुणे कृते पश्चादिडागमो भवेत् इति तदर्थमेकाज्ग्रहणमावश्यकम् । न च तत्र उगन्तत्वाभावादेव न इण्निषेध इति वाच्यम् । श्र्युकः कितीति सूत्रे उपदेशे उगन्तत्वं गृहीत्वा स निषेधो भवतीत्युक्तत्वेन अदोषात् । तत्र उपदेशे इत्यनुवृत्तिः स्तीर्णमित्यादौ आवश्यकी । अन्यथा तत्र इत्वे उगन्तत्वाभावादिट् स्यादिति । अत्र भाष्यविरोधमाशङ्कते । न च भाष्ये इति । भाष्ये बेभिदिता इत्यादिरूपसिद्ध्यर्थं एकाचः श्रूयमाणादङ्गादिति पक्ष उत्थापितः । स च न सिद्धान्तभूतः । किं तु एकदेश्युक्तः । ततः बिभित्सतीत्यत्रापि न श्रूयमाण एकाच् इति मनसि गृहीत्वोक्त सनीट्प्रतिषेध इति । तथा यङ्लुकि न दोषोपन्यास उक्तः । एवं च तत्र भाष्यकाराणामिडागम इष्टः । स चानया परिभाषयैवेति भाष्यविरोधः । न च नास्ति भाष्यविरोधः--यङ्लोपे इत्युपलक्षणं यङ्लुक इति । एवं च लोप इव लुकि अपि व्यवस्था भवेत् इति वाच्यम् । उपक्रमोपसंहारबलेन तस्य लुग्विषयत्वाभावानिश्चयात् । अथवा स्वीकृते तथात्वे

---

१ B. उपदेशत्वावच्छिन्नेनै°.

२ B. उगन्तमादाय.

३ B. वृत्तिश्चावश्यकी स्तीर्णमि° G. वृत्तिस्तु स्तीर्णमि°.

४ C. सनि इट्प्रतिषेधो.

दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः । यङ्लोपेत्यादि भाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम् । किं च तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्येव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम् । इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात् । अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमिह वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनतापत्तेः ॥ न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम् । एवं च विभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येवोत्तरखण्डे ऽस्तिस्वदेतश्च दयतेः ( ७. ४. ९ ) इति[1] सूत्रे भाष्ये स्पष्टम् । एवं च प्रकृतभाष्यासंगतिरिति वाच्यम् । आक्षेप आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्ट एवेत्येकाचो द्वे ( ६. १. १ ) इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तनादिशेषे शब्देन्दुशेखरे ॥ धातुत्वं तूत्तरखण्ड एव । अत एवैकाचो बशो भष् झषन्तस्य स्ध्वोः ( ८. २. ३७ ) इति सूत्रे धातोरवयव-

न दोष इत्यभिप्रेत्याह—किं चेति । यथा लोपे कृते स्थानिवत्त्वेनेति तथा यङ्लुकि उपायो न दर्शितः इति तेषां मनसि परिभाषा वर्तते इति च न्यूनतापत्तिरिति वाच्यम् । उत्तरम्-इड्विषये इति । सुवचं सुस्पष्टं चेति । ततः पूर्वपक्षिसिद्धान्तिनोर्मध्ये अपरः कश्चिदुवाच—न चेति । तस्यायमाशयः । दीक्षितानुकूलं भाष्यमेकदेश्युक्तिः न तु सिद्धान्तभूतम् । अतो भाष्यस्यपूर्वपक्षस्योत्तरं एकदेश्युक्तमिति देयम् । न तु सिद्धान्तभूतम् । इड्विषयेऽप्येकदेश्युक्तिस्तु कथमिति चेदुच्यते । एकाच इत्यस्य आर्धधातुकादित्यस्य विशेषणात्, धातुत्वस्य च उत्तरखण्डे इत्यर्थस्य सत्त्वात् विभित्सतीत्यत्र सान्त उत्तरखण्डे धातुत्वेन निषेधासिद्धेः पूर्वोक्तभाष्यासंगतिरिति । अत एवेति । उत्तरखण्डस्यैव धातुत्वमित्यर्थः । एकाचो बश इति सूत्रे वैयधिकरण्येनान्वयस्य फलमुक्तं—

१ B. C. G. H. तद्विषयत्वे.

२ C. G. °धातोरेकाजिति विशेषणम्.

३ B. सूत्रभाष्ये. G. om. भाष्ये,

४ B. C. धातोरवयवस्यैकाजिति.

स्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये न तु प्रसिद्धमजर्घा इति । अजर्घा बेभिदीतीत्यादौ श्नम्श्यनादयस्तु चर्करीतं चेत्य-स्यादादौ पाठेन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति । छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः । भाषायां तु तादृशानामभाव एव । श्तिप्शपादिनिर्देशास्तु भवतेरः ( ७. ४. ७३ ) इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः ॥ १२०.२ ॥

ननु जभोऽचि रधेश्च नेट्यलिटीत्येव सूत्र्यतां किं द्वौ रधिग्रहणेनेत्यत आह ।

पदगौरवाद्योगविभागो गरीयान् ॥ १२१ ॥

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव ॥ परंतु भाष्यासं-मतेयम् । टाङसि ( ७. १. १२ ) इति सूत्रस्थभाष्यविरुद्धा च । तत्र चेनो-देशेकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ॥ १२१ ॥

अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥ १२२ ॥

---

गर्धप् इति । अप्रसिद्धं प्रयोजनं भाष्ये उक्तम् । यदि च धातुत्वं समुहे स्यात्तर्हि अजर्घाः इति प्रसिद्धोदाहरणं देयं स्यात् । धातोरेकाच इत्यर्थे गर्दप् इति स्यात् । धातुत्वस्य विशिष्टे विद्यमानत्वात् इति । धातोरवयवस्य एकाच इत्यर्थे दभ् इत्ये-कात्वः सत्वेन गर्धप् इत्युक्तमेव साधु । श्नम्श्यनादय इति । चर्करीतं चेति वार्तिकम् । यङ्लुकि गणान्तरप्रयुक्तं विकरणं न भवतीति । ननु चर्करीतं चेत्यनेन स्वादि-पठितानामेव लुग् भवतीति कुतो नोक्तं तथापि स्यादिति चेन्न । स्यास्मिन्यायमा-श्रित्य सर्वेषां ग्रहणात् । असति बाधके प्रमाणानां सामान्ये पक्षपातात् इति दिक् ॥ १२०.३ ॥

---

१ C. H. श्तिपाशपा दि°

२ B. H. इत्यादिस्थतन्निर्देश°; C. G. इत्यादिसूत्रस्थनिर्देश°.

३ B. द्विरधिकरणे°; C. H. द्विरधिग्रहणे°

४ B. °विभागो बलीयान्.

५ B. G. H. चेनादेशो इकार°.

एओङ्ऐऔच्सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपदघटितसूत्रे प्रायेण पदलाघवविचार एव न तु मात्रालाघवविचार इत्यू २ काले ऽच् ( १. २. २७ ) अपृक्त एकाल् ( १. २. ४१ ) इत्यादिसूत्रेषु भाष्ये ध्वनितम् । तत्र हि सूत्रे ऽल्ग्रहणहल्ग्रहणयोर्विशेषविचारे संज्ञार्थं हल्ग्रहणं ण्यक्षत्रिय ( २. ४. ५८ ) इति सूत्रे ऽणिञोरिति वाच्यमिति त्रीणि पदान्यल्ग्रहणे तदेकं स्वादिलोपे हल्ग्रहणं ण्येति सूत्रेऽणिञोरिति न वाच्यमपृक्तस्येति वाच्यमिति त्रीण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् ॥ अचिश्नु (६.४.७७) इति सूत्र इण इत्येव सिद्धे य्वोरिति संमृच ग्रहणान्न पूर्वेणेण्ग्रहणं तत्र विभक्तिनिर्देशे संमृच ग्रहणे च सार्धास्तिस्रो मात्रा इण्ग्रहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेस्त-योतः श्यनि ( ७. ३. ७१ ) इति सूत्रे शितीति वक्तव्यं तत्रायमप्यर्थः छिवुक्रमु-

---

अर्धमात्रालाघवेनेति । ध्वनितैषेति । एच इग् ह्रस्वादेशे इति सूत्रभाष्या-वसरे एचः ह्रस्वा अपि स्युरिति पक्षे उक्तं भाष्ये—यदि एचो ह्रस्वाः स्युस्तर्हि तानेव उपदिशेदकारादिवद् इति लाघवाद् । एतेनेयं सूचिता । इति शिवम् ॥ १२२ ॥

इति श्रीमदभ्यंकरोपाह्व–महामहोपाध्यायवासुदेवशास्त्रिविरचिता परिभाषेन्दु-शेखरव्याख्या तत्त्वादर्शाभिधा समाप्तिमगमत् ॥ शुभं भवतु ॥ श्रीः ॥

---

१ B. G. H. K. °सूत्रयोर्भाष्ये ध्वनितैषा.

२ P. वाच्य मिति त्रीणि; B. C. G. H. K. वाच्यमिति तत्र त्रीणि.

३ B. इत्येव वक्तव्ये य्वोरिति संमृच समग्रहणात्पूर्वे॰.

४ P. ग्रहणे च; B. C. G. H. om. च.

५ C. K. मात्रा इण् इति तिस्रो.

६ B. K. लण्सूत्रभा॰.

७ C. G. तत्राप्ययमर्थः.

# अथ परिभाषाणामकाराद्यनुक्रमेण सूची

व्याडिपुरुषोत्तमदेवसीरदेवनागेशकृतासु परिभाषावृत्तिषु निर्दिष्टा अनुक्रमाङ्काः

| | व्याडि. परि. सूचन | पुरुषोत्तम परि. वृत्ति | सीरदेव परि. वृत्ति | नागेश परि. शेखर |
|---|---|---|---|---|
| अकृतव्यूहाः पाणिनीयाः | ६५ | १०४ | ४१ | ५६ |
| अह्नवृत्ते पुनर्वृत्तावविधिः | ३४ | ७१ | ११ | १२ |
| अनन्तरस्य विधिर्वा भवति... | १६ | १७ | | ६१ |
| अनन्त्यविकारेऽन्त्यसदेशस्य | ५२ | १०७ | ११२ | १५ |
| अनिनस्मन्ग्रहणान्यर्थवता... | | ७७ | ६५ | १६ |
| अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे... | | | १२५ | ११३ |
| अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्... | | | | १३.४ |
| अनेकान्ता अनुबन्धाः | | | | ४ |
| अन्तरङ्गादप्यपवादो बलीयान् | | | | ५७ |
| अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते | | ६८ | ८५ | ५२ |
| अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते | | ५४ | ३४ | ५४ |
| अपवादो यद्यन्यत्र चरितार्थः... | | | | ६५ |
| अभेदका गुणाः | | ५७ | ८० | १०१ |
| अभ्यासविकारेषु बाध्यबाधकभावो नास्ति | २० | २० | १६ | ६६ |
| अर्थवद्ग्रहणे नानर्थकस्य | १ | १ | १ | १४ |
| अर्धमात्रालाघवेन पुत्रोत्सवं... | | | | १२२ |

( ७. ३. ७५ ) इति सूत्रे शितीति नं कर्तव्य भवतीति भाष्ये न केवल मात्रालाघव यावदयमभ्यर्थ इति कैयटोक्ते प्रायेणेति शिवम् ।। १२२ ।।

श्रीमदुपाध्यायोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृत·
परिभाषेन्दुशेखर समाप्त. ।।



जर्मण्यदेशोद्भवेन पुण्यग्रामस्थशिक्षालये सस्कृतविद्याधिकारिणा कील्होर्नाम्ना शोधितमिद भारतदेशोद्भवेन भाण्डारकर प्राच्यविद्या संशोधनमन्दिरस्थ-सस्कृत-प्राध्यापकेन महामहोपाध्याय-अभ्यकरोपाह्व-वासुदेवशास्त्रिसुत-काशीनाथनाम्ना पितृचरणसेवया लब्धज्ञानलवेन नवोपलब्धानेकहस्तलिखितानि दृष्ट्वा पुन सशोधित तद्विरचिततत्त्वादर्शनाम्न्या टीकया बहुभि परिशिष्टैश्च सह सपादितम् ।।

।। शुभ भवतु ।।



१ C H न वक्तव्य भवतीति

२ A. reads इति श्रीमदुपाध्यायोपनामक शेखर सपूर्ण । सतीगर्भजनागोजी· भट्टेन शिवसूनुना । रचितो य सता प्रीत्यै भाष्यगूढार्थदर्शक ॥ गजद्व्यष्टैकशाके (१७२८) हि क्षयनामनि वत्सरे । माघ शुक्लप्रतिपदि तिथौ सावित्रवासरे ॥ श्रीमदभ्यकरोपाह्वकाशीनाथस्य सूनुना । व्यलेख्यय भास्करेण परिभाषेन्दुशेखर ॥ सुमङ्गल विजयतेतराम् ॥

D reads इति श्रीमदुपाध्यायोपनामक शेखर समाप्त ॥ श्रीभवानीशकराभ्या नम. ॥ शके १७३४ अङ्गिरानामसवत्सर माघशुद्धतृतीयादिन समाप्त ॥

E reads इति श्रीमदुपाध्यायोपनामकशिवभट्टसुतसती ( अग्रिम पृष्ठ विनष्टम् )

K reads इति श्रीमदुपाध्यायोपनामक सपूर्णः ॥ शके १७६१ 'विकारि' नामसवत्सरे उत्तरायणे ज्येष्ठकृष्णपक्षे प्रतिपत्तिथौ गुरुवासरे रात्रौ पुस्तक समाप्तम् । कवनाळ-करोपनाम्ना व्यङ्कटेशात्मजकृष्णेन लिखित स्वार्थं परार्थ च । श्रीलक्ष्मीनरसिंह प्रसन्नोस्तु ॥ शुभं भवतु ॥

G reads रसाम्बराम्बभूशाक कोध्यब्दे दक्षिणायन । हेमन्ते पौषशुक्लेन नवम्यामिन्दु-वासरे ॥ १ ॥ नारायणाचार्यपुत्रो विद्वसाध्युपनामक । वासुदेवो लिलेखाशु परिभाषेन्दु शेखरम् ॥ १ ॥

H reads इति श्रीमदुपा विरचित । सवत् १८९७ कामीति कार्तिक १५

# अथ परिभाषाणामकाराद्यनुक्रमेण सूची

व्याडिपुरुषोत्तमदेवसीरदेवनागेशकृतासु परिभाषावृत्तिषु निर्दिष्टा अनुक्रमाङ्काः

| | व्याडि. परि. सूचन | पुरुषोत्तम परि. वृत्ति | सीरदेव परि. वृत्ति | नागेश परि. शेखर |
|---|---|---|---|---|
| अकृतव्यूहाः पाणिनीयाः | ६५ | १०४ | ४१ | ५६ |
| अप्रवृत्ते पुनर्वृत्तावविधिः | ३४ | ७१ | ११ | ९२ |
| अनन्तरस्य विधिर्वा भवति... | १६ | १७ | | ६१ |
| अनन्त्यविकारेऽन्त्यसदेशस्य | ५२ | १०७ | ११२ | ९५ |
| अनिनस्मन्ग्रहणान्यर्थवता... | | ७७ | ६५ | १६ |
| अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे... | | | १२५ | ११३ |
| अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम्... | | | | ९३.४ |
| अनेकान्ता अनुबन्धाः | | | | ४ |
| अन्तरङ्गादप्यपवादो बलीयान् | | | | ५७ |
| अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते | | ६८ | ८५ | ५२ |
| अन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधते | | ५४ | ३४ | ५४ |
| अपवादो यद्यन्यत्र चरितार्थः... | | | | ६५ |
| अभेदका गुणाः | | ५७ | ८० | १०१ |
| अभ्यासविकारेषु बाध्यबाधकभावो नास्ति | २० | २० | १६ | ६६ |
| अर्थवद्ग्रहणे नानर्थकस्य | १ | १ | ९ | १४ |
| अर्धमात्रालाघवेन पुत्रोत्सवं... | | | | १२२ |

| | व्याडि परि. सूचन | पुरुषोत्तम परि. वृत्ति | सीरदेव परि.वृत्ति | नागेश परि.शेखर |
|---|---|---|---|---|
| अवयवप्रसिद्धेः समुदायप्रसिद्धिः... | | १०१ | १०४ | ९८ |
| असिद्धं बहिरङ्गमन्तरङ्गे | ३६, ७९ | ४१ | ६९ | ५० |
| आगमशास्त्रमनित्यम् | ७६ | ८४ | ९८ | ९३.२ |
| आतिदेशिकमनित्यम् | | | | ९३.६ |
| उणादयोऽव्युत्पन्नानि... | | ७० | १५ | २२ |
| उत्तरपदाधिकारे प्रत्ययग्रहणे... | | | | २५ |
| उपपदविभक्तेः कारकविभक्तिः... | | ४८ | १०३ | ९४ |
| उपसंजनिष्यमाणनिमित्तोऽप्यपवादः... | | | | ६४ |
| उभयगतिरिह भवति | ७ | | | ९ |
| उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् | | ६३ | | ७० |
| एकदेशविकृतमनन्यवत् | | १४ | ४० | ३७ |
| एकयोगनिर्दिष्टानां सह... | | | १४ | १७ |
| एकस्या आकृतेश्चरितः... | | | | ११८ |
| एकाग्ताः | | | | ५ |
| औपदेशिकप्रायोगिकयोरौपदेशिक... | ५ | ४ | ८१ | १२०.२ |
| कार्यकालं संज्ञापरिभाषम् | ५० | १०६ | ११७ | ३ |
| कार्यमनुभवन्हि कार्यी... | १९ | ९५ | २ | १० |
| कृद्ग्रहणे गतिकारकपूर्वस्यापि... | ९३ | ४६ | ६२ | २८ |
| क्त्वाप्रदृतुमुन्खलर्थेषु... | | ७६ | ३६ | ६८ |
| क्वचित्कृताकृतप्रसङ्गमात्रेणापि... | | | | ४६ |
| क्वचित्समुदायेऽपि... | २९ | ३० | ७९ | १०८ |
| क्वचित्स्वार्थिकाः प्रकृतितो... | | ५८ | ५८ | ८३ |
| क्वचिदपवादविषयेऽप्युत्सर्गः... | ८३ | ११५ | ३३ | ५८ |
| क्वचिदेकदेशोऽप्यनुवर्तते | २३ | २५ | ८ | १८ |
| क्वचिद्विकृतिः प्रकृतिं गृह्णाति | | | ४१ | १२०.१ |

इति परिभाषाणामकाराद्यनुक्रमेण सूची समाप्ता ॥